गतस्तथापि इराके स भारतीयानां सम्पर्केण पुनर्जन्मसिद्धान्तः अधिगतवान्। पुनर्जन्मसिद्धान्तश्च पाइथागोरसात् पूर्वं ग्रीकदेशे नासीत्। अतः इदमवश्यमेवान्यस्मात् देशात् तैर्गृहीतम्[1]।

भवतु नाम अपर्याप्तं भारतप्रभावस्य यूनानदेशीयं साक्ष्यं तथापीदं तु वक्तुं शक्यते यद् यूनानभारतनिवासिन आर्यजातीया आसन्। यथा तयो भाषयोस्साजात्यं तथैव विचारेष्वपि सादृश्यं वक्तुं शक्यते। मिश्रस्य पुनर्जन्मवादविचारः टिक्टोसजातेराक्रमणेन सार्धं (1500 ई. पू.) गत इति। तथ्यमिदं तु मिश्रस्य पुरातत्वविद्भिरपि समर्थितम्, उक्तं च 500 ख्रीष्टात्पूर्वं मिश्रस्य लेखेषु पूर्वजन्मनः सिद्धान्तस्य नासीत् कापि कथा। अतः मोहिजोदाड़ो-सभ्यतायां समागतानां पूर्वजन्मनो वृत्तान्तेन मिश्रीया प्रभाविता अभूवन्निति।

इत्थं यद्यपि साक्षात्प्रभावस्य चर्चा न प्राप्यते, ग्रीकविचारकैः सह भारतीयदार्शनिकानां तथापि तयोर्मध्ये साम्यमधिगम्यत एव। एतच्च विस्पष्टीकृतं श्रीबरुआमहाशयेन[2]—

A comparative study of Greek and Ancient Indian Philosophy, attempted in our work, has yielded cases of resemblance, more or less close. Those who are still in doubt as to world of Ideas furnishing many Interesting parallels to western thought.

इत्थं सामान्येन प्राच्यप्रतीच्यविचारालोडनपुरस्सरं ग्रीकस्य नैतिकविचाराणामाकलनं रिपब्लिकस्य माध्यमेन क्रियतेः किञ्च तत्पूर्वं रिपब्लिकस्य समयः, कर्तुः प्रयोजनं च पूर्वं स्थाप्यते—

भारते भगवतां बुद्धानां चिन्तनं चतुर्ण्णां दृश्य-जातानां माध्यमेन प्रादुरभवत् तथैव ग्रीसे प्लेटोमहाशयानां सकलं विचारजातं स्वस्य गुरोः सुकरातस्य अनपराधिनोः मृत्युदण्डं वीक्ष्य समुद्भूतम्। सुकरातस्य न्यायस्य कृते शिक्षायाः प्रसारः, आत्मनोर्भावमधिकृत्य कर्तव्यपालनार्थमुपदेशः एवासीत् तस्य दण्डादिकृत्यम्। सः साधु आसीत्। स्वोपदेशकाले संप्रवृत्तानामव्यवस्थानामपनोदाय अध्यात्मवादस्य नैतिकवादस्य च स्वरूपमाधृतवान् सः। नगरस्य सार्वजनिकस्थलेषु स्थित्वा सः यूनः उपदिष्टवान्। आत्मनो वचनं श्रोतुं तदनुसारं च स्वजीवनस्य संरचनां कर्तुं च सदैव परामृष्टवान्। किन्त्वेतेन उपदेशेन तत्कालिकाः न्यायविदःराज्यव्यवस्थायाम् अनावश्यकं परामर्शम् उपदेशञ्च विभाव्य तं कथितवन्तः। सः स्वोपदेशानां कृते क्षमायाचनापूर्वकं स्वयमेव स्वकृत्यानां दण्डं निर्धारयतु। सुंकरातस्तु एतदर्थं नैव समुत्सुको जातः। तस्मात् न्यायविदःतस्मै विषपानपूर्वकं जीवनं परित्यक्तुमुपदिष्टवन्तः। स च तेभ्यः सत्योपदेशान् प्राददत्सत्यस्य पन्थानमलञ्चकार[3]।

---

1. भारतस्य सांस्कृतिको दिग्विजय, पृ॰ 311।
2. बरुआ— प्री बुद्धिस्टिक इण्डियन फिलासाफी, पृ॰ 420।
3. But now the time has came to go away, I go to die and you to live, but which of us go to the better lot, is know to none, but god.
   Philosopher's Speak for themselves by–T.V. Smith, p.104.

निर्दोषस्य सुकरातस्य विषपानपुरस्सरं मरणं दृष्ट्वा प्लेटोमहाशयस्य तदानीन्तनराज्य-व्यवस्थायां न्यायव्यवस्थायाञ्चाविश्वास एवोदपद्यत, अतः खिन्नः सन् सः सार्वजनिकं जीवनं विहाय चिन्तनप्रधानं दार्शनिकं जीवनमाधृतवान्[1]। सुकरातस्य अनौचित्यपूर्णजीवनकथायाः परिशेषात् खिन्नो भूत्वा स स्वां व्यथामपहर्तुं एथेन्सनगरं परित्यज्य मेगारानगरमगमत्। तत्र स स्वमित्रेण स्थापितं मेगारिकसम्प्रदायं तदन्तर्वर्तीनि चिन्तनानि च परितो विभाव्य पार्मेनिडीजनामकस्य महादार्शनिकस्य दर्शनेन प्रभावितः। तस्मादपि स्थानात् पुनः स साइरीन्-मिश्र-इटली-सिसिलीप्रभृतिनगरं गत्वा तत्तत्स्थानेषु प्रवर्तमानानां चिन्तनानां स्वरूपमपि परिचिन्त्य सिसिलीनगरे स्थितस्य पाइथागोरियनमतानुयायिनां संख्यासिद्धान्तेन पुनर्जन्मसिद्धान्तेन च प्रभावितः। तत्रैव स डायोनियस्य अध्यापनार्थं तस्य संरक्षकेण डायोन (Dion) महाशयेन निमन्त्रितः, किन्तु निरंकुशस्य डायोनियस्य अध्यापनकाले स्वतन्त्रविचारकस्य प्लेटोमहोदयस्य व्यवहारेण कदाचित्सः खिन्नो जातः। ततः स कथमपि तस्मात् राज्ञोऽधिशासनात् स्वमधिमुच्य पुनः एस्थेन्सनगरम् आजगाम। आगत्य तत्र अकाडमीं संस्थाप्य तत्रैव शिष्टव्यवहारस्य स्थापनाय नगरं नगरं परिभ्रम्योपदेशं विनैव एकान्तप्रियः तेभ्य एव उपदेशं दत्तवान्, य अकादमीमध्येतुमाजग्मुः। तस्य अकादम्यां दर्शन-गणित-साहित्यादीनि अध्ययनविषयत्वेन निर्धारितानि। तत्रैव स्थितः पाठयन्नसौ संवादरूपेण अनेकान् संवादान् लिखितवान् तेषु रिपब्लिकः अतीव प्रसिद्धतमः।

ए.इ.टेलरमहाशयेन 'प्लेटो द मैन एण्ड हिज वर्क्स' नामके ग्रन्थे प्लेटोकृतग्रन्थानां षट्त्रिंशत्संख्या निर्धारिता। संख्येयं 'ऑफ फौरगुप्स' नामके संग्रहे वर्तते[2]। इयं च परिगणना ईसापूर्वं प्रथमशताब्दयामेव संजातेति। तथाप्यत्र केचन संदिहन्ति। टी.वी.स्मिथमहाशयेन तु चतुर्विंशतिग्रन्थैः सह त्रयोदशानां पत्राणां आख्यानं प्रदत्तम्[3]। प्राचीनकाले तु प्लेटोमहाशयानां उपर्युक्तासु कृतिषु कथञ्चिदेकस्याः द्वयोर्वा प्रामाणिकत्वे संदेह आसीत्। किन्त्वाधुनिके युगे तु विशेषतः ऊनविंशशतके प्लेटोकृतिषु तथाभूता संभावना संदेहभावना च प्रवृद्धा येन षट्त्रिंशत्संख्यासु, इदानीं मूलसंख्या नवमात्रावशिष्टा[4]। तथापीदानीं संदेहान्वितासु कृतिषु 'आल्सीवियाड्स आयोनमेवसेनस-हिप्पयसमेजर[5]-इपिनोमिक्स-एपिस्टेलिमिक्सनामकाः'

---

1. The leaders of restorded democracy did worse, for they actually put secrates to death on an absurd charge of impiety. This, Plato says, put on and to his own political aspiration. P. 4 Plato the man and his works—A. E. Taylor.
2. टेलर, ए॰इ॰ प्लैटो द मैन एण्ड हिज वर्क्स, पृ॰ 10।
3. एबाउट ए डाजन आफ दिस इन डीआलोग्व्स फार्म विमेन, प्लस सम थर्टीन लेटर्स, पृ॰ 113।
   टी॰वी॰ स्मिथ, फिलासर्फस स्पीड फार देम सेल्व्स।
4. टेलर ए॰ई॰ प्लैटो द मैन एण्ड हिज वर्क्स, पृ॰ 11।
5. Even in antiquity there were doubts about one or two dialogues. The *Alcibiades* was thought to be unauthentic by some, and the Neoplatomist proclus wished to rejecet the *Epinomis*.
   टेलर, ए॰ई॰, प्लेटो द मैन एण्ड हिज वर्क्स, पृ॰ 11।

मुख्यतमाः सन्ति। यासां विषये तदानीमप्यासीदाशङ्का। इत्थं विविधासु कृतिषु मध्ये प्रशस्यतरा रिपब्लिकाख्या कृतिरत्र परिचयपुरस्सरं प्रस्तूयते—

प्रजातन्त्रस्य (Republic) विषयः ज्ञानान्वेषणमस्ति। ज्ञानस्य किं स्वरूपमिति विषये वृद्धः सैफलुसः संकेतयति, ततः सुकरातपोलेमार्कुसौ च नैतिकतामधिकृत्य ज्ञानं विवेचयतः। आदर्शराज्यस्य कल्पनां विधाय तदधिगतये नैतिकता-पुरस्सरं उच्चतरराज्यं प्रति मानवान् व्यवस्थितवन्तः। अस्मिन्नुच्चतरराज्ये दार्शनिको राजा कलात्मिकां धार्मिकीं च शिक्षां व्यवस्थापयति। अत्र राज्ये सैनिकाः सम्मानस्य शासनं प्रतिष्ठापयन्ति। क्रूरशासनस्य चक्रं परिसमाप्य मानवः नव-युगस्य निर्माणं कुर्वन्ति। उत्तमादधमो जायते चक्रात्मके जगति, अतः विषयान्तरं कृत्वा प्रजातन्त्रे काव्यदर्शनयोः प्राचीनतमः कलहः निर्णयात्मकं स्वरूपमधिकुरुते। काव्यमनुकरणमात्रमेवास्ति। तत्र सत्यस्य पन्थाः दूरं प्रयाति। होमरोऽपि अनुकृतेरपराधी भवति। इत्थं नाटकीयकविभिः सह सोऽपि निर्वासितो जायते। ततः प्रजातन्त्रं परलोकस्य दिव्यं वर्णनं प्रस्तौति।

अत्र द्वादशसु काण्डेषु प्रथमद्वितीयकाण्डौ प्रजातन्त्रस्य प्रास्ताविकमिवासाते। तत्र न्यायस्य किं स्वरूपम्? प्रतिभासैरनावृतो न्यायः कथमधिगम्यते? इत्यादीनि तथ्यानि तत्र विवृतानि सन्ति। द्वितीयकाण्डस्य उत्तरार्धं तृतीयचतुर्थौ च काण्डौ राज्यस्य प्राथमिकशिक्षायाः निर्माणे च व्यस्तौ स्तः। पञ्चमषष्ठौ सप्तमं च काण्डं न्यायादधिकं दार्शनिकसमस्यानाम-न्वेषणे संलग्न अस्ति। अत्र किं श्रेयः? इत्यस्य मननं विधाय सामाजिकगुणानां स्थानं निर्णीयते। अष्टमनवमकाण्डौ तु राज्यस्य विकृतिमधिकृत्य क्रूरशासकस्य सिद्धान्तान् विश्लेषयतः। दशमे काण्डे तु दर्शनकाव्ययोः मध्ये सम्बन्धं विविच्य निर्णयं च कृत्वा इहलोकसुखस्य परलोकसुखेन वैशिष्ट्यं विभाव्य परलोकस्य कल्पनया ऐहिकं सुखं विभूषयति प्लेटो।

## ५-पाश्चात्त्यनीतिमीमांसायाः वैशिष्ट्यम्

प्राचीनग्रीकाः रोमनचिन्तकाश्च दार्शनिकमूल्यानामन्वेषणं बौद्धिकतायां सामाजिकतायामेव विविच्य कुर्वन्ति स्म। तज्ज्ञानं यद्धि मानवस्य मनसः इच्छायाः अभिसंस्काराणामुपेक्षां कुरुते, केवलं च यत् बौद्धं भवति, आत्मनो जन्मसिद्धपापावरणाद्वा मानवमनो मुक्तं भूत्वा केवलं बौद्धं कर्म कर्तुं विवेकानुरूपं यद्यपि नार्हति, तथापि जीवनस्य दुःखप्रवाहमुद्धर्तुम् इच्छति, तदतीत्य च शान्तिं प्राप्तुं चेष्टते। प्राकृतिकं सामाजिकं च जीवनं मृत्युदर्शने संदष्टमिवाभाति, तदतिक्रम्य लोकतितीर्षायां संलग्नः धर्मस्य आधारं गृह्णाति जनः। धर्मस्यायं पक्षः ग्रीकरोमनयोर्मध्ये राजकीयं कर्तव्यं सामाजिकमुत्सवं अन्धविश्वासमिव वा मन्यते। यद्यपि सुकरातसदृशाः महात्मानः आत्मनाममरत्वं प्रसाध्य स्वं जीवनं जीवन्मुक्तात्मानमिव धारयन्ति, तथापि तेषां शिष्याः पर्यावरणस्य नैतिकं सांस्कृतिकं विवेचनानुसारमेव जीवनं यापितवन्तः, दार्शनिकसिद्धान्तान्नैवानुकृतवन्तः, जीवनस्याध्यात्मिकं पक्षं नैवाधिकृतवन्तः। न च सुकरात इव प्रचलितधर्मस्य विरोधं कृत्वा जीवनं समर्पितवन्त इति। भगवत्ख्रिस्तशिष्येषु

पुनरियमध्यात्माधिगतये समर्पणभावना जागृता, यया ते त्रिशतीं यावत् रोमनसाम्राज्य-स्योत्पीडनमवज्ञां च प्रसह्य आध्यात्मिकतायां निष्ठां प्रकटीकृतवन्तः।

धर्मःस एव यत्र श्रद्धायाः स्थानं भवति। ख्रिस्तधर्मेऽपि जीवनस्य असारतां स्वीकृत्य अमरात्मनो जीवनं स्वीकृतं वर्तते। इयं भावना श्रद्धया आविर्भवति, यतो हि धार्मिको जनः स्थूलां तार्किकतां विहाय दरिद्रान् पीडितान् दासानुद्धर्तुमीश्वरानुकम्पां याचते। महात्मना अरस्तुनापि दासता प्राकृतिकीति संसाधिता, किन्तु ख्रिस्तानुयायिनस्तु सर्वेषामुद्धाराय सम्माननाय च मानवमात्रेषु समानतां मन्वते। ते बौद्धं ज्ञानं, पूर्वनिर्धारितां नैतिकतां च परित्यज्य ईश्वरप्रोक्तसंदेशे श्रद्धां विधाय लौकिकभोगान् परित्यज्य ईश्वरभक्तेः तदनुसारं प्रेमप्रकाशनं च सर्वेषामावश्यकं गुणं मन्वते।

मानवजीवनं सहजमेव सुखमभिलषति। कस्यामपि प्रवृत्तौ स तद्विषयकं सुखं वाञ्छति। दुःखाद्विनिर्मुक्तिः सुखाभिषङ्ग एव पुरुषार्थ उच्यते। पुरुषार्थस्य च प्राप्तिः ईश्वरानुग्रहेण भवति, धर्मेषु मानवस्वभावस्य पापाचारात्। ईश्वरानुग्रहस्य गुणाः भवन्ति श्रद्धासदाचार-दीक्षा-भक्तिप्रभृतयः।

अत्र परमार्थस्य द्वे स्वरूपे भवतः। सद्रूपोऽर्थः परमार्थः, इष्टार्थः पुरुषार्थश्च। परमार्थ एव ईश्वरः, पुरुषार्थस्तु सुखरूपः सुखं मानवप्रवृत्तेः स्वाभाविकमुद्देश्यम्, मानवे ईश्वरप्रदत्तो विवेकः इच्छया सदसतोर्विवेकं विधाय नैतिकं जीवनं चालयितुमर्हति। किन्त्विच्छास्वातन्त्र्येण सः कदाचित् विवेकं नानुसरति, यदि विवेकमनुसरति तदापि मानवः प्राकृतिकं सुखं यावदेव स्वविवेकेन पारं याति। अनन्तस्य परमात्मनो ज्ञानात्सः केवलात् विवेकात् वञ्चितो जायते। अतएव श्रद्धा भक्तिः च अपेक्ष्येते, ययोः विश्वसन् स दिव्यलोकस्य सुखं प्राप्नोति[1]।

अत्र पुरुषार्थस्य यो हि मानवीयो दिव्यो वा भावः प्रकटीकृतः, स यूनानस्य द्विप्रकारिकायाः धारायाः भेदात् जात इति। प्राचीनग्रीके तु मानवीयगुणानां मूल्यानां च विश्लेषणं मानवीयजीवनस्य सुखाभिवृद्धौ भवति। ते मानवगुणानामादर्शं परमसत्तायाः अनुरूपं स्वीकुर्वन्ति किन्त्वियं सत्ता न श्रद्धालभ्या अपि तु विवेकाश्रिता। मध्यकालिक-यूरोपीयविचारे तु भक्तिलभ्यज्ञानेन दिव्यस्य परमेश्वरस्य बोधात् परलोकेनानुगता। अतएव श्रद्धाभक्तिभ्यां लभ्या[2]।

यूरोपे पुनरुत्थानकालादनन्तरं मध्यकालिकानां ख्रिस्तीयविचाराणां पुनः ह्रासो जातः। तत्र प्राकृतिको मानवः स्वं प्राकृतिकं जीवनमेव मुख्यं स्वीकृत्य तदभिवृद्धये यतते। अद्य धार्मिकश्रद्धायां ह्रासः परलोके च अविश्वासः उदपद्यत। बुद्धेरिदानीं प्रत्यक्षाश्रितं ज्ञानस्य

---

1. मूल्यमीमांसा –गोविन्दचन्द्र पाण्डेय, पृ० 21-23।
2. मूल्यमीमांसा –गोविन्दचन्द्र पाण्डेय, पृ० 24।

विवेचनमेवास्ति प्रधानं कृत्यम्। अतः इदानीं धर्मदर्शनयोः स्थाने विज्ञानमिति, ईश्वरस्य च स्थाने मानव इति, पदं प्रयुङ्क्ते। सहजज्ञानस्य शास्त्रस्य च प्रामाणिकतायां संदेहे जाते गुणानां प्रयोगात्मकतायां सद्य एव विश्वास आविर्भूतः। अतएव मम शोधरीतिषु वर्णित-पाश्चात्यविचारक्रमस्य भारतीयविचारक्रमेण सह साधर्म्यं वैधर्म्यं विवेचनीयमास्ते।

प्राचीनकालिकपाश्चात्यानां गुणानुशीलनक्रमे एव नास्ति लौकिकसंरचनानुरूपा प्रवृत्तिः, अपि तु दर्शनेऽपि वर्तते सा। प्लेटोतः पूर्वं तु भौतिकानां वस्तूनां संसारस्य वा निर्माणस्य केन द्रव्येण संभावना इति उद्दिश्य विवेचनं प्रामुख्यं लेभे। प्लेटोमहोदयेनापि या प्रमुखदार्शनिकसमस्या उद्भाविता, सा अद्यापि प्रामुख्यं भजते। उक्तं च ह्वाइटहेडमहाशयेन— द होल ऑफ द वेस्टर्न फिलासफी कनसिस्ट्स इन ए सरीज ऑफ फुटनोट्स टू द फिलासफी ऑफ प्लेटो[1]।

इत्थं प्राचीनग्रीकगुणानां विचाराणां च अन्वेषणपुरस्सरं भारतीयविचाराणां मूल्यांकनं तदैव कर्तुं शक्यते, यदा प्लेटोप्रयुक्तविचारक्रमे ते विवेचिताःस्यु। भारतीयदर्शनमपि प्रायः धर्मदर्शनमेव मन्यते, तत्त्वदर्शनरूपेण तदुपेक्षते। अतःयाःसमस्याः प्लेटोमदोदयेन उत्थापिताः, विवेचिताः सम्यग्निरूपिताश्च तासां निरूपणमत्र दशोपनिषदामनुसारेण सुत्तनिपातानुसारेण करिष्यते।

## ६ - तुलनात्मकाध्ययने प्रयोजनानुशीलनम्

अत्र विषये धाराविरुद्धानां स्थानविपरीतानां संस्कृतीनां विश्लेषणे रतानां दशोपनिषदां सुत्तनिपातस्य रिपब्लिकस्य च तुलनात्मकाध्ययने किं प्रयोजनमिति उल्लेखनीयमस्ति। मन्ये अत्रैतेषां मूलग्रन्थानां विवरणेन किमपि नूतनं मानवहितकरं विवेचनं प्रस्तुतं स्यादिति धिया एव अहमत्र विश्लेषणे प्रवृत्तोऽस्मि। तुलनात्मकाध्ययनेन निम्नलिखितानि तत्त्वानि स्फुटीभवन्ति—

1. तुलनात्मकमध्ययनं विषयस्य स्फुटावबोधं जनयति। धाराविरुद्धाभिः विकसिततत्त्वा-नुशीलनपराभिः संस्कृतिभिः कथं शब्दानां चयनं क्रियते, कथञ्च परम्पराप्राप्तविचाराणा-मालोचनं क्रियते, तस्याम् अन्यस्याः संस्कृतेः प्रभावः तात्त्विको वाचिको नैतिको वा भवतीति सकलं विविच्यते। एतेन विवेचनेन दूरस्थोऽपि प्रभावः ज्ञातो भवति। तत्त्वाधिगमे परतत्त्वस्य सादृश्ये स्वात्मधारायाः तत्त्वानुरूपं परतत्त्वस्याधिगमं भवति, असादृश्ये तु वैपरीत्येनावबोधः तत्त्वानुशीलने लाभकर इति।

2. किञ्च एकस्यां धारायां विकसिताः विचाराः, गुणाः, तस्याः धारायाः यथा कल्याणं हानिं वा साधयन्ति तथान्यस्यां धारायां तेषामाकलनं विधीयते। कृते तु आकलने

---

1. The whole of the western philosophy consists in a series of footnotes to the philosophy of plato –Whitehead.

जनाः परदेशस्थात् विचारादपि प्रभाविताः जायन्ते यथा प्राचीने भारते सत्यपि विचारवैभिन्ये ब्राह्मणश्रमणयोः एकस्यापरेषु तत्र तत्र प्रभावः दरीदृश्यत एव।

3. विनैव देशकालस्यैक्ये विचाराणां विकासः कथं भवतीति धाराक्रमे दृश्यते। इत्थं विवेचने कदाचित् दूरस्थजनानां सम्बन्धाभावेऽपि विचाराः समाना अवलोक्यन्ते। एतेन सादृश्येन ज्ञायते यत् मानवबुद्धिः मानवस्याभ्युदयाय समानरूपेणैव विकसति। अन्यस्य सदृशीं स्थितिं विलोक्य कदाचित् अधिकतरापि विकसति। यथा ग्रीके अद्वैतवादिनः विचाराः उपलभ्यन्ते तथैव भारतेऽपि मिलन्ति। यथा पाइथागोरसस्य पुनर्जन्मवादः पवित्रसंघः, प्लेटोमहाशयस्य अकादमीप्रयोगः। सुकरातस्य न्यायस्य कृते तात्कालिकानां जनानां प्रतिरोधः दृश्यते तथैव भारतेऽपि अद्वैतवादः, पुनर्जन्मवादः, पवित्रसंघः ( श्रमणानाम् ), गुरुकुलवासशिक्षा, अन्यायस्य प्रतीकाराय सशस्त्रप्रतिरोधादयः सन्ति।

4. आध्यात्मिकजगति विकसितविचाराणां कदाचित् व्यावहारिकविश्लेषणेन नूतनो राज्यस्य पन्था उद्भवति, तद्यथा हीगेल-फूअरवाखयोः विचाराणां क्षेत्रे भिन्नेऽपि तैः प्रभावितः मार्क्समनीषी, तानिहलौकिके प्ररोपितवान्। यस्य प्रभावेण रूसदेशे चीनदेशे च सत्तापरिवर्तिता। इत्थं तुलनात्मकाध्ययनेन अध्यात्मप्रसारस्य लौकिकविषयावबोधे प्रयोगः लौकिकस्य च अध्यात्मविषयावबोधे प्रयोगः कर्तुं शक्यते।

5. यथाध्यात्मस्य भौतिकानुशीलने उपयोगः, तथैव हिंसकशस्त्राणां प्रतिरोधः अहिंसकेन शस्त्रेण कथं कर्तुं शक्यत इति महात्मगान्धिनो मार्गाधिगमनेन ज्ञायत एव। तुलनात्मकाध्ययनेन एवंविधा दिव्यदृष्टिः प्रसृता भवति या खलु मानवसमस्यानां समाधानं प्रददाति।

6. एकदेशस्य वैज्ञानिक्यः उपलब्धयः अन्यस्मिन् देशेऽपि समस्यानां समानमेव समाधानं कुर्वन्ति। अत एव विश्वमानवाः प्राकृतिकप्रकोपाणामुपशान्तये सदा सहैव यतन्ते। व्याधीनामपाकरणं विश्वस्वास्थ्यसंघटनेन तुलनात्मकमानवस्य स्थितिं निरीक्ष्यैव क्रियते। एतेनापि महत् मानवहितं जायते।

7. तुलनात्मकाध्ययनेन इदमपि ज्ञायते यत् कस्मिंश्चित् देशे यदि एका परम्परा प्रचलिता यथा लोकस्य कल्याणं करोति तर्हि तया अन्यदेशस्यापि कल्याणं भावयितुं कोऽपि सप्रयत्नो भवितुमर्हति। उपनिषदां सुत्तनिपातस्य रिपब्लिकस्य च अध्ययनेन कश्चिद्मार्गः तथा समुदेष्यति येन भारतस्य विशेषतः धर्मस्य गुणपरकविवेचनस्य पन्थाः निस्सरिष्यति। एतदर्थमपि एतेषां त्रयाणां ग्रन्थानामाकलनमनुसन्धानमावश्यकं प्रतिभाति।

इत्थं संक्षेपतः विविधविचारधाराणां विवेचनं विधाय तत्तद्देशस्थितपरम्पराप्रवर्तित-विचाराणाञ्च समीक्षणं करिष्यते येन मानवहितप्रवर्तकप्रकाशः प्रकाशमेष्यति।

२

# अथ द्वितीयोऽध्यायः

## नीतिमीमांसा जीवनदृष्टिः जीवनादर्शः

### नीतिमीमांसा का?

यथा भौतिकेषु पदार्थेषु साधुत्वासाधुत्वावधारणे आदर्शानुगम एव प्रयोजको न तु निमित्तान्तरम्, एवं मानवाचाराणां साधुत्वासाधुत्वावधारणेऽपि आदर्शस्यावगम एव व्यवहारव्यस्थापको हेतुः। यो हि जनः साधुगुणैः विभूषितः स साधुरुच्यते, यश्च असाधुगुणैः स असाधुः। यथा वदान्यत्वं परोकारश्च साधुगुणौ स्तः। किन्त्वेतदतिरिक्ताश्चापि गुणाः साधुगुणाः भवितुमर्हन्ति, येन हि सामाजिकानां जनानां हितं स्यात्। किन्तु एतदतिरिक्तः परमो जीवनादर्शः निःश्रेयसपदवाच्यो भवति। तच्च अवान्तरादर्शमुखेन मानवाचारं लोकव्यहारं च व्यवस्थापयति। तस्मादवान्तरादर्शानुसन्धानपुरस्सरं जीवनस्य परमनिःश्रेयसपदवाच्यादर्श-स्यानुसन्धानमेव नीतिशास्त्रस्य भवति प्रयोजनम्। परोपकारिता-अहिंसा-सत्यादिभिर्गुणैः लोकस्य व्यवहारः क्रियते, तस्मादेवायं धर्मपदेनापि उच्यते। यथोक्तम्— 'धारणाद्-धर्ममित्याहुः धर्मो धारयते प्रजाः' इति[1]। इत्थं मानवाचारस्य आदर्शानुसन्धायकं शास्त्रं नीतिशास्त्रमिति नीतिमीमांसायाः लक्षणम्[2]।

मानवाचारः खलु मनोगतसङ्कल्पनानां प्रकटीकरणमेव। तद्यथा—'सङ्कल्पो वाव मनसो भूतान्यदा वै संकल्पयते अथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि[3]। इत्थं लोके दृश्यते यन्मनसा ध्यायति, तद् वाचा वदति, यद् वाचा वदति तत्कर्मणा करोति इत्यादि श्रुतिवचनसाहचर्येण मनसः संकल्पस्य मूर्तरूपमेव आचार उच्यते। अभ्यस्तः संकल्पश्चरित्रम्, चरित्राभिव्यक्तिराचारश्चेति। लोकानुमोदित आचार एव रीतिः (Ethics) इति कथ्यते। रीतिवाचकस्य इथिक्स शब्दस्य यूनानीभाषायाः इथास्शब्दात् निष्पत्तिः, एवं इथिक्स इति पदस्य 'मारलफिलासफी' इति संज्ञास्त आङ्गलभाषायाम्। मारलशब्दश्च लैटिनमोरेसशब्दतः निष्पन्नः, इथिक्समारलशब्दौ सङ्कल्पितस्य मानवाचारस्य साधुत्वासाधुत्वव्यवस्थापकेऽर्थे प्रयुज्येते। तस्मादेव नीतिमीमांसायाः विवेचनं

---

1. महाभारत–कर्ण, 58।
2. पाश्चात्यं नीतिशास्त्रम्, पृ० 2, विश्वेश्वरसिद्धान्तशिरोमणि।
3. छान्दोग्य, 7/4।

कुर्वता मेकेञ्जी-महाशयेनोक्तम्— 'नीतिशास्त्रं मानवस्वभावस्य पृष्ठभूमाववस्थितानां सिद्धान्तानां विवेचनं तस्य साधुत्वासाधुत्वनिमित्तानां च विश्लेषणं करोति[1]।

तस्मात् नीतिमीमांसायां मानवाचारविषये सदसतोरवधारणं सूक्ष्मदृष्ट्या करोति मानवः। यत्राचारः खलु परम्परागतनियमानुधायकस्तत्रापि नीतिमीमांसा मानवेषु सोपपत्तिकां विवेकबुद्धिमुत्पादयति। इत्थं मानवाचारस्यादर्शानुसन्धानमेव नीतिमीमांसायाः प्रयोजनम्। आदर्शश्चायं मानवानां जीवनदृष्टिमभिलक्ष्यैव निर्धार्यते। यथा शीतप्रदेशे निवसतां जनानामाचाररीतिः भिन्ना, ग्रीष्मप्रदेशस्थानां चान्येति, किन्तु आदर्शस्तु मानवकल्याणपरः निःश्रेयसानुसन्धायको वा भवति। निःश्रेयसाधिगमनाय यानि साधनानि भवन्ति, तानि शुभपदेन स्थाप्यन्ते। निःश्रेयसं परमङ्गलमयं परमादर्शभूतञ्च, अत एव साध्यमिति कथ्यते।

प्राचीनकाले पूर्ववर्णितरूपेण नीतिमीमांसा नैव प्रसृता आसीत्। तदानीं तु नीतिमीमांसा धर्मानुसृता एवासीत्। प्लेटोमहाशयानां रिपब्लिकेऽपि इयमेवासीत् कथा। वस्तुतस्तु नीतिर्धर्ममूलिका धर्मो वा नीतिमूलको भवति। धर्म एव नीतेरादर्शः नीतिश्च धर्मस्यादर्शः, इत्थमुभावपि अन्योन्याश्रितौ अभिन्नाविव प्रतीयेते। लोके तु धर्मस्य ज्ञानकर्मात्मकत्वं प्रसिद्धम्, वेदानामपि ज्ञानकाण्डकर्मकाण्डात्मकमंशद्वयम्। तत्र ज्ञानकाण्डात्मको भागोऽध्यात्मविद्या (Metaphysics) रूपः, कर्मकाण्डात्मकश्च भागोः विशेषतः कर्मनिरूपणपरः साक्षाल्लोक-सम्बद्धः। तत्र च द्विविधं कर्म दृश्यते, किञ्चिदीश्वरसम्बद्धम्, ईश्वरं प्रति वा विधेयं भवति, किञ्चिच्च मानवव्यष्टिसमष्टिसम्बद्धं तदुद्दिश्य विधेयञ्च। तत्रेश्वरं प्रति कृतं कर्म धर्मपदमधिगच्छति, मनुष्यं प्रति वा कृतं कर्म नीतिपदेन वाच्यम्। परमार्थतस्तूभयविधमपि कर्मजातं धर्माङ्गभूतमेवेति। तस्मान् न नीतिशास्त्रं धर्मशास्त्रात् व्यतिरिक्तम्। तथापीहहलौकिकी नीतिः, पारलौकिकश्च धर्मः भिन्नावुभाविति विभाव्य तयोर्मध्ये भेदः क्रियते।

भारते तु एतयोर्मध्ये नास्ति भेदः, एवं प्राचीनग्रीकेऽपि प्लेटोमहाशयं यावत् अनयोर्नैवासीत् भेदः, तस्मादेव मया शोधरीतौ प्रोक्तम्— 'यथा प्लेटोमहोदयेन चरित्रमीमांसा-नीतिमीमांसे समग्रदर्शनात न पृथक्कृते। इदं पृथक्करणमनावश्यकं हानिकरञ्च प्रतिपादितमास्ते। अरस्तुमहोदयेन चरित्रमीमांसा दर्शनात् पृथक्कृता किन्तु तस्मात् कारणात् चरित्रस्याखण्डत्वं पाश्चात्यनीतिमीमांसायां विलुप्तं जातम्। अत एव विषयेऽस्मिन् प्लेटो अरस्तुतिलो वा मान्य इति यदि विचारः क्रियते तर्हि अद्यापि प्लेटोसरणिरेव गरीयसीति प्रतिभाति[2]।

---

1. नीतिशास्त्र–मेकेन्जी 1929, पृ॰ 1।
2. शोधरीतिः–दशोपनिषदां सूत्तनिपातस्य पाश्चात्यनीतिशास्त्राणां च ( रिपब्लिकस्य ) नीतिगतं समीक्षात्मकं तुलनात्मकं अध्ययनम्।

## जीवनादर्शः जीवनदृष्टिश्च

इह विश्लेषणक्रमे यानि मूलस्रोतांसि मया स्वीकृतानि तानि भिन्नभिन्नाचारमूलकानि सन्ति। अतः तेषां जीवनादर्शदृष्ट्योश्च मध्ये महदन्तरं प्राप्यते। भिन्नधारासु युक्तापि तेषां आचाररीतिः स्थानभेदाद् भिन्ना वर्तते। अत एतेषां परम्परागतविभेदाख्यानं विना आदर्शस्य निर्धारणं नैव कर्तुं शक्यते। तस्मादेव तेषां धारास्थानयोः वैशिष्ट्यं वक्तव्यम्।

पूर्वं तु प्रस्तावक्रमे श्रमणब्राह्मणधारयोर्मध्ये उपनिषदां सुत्तनिपातस्य स्थानक्रम-निर्धारणावसरे उक्तम्— श्रमणधारा खलु निवृत्तिमूलिका, ब्राह्मणधारा तु प्रवृत्तिमूलिकेति। सनातनपदव्यपदिष्टा ब्राह्मणधारा यदा कलुषितगुणैः कलुषिता अभवत्तदैव तस्या अवगुणानां दूरीकरणाय श्रमणानां जनिरभवदिति केषाञ्चन आशयः[1]। ब्राह्मणधारा तु समग्रां मानवप्रकृतिं तज्जनितां प्रवृत्तिञ्चोद्दिश्य प्रादुर्भूता, अतः कालक्रमे स्वशक्तेः स्थापनायै यतमानस्य मानवस्य दुष्प्रवृतेः स्वभाववशात् तस्यां कलुषितगुणा अपि उत्पन्ना, अत एव सनातनधारायामुत्पन्नानाम् असद्विचाराणामपनोदाय उपनिषदामाविर्भावः। ताश्चाधारीकृत्य वैदिकाः बहवः चिन्तकाः सनातनधारायाः विरोधिनः अभूवन्। तेभ्यो भिन्नाश्च ये चिन्तका बभूवुः ते श्रमणधारानुयायिन इति कथ्यन्ते[2]। एतयोर्मध्ये आसीत् आदर्शभेदः। श्रमणाः अवैदिकाः ब्राह्मणाश्च वैदिकाः आसन्। श्रमणा वेदप्रामाण्यं नैव स्वीकृतवन्तः, यज्ञहोमादिक्रियां न चैव पुण्यसाधिकाममन्यन्त। तपस्सु तेषामधिकं बलम्, प्रायशस्ते विरोधिनो बभूवुः, ये च खलु आस्तिकाः श्रमणाः तेऽपि ईश्वरस्यास्तित्वे न विश्वसन्ति स्म। एते श्रमणाः मुण्डिनः, गणिनः, अनागारिकाश्चासन, तस्मादेवाचरणविरोधादेतयोर्मध्ये स्वाभाविको विरोधः[3]। ब्राह्मणधर्मे कर्मकाण्डस्य प्राधान्यमासीत्। स्वर्गकामास्ते यजन्ते स्म। मन्त्रजप-होम-मङ्गलप्रायश्चित्तादिष्वधिकं विश्वसन्ति स्म। यज्ञेषु पशुबलिमपि कुर्वन्ति स्म, किन्तु 'वैदिकी हिंसा हिंसा न' भवतीति आसीत् तेषामुद्घोषः। ते स्वात्मवैशिष्ट्यं प्रस्थापयितुं चातुर्वर्ण्यव्यवस्थां प्रस्थाप्य चतुर्भिराश्रमैःजीवनं यापयन्ति स्म। यद्यापि ब्राह्मणाःविद्यावन्तः अनुष्ठानयुक्ता आस्तिकाः परलोकवादिनः आसन्, तथापि आत्मानमेव समाजे सर्वोत्तमम् अमन्यन्त। एतेन तेषां संकीर्णप्रवृतीनां हीनाध्याशयानां स्वार्थवादप्रवृत्तीनां च बोधो जायते। यदा एते ज्ञानिनः आसन्, तदा समाजे एतेषामादरोऽपि बभूव। किन्त्वपकर्मवशात् हिंसातो वा एते निन्दिताः बभुवुस्तत एव एषां विरोधे उपनिषदां प्रादुर्भावः समजनि। उपनिषदः यज्ञस्य अयाथार्थ्यं विभाव्य[4] ज्ञानस्य तपसश्च प्रतिष्ठां स्थापितवन्तः। ब्राह्मणेषु तपस्विनोऽप्यभवन्।

---

1. भारतीयसंस्कृति और अहिंसा–अवलोकन, पृ॰ 24, पं॰ सुखलाल जी ले॰ धर्म्मानन्दकौसाम्बी।
2. बौद्धधर्मदर्शन–प्रथम अध्याय–भारतीयसंस्कृति की दो धारायें, पृ॰ 1, आचार्यनरेन्द्रदेव।
3. बौद्धधर्मदर्शन, पृ॰ 1, आचार्यनरेन्द्रदेव।
4. प्लवा ह्येते अदृढाःयज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढ़ा जरामृत्युं ते पुनरेवापियन्ति। मु॰ 1,2,7।

तेषां संसर्गादेव वैखानसवृत्तिः श्रमणेषु विशेषतश्च बौद्धेषु समुद्भूता इति केचन आमनन्ति[1]। इत्थमेतयोःपरम्परयोर्मध्ये व्यवहारभेदः— आचारभेदः स्वाभाविक एव, किन्तु आदर्शस्तु एकदेशोत्पन्नयोस्तयोः समान एवासीत्। व्यवहाराचारयोर्भेदेन दृष्टिभेदोऽपि जायते। अतः भिन्नभिन्नदृष्टेः कः प्रभावः समाजेषु भवति, तदपि विश्लेषणीयमास्ते।

एतस्याः संस्कृतेर्विरोधस्तु यूनानसंस्कृतितोऽस्ति। अतः तेषामाचारा विचाराः सर्वतो भिन्नास्तस्मादस्ति एतस्या जीवनादर्शजीवनदृष्ट्योर्मध्ये भेदः। यूनानदेशीया संस्कृतिरिहलोक-मूलिका, अत एव तस्या आदर्शो विचाराश्चेहलोकमूलका एव। ग्रीकदर्शने प्रारम्भत एव लोकायत्तानां विचाराणां प्रादुर्भावो दृश्यते। किन्तु ग्रीकविचारकेषु बहवः ईदृशाः समुद्भूताः, ये खलु सुखवादस्य विरोधिनो भूत्वा आदर्शसमाजानुरूपाचरणस्य स्वरूपं निर्धारितवन्तः। 'प्लेटो' अपि तेष्वन्यतम आसीत्। प्लेटोमहाशयानां गुरुः महान् सुकरातो यूनानस्य परमर्षिरासीत्। स खलु सोफिस्टैः प्रचारितां दुष्टाचरणवृत्तिं न्यक्कृत्य बुद्ध्यपेक्षाचरणवृत्तिं स्थापयितुमयतत। सोफिस्टैस्तु मानवगुणानां मानवज्ञानसापेक्षत्वं निर्धार्य वस्तूनां च मानवसापेक्षत्वं विभाव्य चाञ्चल्येन लौल्येन च स्वेच्छाधीनं सकलं विश्लेषणं कृतम्। एतेन तात्कालिकसमाजे महती अव्यवस्था समजनि। जनाश्च सोफिस्टेभ्यो विरक्ता अपि शिक्षामादातुं स्वकीयान् बालकान् तेभ्य एव प्राददुः। सोफिस्टाश्च धनानि संगृह्य तर्कबलैर्यथाचिकीर्षिताः शिक्षितवन्तस्तान्। एतेषां सोफिस्टानां नेता आसीत् प्रोटेगोरसः। यः खलु सर्ववस्तूनां ज्ञात्रधीनत्वं स्वीचकार। एतेषां विवरणं दत्तवता भंडारकरमहाशयेनाभिहितम्[2]—

**पञ्चमे शतके ख्रिस्तात्पूर्वं ग्रीसे नवं मतम्।**
**सोफिस्टानां प्रचलितं यत्पूर्वालोचनात्मकम्॥**
**सोफिस्टा ज्ञानिनम्मन्या ज्ञानविक्रयकारिणः।**
**नीतिरीतिवितर्केषु ये शिक्षादानतत्पराः॥**
**प्रोट्यागोरस इत्यासीत्तेषां नेता य उक्तवान्।**
**सदाचारोऽपि शिक्ष्येत तर्कव्याकरणादिवत्॥**
**सर्वेषां न सदाचारः क्वचित्साधारणो भवेत्।**
**कालवृद्धभुजिष्याणां दीनानां धनिनां तथा॥**
**तस्यासन्बहवः शिष्याः सन्दिग्धा ईश्वरस्थितौ।**
**अतस्ते नास्तिकप्रायाः केवलं स्वार्थवादिनः॥**

---

1. बौद्धधर्मदर्शनम्, पृ० 2।
2. पाश्चात्यदर्शनम्, पृ० 10, त्र्य०आ० भण्डारकर।

**तन्मते न तु सर्वेषां त्रिकालाबाधितं ध्रुवम् ।**
**अनुकूलं यदेकस्य प्रतिकूलं परस्य तत् ॥**
**प्रामाण्यं सर्ववस्तूनां ज्ञात्रधीनं न शाश्वतम् ।**
**सदसन्निर्णये कोऽपि बाह्यो नाधिकृतः कृतः ॥**

सुकरातस्तु स्थिरप्रज्ञो बुद्धिमान् सोफिस्टानां मतानि खण्डितवान्। न्यायस्य च प्रस्थापना कृतवता तेन यूथीडीमसः संबोधितः। समाजे अस्तेयवचनं स्तैन्यं दासीकरणं प्रतारणं लोकानामन्याय्यमिति कथ्यते, किन्तु देशद्रोहिणं वैरिणं यदि कश्चित् सेनानीर्जित्वा तं प्रताडयति तर्हि स न्याय्यमाचरति। रणेऽसत्यवचनमुक्त्वा यदि सेनापतिर्गतोत्साहान् सैनिकान् रणोन्मुखीकरोति तदा तस्य वचनं न्याय्यं मन्यते। आत्मघाताय प्रवृत्तस्य कस्यचिन्मित्रस्य केनचिन्मित्रेण शस्त्रमपहृतं भवेत्तदा तत्कृत्यं न्याय्यमिति कथ्यते। तर्हि न्याय्यान्याय्ययोः नास्ति कश्चिद्भेद इति। किन्तु सुकरातेन भणितम्-कदाचिल्लौकिके व्यवहारे किमपि सत्यमसत्यमपि भवति, किन्तु कालत्रयेऽपि यत्सत्यमास्ते तदेव दिव्यं सत्यमिति चोच्यते। सुकरातस्य मते ज्ञानं तदेव यत् सर्वदोषानपहरेत्। विचारः स एव, यः बुद्धिपूर्वकः तर्कशुद्धश्च भवति। किञ्च आचारनियमाश्च त एव ये अनुल्लंघनीया विचिकित्सारहिताश्च भवन्ति। अत एवोक्तम्—

**ज्ञानमुच्चतमं सत्यं सदाचारप्रवर्त्तकम् ।**
**तर्कैर्न केवलं प्राप्यं न चेद्विद्धि विनिश्चितम् ॥**
**न भवेद्राजनीतिज्ञो राज्यज्ञानं विना यथा ।**
**तथाचारज्ञानवर्जं सदाचारः कथं भवेत्[1] ॥**

इत्थं सुकरातात् ज्ञानमिदं प्राप्य प्लेटो सुकरातस्य दुःखप्रदायकमन्तं च विलोक्य जनमनस्सु चेतनां स्थापयितुमकादमीं संस्थाप्य सुकरातस्य ज्ञानं वितरितवान्। तस्मिन् शिक्षणालये सुखवादिप्रवृत्तीनामपनयनाय नैकधा ज्ञानेन सदाचरेण च प्रयासः विहितः, तस्यैव प्रतिबिम्बो रिपब्लिके प्रतिभाति। वस्तुतस्तु अलिखितसुकरातवचसां लेखनद्वारा प्लेटोमहाशयः जगतः महान्तमुपकारं कृतवान्।

इत्थं दृश्यते नीतिमीमांसायां पाश्चात्या इहलौकिकीमभिवृत्तिं प्रधानं मन्वते। भारतीयास्तु आध्यात्मिकीं पारलौकिकीञ्चानुभूतिं महत्त्वपूर्णां कथयन्ति, अतोऽनयोरादर्शदृष्ट्योश्च मध्ये भवति महान् भेदः।

वैदिक ऋषय ऐहिकान् पदार्थान् याचन्तोऽपि पारमार्थिकं पदं प्राप्तुं सततं यतन्ते। एतत्पदं च ऋताख्यं मन्यन्ते, तच्च धीगम्यं वरेण्यमित्युक्तम्। यथा—

1. पाश्चात्यदर्शनम्, पृ॰ 13, भाण्डारकर।

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्[1]।

अत्र धीःशब्दार्थे ज्ञानं संकल्पश्च समन्वितौ वर्तेते। इत्थं बुद्ध्या प्रकाशदर्शनं सत्संकल्पस्यापि द्योतकं भवति। इदं खलु आङ्गलभाषाया उचितं कर्मकाण्डयुक्तं (Right and Rite) कार्यमिति भावद्वयं बिभर्ति। कालान्तरे कर्मकाण्डस्य माहात्म्यं विस्तृतम्। पुनः कर्मणः नियामकः नान्तरिकः, अपितु बाह्य आनुष्ठानिकश्च जातः। कर्मकाण्डविरोधेऽध्यात्मवादः श्रेयसः प्रेयसो वा विवेचनमकरोत्। श्रेय आत्मावस्थितो बोधः, प्रेयश्च इन्द्रियैः सह सुखभोगः। श्रेयःसाधनं खलु मृत्युलोकमतिक्रामति, प्रेयःसाधनं तु भोगमास्वाद्य मृत्युमुखे निक्षिपति। अतएव उपनिषदो भौतिकात् जीवनात् परं शाश्वताय आनन्दाय सत्याप्तये वा यतन्ते। जीवनदृष्टिं प्रतन्वते, आत्मब्रह्मणोरैक्यं स्थापयन्ति। सर्वं वस्तु आत्मनानुप्राणितं वर्तते, विश्वमिदं आनन्दात्मकं[2] न तु दुःखप्रपञ्चमात्रम्। विश्वमिदं वरणीयं वरिष्ठम्[3]। इत्थमुपनिषत्सु आनन्दस्यैव मीमांसा वर्तते न तु दुःखस्य।

उपनिषदामात्मवादो वैदिकधाराया एव विकासः[4]। अयं विकासस्तथैव जिज्ञासया सम्भूतो यथा थेल्सस्य जिज्ञासा मूलतत्त्वविषयिका उद्भूता। उपनिषत्सु वर्णितस्य श्रेयसोऽधिगतये क्षमा-दान-तपः-प्रभृतयो वर्णिताः। श्रद्धा-सत्यादिकं नितरामपेक्षते। केवलया प्रज्ञया मेधया वा न श्रेयसोऽवाप्तिः[5]। उपनिषत्सु ज्ञानस्य नैतिकतायाश्च गुणानां उल्लेखः प्राप्यते। तयोर्मध्ये भेदश्च उपस्थापितः।

परमं सत् ज्ञानेन ज्ञेयमस्ति, तथैव प्लेटोदर्शनेऽपि ज्ञानापेक्षया सद्रूपस्यैव प्राधान्यमस्ति। उपनिषत्सु च परमं ज्ञानं आत्मज्ञानमस्ति। अस्य ज्ञाने सति सर्वे विषया तस्मिन्नेव विलीना भवन्ति[6]। यूनानीदर्शने तु ज्ञानगतश्रेष्ठता सत्येन सत्तया वा समर्प्यते। इत्थमस्त्युभयो-र्धारयोर्मध्ये भेदः, संस्कृतिभेदत्वात्।

पश्चाद्वर्तिनो भारतीया गणिनः परिब्राजकाश्च संसारस्य दुःखरूपतां स्वीकृत्य कर्मणाञ्च बन्धकतामालोक्य अपवर्गमोक्षं वा लक्ष्यं निर्धारितवन्तः। तद्विरोधिनस्तु भोगस्यैव प्राधान्यममन्यन्त। बुद्धमहावीरादयो निवृत्तिमार्गिणः बभूवुः, अजितकेशकम्बली लोकायतिकाश्च नास्तिकाः प्रवृत्तिवादिनः। ततः परं भगवद्गीताया अनुयायिनः समन्वयवादिनो भवन्ति। अयञ्च विचारो वैदिकानां समाजरक्षायै आवश्यकः प्रतिभाति। अत्र ऋतं क्रियामभिव्यनक्ति,

---

1. ऋग्वेद–3।62।10।
2. तैतिरीय 2,7।
3. मुण्ड 2,5,11।
4. मूल्यमीमांसा, पृ॰ 5, गोविन्दचन्द्रपाण्डेय।
5. कठ–1।2।23।
6. कठ–1।3।13।

धर्मश्च स्थितिं नियमयति। अत्र प्लेटोमहाशयप्रयुक्तः 'दिके (धर्म)शब्दः समाजव्यक्त्योः संघटनं सूचयति।

'धर्मार्थाविरोघेन कामं सेवेत[1]' इति वात्स्यायनवाक्यं भारतीयपुरुषार्थचतुष्टयस्य समन्वयं करोति। कामः, अर्थश्च गृहस्थाश्रमानुरूपौ। गृहस्थाश्रमी धर्ममाधृत्य जीवनस्य मोक्षं लक्ष्यं प्राप्तुं यतते। मोक्षेऽस्मिन् ज्ञानस्यैव प्राधान्यमिति विचारो निवृत्तिप्रधानविचारधारायाः प्राबल्यवशादेव अतिकालं यावत् व्याप्तोऽभवत्। मध्यकाले यथा अध्यात्मवादस्य यूरोपे आसीत् प्रभावः, तथैव भारते भक्तेः प्राबल्यात् शुष्को मोक्षो भक्तिमयजीवनात् विरसिक इव जातः। भक्तेः सकाशात् भावस्य विकासः सेवाभावनया प्रेमभावनया लालित्यभावनया च जातः। एषा च भावना आधुनिकयुगे गीताया निष्कामकर्मयोगत्वेन' तिलकैः' प्रतिपादिता, निस्वार्थसेवायाश्च भावः भारते प्रतिष्ठापितः। तस्मादेव जनाः देशभक्तिभावनया सेवाभावनया च स्वातन्त्र्यसंग्रामे स्वीयाहुतये अवातरन्।

बुद्धादनन्तरं भारतीयचिन्तनधाराया द्वितीयकालः समागतः, पुनश्च बौद्धधर्मस्य पतनानन्तरमपगतः। अयं हि निवृत्तिप्रधानस्य युगस्य स्वरूपात्मकस्य अभावमोक्षस्योत्पादक इति जना ब्रुवन्ति। एतेन सह प्रवृत्तिप्रधानधाराया अपि सन्तानः प्रचलितः, यस्यां पुरुषार्थ एव परमं प्रयोजनम्, किन्तु प्रवृत्तिवादिनि हि अस्मिन् पथि जनाः संयमपूर्वकं स्वजीवनं यापितवन्तः। वासनाक्षयं प्राप्य बुद्धशङ्करयोः मार्गमासृत्य गमनशीला जना अस्मिन् युगे समन्वयं स्थापितवन्तः।

भक्तिकालो भारतीयचिन्तनधारायाः तृतीयः कालः सम्पद्यते, यस्मिन् हि भक्तिरेव रसानुभूतेः सार इति आख्यायते। सा च भक्तिर्मूल्यवती अभूत्। रसानुभूतिः आलम्बनमाश्रित्य तं परमात्मानमिव प्रत्युपस्थापयति। अस्यामाध्यात्मिकं नैतिकं च मूल्यमेव सम्मिल्य समन्वितं भवति।

किन्त्वितः पञ्चविंशतिवर्षेभ्यः प्रवृत्तात् पाश्चात्यसंस्कृतेः प्रभावात् एका चिन्तनधारा तथा निसृता वर्तते, या हि भारतीयपरम्पराया विरोधे एव सदा चिन्तयति। मुक्तप्रयासवन्तस्ते उन्मुक्ता इति नादरं कुर्वन्ति परम्परायाः। इत्थमत्र संक्षेपतो द्वयोः परम्परयोः स्वरूपमुन्मीलितम्। अत्र प्रत्येकं मूलग्रन्थानां माध्यमेन नीतिमीमांसाया जीवनादर्शजीवनदृष्ट्योश्च स्वरूपमिह प्रस्तूयते।

## १—दशोपनिषदां नीतिमीमांसा

उपनिषदो यथा भारतीयज्ञानस्य आधारभूता ग्रन्थास्तथैव आचारस्यापि। आचार-व्यवहारो वेदमूलक इति परम्परावादिन आमनन्ति। वेदे ये आचारा व्यवहाराश्च प्रतिपादितास्ते

---

1. अर्थशास्त्र 1-7-6।

विधिनिषेधमूलकाः भवन्ति। उपनिषत्सु तेषामाचाराणां बौद्धिकी व्याख्या क्रियते। पुनश्च उपनिषत्सु प्रायः सर्वे आधुनिकाः नीतिमापकसिद्धान्ताः मिलन्ति, अत एतासां महत्त्वं वर्तमानसन्दर्भे अत्यधिकं भवति।

म्यूरहेडमहोदयो नैतिकचेतनाया विकासस्य सोपानत्रयं निर्दिशति। बाह्यनियमास्तत्र भवन्ति प्रथमे सोपाने। समुदायनियमाः, जातिनियमाः परम्परागतनियमाश्च भवन्ति बाह्याः। इयं हि खलु मानवाचारस्य आद्यकालिका प्रवृत्तिः, विकासक्रमे तु बाह्यनियमानां स्थाने आन्तरिकप्रेरणाया अपि महत्त्वं भवति। सोपानद्वयमिदं वैधानिकनीतिमीमांसाया अङ्गभूतम्। तृतीयं सोपानं तु हेतुवादिनीतिशास्त्रस्य (Teleological Ethics) अङ्गं भवति। हेतुवादिनीतिमीमांसाशास्त्रे उद्देश्यस्य भवति प्राधान्यम्, नियमस्तु तत्र साधनमात्रमेव। हेतुवादिनीतिमीमांसायां सुखवाद-बुद्धिपरतावाद-आत्मपूर्णतावादादिभेदेन अनेके भेदा नैतिकताप्रमापका भवन्ति, विप्रतिपत्तयश्च संदृश्यन्तेऽत्र[1]।

भारतीयनीतिशास्त्राणामपि नैतिकतायाः प्रमापकान् सिद्धान्तान् पाश्चात्त्यानुकृतौ निम्नलिखितरूपेण प्रस्थापयति[2]—बाह्यनियमेषु ईश्वरीयनियमाः, परम्परागतनियमाः, सामाजिकोपयोगितानियमाश्च गण्यन्ते, आन्तरिकाश्च भवन्त्यत्र काश्चन प्रमापकाः प्रवृत्तयः। साध्यमुद्देश्यं वाभिलक्ष्य केचन प्रमापकाः सिद्धान्ताः प्रस्थाप्यन्ते। तेषु भौतिकसुखवादः, अध्यात्मवादश्च प्राधान्यं भजतः। इत्थमेतेषां नीतिप्रमापकसिद्धान्तानां विश्लेषणेन सह उपनिषदां नीतिमीमांसा परीक्ष्यते।

### नीतिनियमाः विधानमूलकाः

### (क) बाह्याः प्रमापकाः

सत्यमेतद् यत् उपनिषदां संरचनाकाले उपर्युक्ताः सिद्धान्ताः नीतिमीमांसायाः स्वीकृताः सिद्धान्ताः नासन्, तथापि तादृशाःविचाराः तदानीमप्यभवन्निति नास्त्यत्र संशीतिलेशः। बाह्याः नियमाः जनानां आचारं नियन्त्रयन्ति, उपनिषत्सु एवंभूताः आचारधर्मा विवृताः सन्ति, येषामनुपालनेन समाजे सुव्यवस्था भवति। तैत्तिरीयोपनिषदि उक्तम्— 'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि। ये के चास्मच्छ्रेयांसो ब्राह्मणा— संमर्शिनः युक्ताः आयुक्ताः अलूक्षा धर्मकामाः स्युः यथा ते तेषु, वर्तेरन् तथा तेषु वर्तेथाः[3]। शिष्याय शिष्टाचारप्रसङ्गे दत्ता उपदेशा इमे तात्कालिकीमाचारनियामिकीं पद्धतिमभिव्यञ्जयन्ति। यतो हि शिष्टाचार एव अनुकरणीयो भवति, स च सुचरितात्मकः साधुजनव्यहृतो ब्राह्मणनियमितश्च भवितुमर्हति। एते शिष्टाः कतिचन भवन्ति, अतस्तेषां व्यवहारनीतिः अल्पजनव्यवहारनीतिरस्ति, तथापि प्रशस्तेयमिति उपर्युक्तोदाहरणेन ज्ञायते। एषा च व्यवहारनीतिः नियामिका भवति सामान्यजनानाम्।

---

1. पाश्चात्यनीतिशास्त्रम्, पृ॰ 27, आचार्य विश्वेश्वरः।
2. भारतीय नीतिशास्त्र, पृ॰ 123, दिवाकर पाठक।
3. तैत्तिरीयो॰ 1।11।

यथा आचार्यगृहे वसन् छात्रः आचार्यस्य अनुज्ञां नीतिं व्यवहारसरणीं च पालयति, तथैव ईश्वरस्य महत्त्वमादधानस्य समाजस्य कार्यजातं तमधिकृत्यैव जायते। ईशावास्योपनिषदि मानवाचरणस्य पाठं पाठयन् ऋषिः ब्रूते—

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्[1] ।।**

अर्थात् जगतः सर्वेऽपि पदार्थाः महान्तोऽल्पाः चेतनाऽचेतनाश्च सन्तीश्वरेण व्याप्ताः। अतः सर्वेषु समानरूपेण प्रविभज्य अत्तव्यम्, अनुचितसङ्ग्रहश्च न कर्त्तव्य इति। अत्रेदं विचारणीयं प्रतिभाति यत् 'भुञ्जीथाः' इत्युक्त्वा उपनिषदः ऋषिरादिशति, तेन त्यक्तेन भुञ्जीथाः, अर्थात् तस्मै प्रदाय तस्माद्वाऽवशिष्टं भक्षयत। अत्र प्रश्नोदेति, कस्तावत्सः? उत्तरं प्रददसौ ऋषिः ब्रूते— तदेव यत्सर्वेषु व्याप्तम्। 'ईशावास्यमिदं सर्वम्' यत्किञ्च, अर्थात् ईषदपि वस्तु तादृङ्नास्ति यत्र तस्य सत्ता न भवेत्। युष्माकं वाऽस्माकं वा कुत्रापि सत्ता नास्ति, न वास्ति कोऽप्यधिकारः, केवलं वयं कर्मकर्तारः, न च वयं अर्धांशस्य चतुर्थांस्य वा फलभाजः स्मः, परं निर्वाहमात्राधिकारिणः। जनास्तु इत्थं जानन्ति यत् नायमीश्वरः कदापि प्रकटीभविष्यति, तस्माद्यावच्छक्नोति निस्सङ्कोचं तावत् संगृह्णाति। किन्त्वत्र सः सावधानीकृतः उपनिषदा— 'मा गृधः' अधिकं मा गृहाण, सति ईश्वरे लुब्धेन जनेन न भवितव्यमिति। नोचेत् स दण्डेन नियमयति जनान्। तद्यथा तैत्तिरीयोपनिषदि उक्तम्—

**भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः ।**
**भीषाऽस्मादग्निश्च इन्द्रश्च मृत्युर्धावति पञ्चमः[2] ।।**

अर्थात् अस्मादीश्वरात् भीतः पवनः पवते, सूर्यः उदेति, अग्निः इन्द्रश्च स्वं कर्म कुरुतः, सर्वोऽपि मृत्युशीलजनो भीत एव प्रवर्तते। तस्मादस्मिन् प्रशास्तरि सति भवति नियमेन सर्वेषां प्रवर्तनम्, तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म एव। इत्थमुपलक्ष्यते यत् ब्रह्म एव शासको नीतिनिर्देशकश्च। कठोपनिषदि अस्य ब्रह्मणो माहात्म्यं शासनकर्तृत्वं च वीक्ष्य कथितम्—

**यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।**
**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति[3] ।।**

अर्थात् यदि किञ्च जगत्सर्वं प्राणे परस्मिन् ब्रह्मणि सति एजति कम्पते, तत एव निःसृतं निर्गतं सत्प्रचलति नियमेन चेष्टते। तस्माद् ब्रह्मणः जनः महद्भयं कुरुते, बज्रोद्यतं

---

1. ईशावास्योप० 1।
2. तैत्तिरीय० 2।8।
3. कठ० 2,6,2।

करं एनमभिलक्ष्य अस्य शासने सर्वे भृत्या इव भवन्ति। एवं भूतं ब्रह्म ये विदुः स्वात्मप्रवृत्तिसाक्षिभूतं तदा अमरणधर्माणस्ते भवन्ति।

कथमस्य भयाज्जगत् वर्तत इत्यस्मिन् प्रसङ्गे तत्रैव उच्यते—

'भयादस्याग्निस्तपति भयात्तपति सूर्य[1] इति अनेनास्य सर्वानियन्तृत्वमपि साध्यते। यथा भृत्यः स्वस्वामितो भृतः नियमेन कर्मणि प्रवृत्तो भवति, तथैव अस्मात् ब्रह्मण ईश्वराद्वा भीतो जनः सदाचरणं कुर्वन् विज्ञानेनास्य अमृतो भवति।

एवमेवायमीश्वरो यमुन्निनीषति तं साधुकर्म कारयति, यमधोनिनीषति तमसाधु कर्म कारयति[2]। एतेनास्येश्वरस्य सर्वकृर्तत्वमुपगम्यते, मनुष्याणाञ्च वशीत्वमिति।

इत्थमेतस्य बाह्यनियमप्रयोजकविवेचनस्यास्ति नीतिशास्त्रीयं महत्त्वम्। छान्दोग्यावसाने गृहकर्मणां सम्यगुपवर्णनं विधाय पुनस्तत्र सर्वाश्रमाणां विनियोगः कृतः। बृहदारण्यके मैत्रेय्योपदेशमाध्यमेन ब्रह्मणः सर्वातिशायित्वप्रतिपादनं गार्हस्थस्याधमर्ण्योद्भावनम् आध्यात्मिकजीवनस्य च माहात्म्यप्रतिपादनं नीतिमीमांसाया विकासक्रमस्य परिचायकमेवास्ति।

उपनिषत्काले यद्यपि लोकजीवनगतकर्मव्यवस्थात अपवर्गात्मकस्वरूपस्य भवत्यधिकं महत्त्वम्, तथापि लोकजीवनाधायकानां विचाराणां सर्वत्रैव आसीत् व्यवहारः पिता पुत्रं शिक्षयन्नन्ते वदति—

'अथातः संप्रतिर्यदा प्रेष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति, पुत्र प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता......तस्मात् पुत्रमनुशिष्टं लोक्यमाहस्तस्मादेनमनुशासति......स यद्यनेन किञ्चिदक्षण्या अकृतं भवति तस्मादेवं सर्वस्मात्पुत्रो मुञ्चति[3]।

अत्र सन्दर्भे ज्ञायते यत् पुत्रेणायं लोको जेयः, कर्मणा पितृलोकः, विद्यया देवलोक इति। एष च क्रमो भवति मानवज्ञानविकासस्य। एतेषु लोकेषु ऐक्यं स्थाप्यते आत्मना, सर्वत्र व्यापकत्वात्। पिताऽपि यदा अमुं लोकं परित्यज्य पूर्वकृतं कर्म प्रति विचारयति, तदा तत्राकृतकर्मभिःपितृलोके किञ्चिदनिष्टं मा भूदिति दृष्ट्या पुत्रमुपदिशति पूर्वोक्तकर्म च पूर्णं कर्तुं समीहते। स च पुत्रः तत् कर्मानुष्ठातुं यतते, अतः पारम्परिको लोकव्यवहारो धर्मपूर्वको व्यवस्थित इति प्रतिभाति। अत्र प्रसंगे सकलस्यायं भावः यत् नीतिशास्त्रीयेयं लोकव्यवहारव्यवस्था बाह्यनियममूलिका, तथापि कर्मव्यवस्थापिका। तस्मादेव पिता स्वस्य

---

1. छान्दोग्य॰ 8,15,1।
2. बृहदारण्यक॰ 4,5,6।
3. बृहदारण्यक॰ 1।5।17।

कर्मणां पूर्त्यर्थं पुत्रेषु भारं निक्षिपति। पुत्रश्च पितृकृतकर्मणां सम्पादनाय, समाजव्यवहारस्य च पूर्णतया परम्परागतकर्मणामनुपालनं करोत्येव[1]।

एवमेवाचार्यो विद्यां प्रदाय शिष्येभ्यस्ततस्तानुपदिशति विधिमुखेन[2]— 'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्मा प्रमदितव्यम्।' भूत्यै न प्रमदितव्यम्। स्वाध्याय-प्रवचनाभ्यां न प्रदितव्यम्।।1।। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथि देवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि, नो इतराणि।' इति[3]।

अस्मिन् हि उपदेशे शिष्यः समाजवर्तिनां सकलानां हि सामाजिकजनानां समाजसम्मानितानां सम्माननाय अनुज्ञां गृह्णाति गुरुकुले। ततः स समाजमुपसर्प्य दान-स्वाध्याय-प्रवचनादीनि आचार्यकुलज्ञातानि करोति। इत्थमवलोक्यते नीतिविषयकप्रवचनानि गुरुकुले कथं दीयन्ते स्म। विश्लेषणेनानेन ज्ञायते यत् बाह्यनियमरूपेण प्रसिद्धा ईश्वरनियमाः, शिष्टाचारः, विधिरूपेणोपदिष्टाचाराः सर्वे एव एकस्मिन्नन्तर्भवन्ति। तस्मात् आधुनिक-बाह्यनियामका व्यवहारप्रमापकाश्च नियमा उपनिषत्सु भूयसा उपलभ्यन्ते।

### (ख) आन्तरिकाः प्रमापकनियमाः (विधानमूलकाः)

किञ्च, आन्तरिकाः प्रमापका नियमाः अपि प्राप्यन्ते तत्र। कठोपनिषदि नचिकेता वृद्धाः गाः दक्षिणायां प्रदाय तस्या वैय्यर्थ्यं प्रदर्श्य स्वपितरं ब्रूते। इमे गावो दुग्धदोहाः। बृद्धाः निरीन्द्रियाश्च सन्ति, एतेषां दानेन किम्? तत्त्वामपि एता अनन्दानाम लोकान् नेष्यन्ति, इत्थं बारम्बारमुक्ते पुत्रे, सः यमाय तं दत्तवान्[4]। पितुरादेशेन सः यमलोकं प्राप्य तत्र यमं न लब्धवान्। दिनत्रयानन्तरमागतो यमो नचिकेतसं प्रोवाच—

अतिथिपराभवस्य दोषानपहर्तुं त्रीन् वरान्, दिवसत्रयमभिलक्ष्य प्रदास्यामि भवते। तच्छ्रुत्वा नचिकेता प्रोक्तवान्— नहि अहं सुखं काङ्क्षामि, न वा द्रव्यमेव ईहे। पितुः प्रकोपशान्तिमिच्छामि, स्वर्गाग्निस्वरूपबोधाय वा ममास्ति प्रवृत्तिः। पुनश्च तृतीयं वरं परलोकविषयकं याचे। येन लोकानां मृत्योरनन्तरं स्थितिर्भवति न वेति साधु ज्ञातं स्यात्। यतो हि सुखोत्पादकानि वस्तूनि स्वल्पकालिकानि तेजोऽभिभावकानि भवन्ति। पुनर्जन्ममूलक-प्रेतोपस्थापकस्तृतीय वरः खलु बहूनां लौकिकजनानां मादृशानाञ्च शङ्कानिवारको भवति।

1. एकादशोपनिषदः –सत्यव्रतसिद्धान्तालंकार, पृ० 435।
2. तैत्तिरीयोपनिषद् –1।11।1-4।
3. तैत्तिरीयोपनिषद् –1।11।1-4।
4. कठोपनिषद् –1।1।3।

तस्मात् त्वमेतदेव मह्यं देहीति ययाचे नचिकेता[1]। एवं मृत्योः स्वरूपविषयको नचिकेताख्यातो वरो नूनमेव अस्माभिः प्रदातव्य इति ज्ञात्वा यमः कर्मणः स्वरूपं प्रतिपादितवान्, किं श्रेयः किञ्च प्रेय इत्यस्मिन् विषये ब्रुवता तेन प्रोक्तम्— श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः[2]। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते अर्थात् कर्तव्यावबोधेन प्रेयः परित्यज्य धीरः श्रेय एव वृणीते। श्रेयोहि कल्याणतमं स्वरूपं मानवस्य, मन्ये 'प्लेटो' दर्शने इदमेव सत्यं शिवं सुन्दरं कथ्यते। उपनिषद ऋषिरपि धीराणां कृते एतदेव साधु वक्ति। तस्मात् आधुनिकपाश्चात्यनीतिमीमांसादृष्ट्या सहजोऽपरोक्षज्ञानवादः (Instuitionism) स्फुटीभवति।

बृहदारण्यके याज्ञवल्क्यो मैत्रेयीमाहूयोक्तवान्— 'प्रव्रजिष्यन्नहं तव कात्यायन्या सह वित्तस्य विभाजनं विधाय अन्तं करवाणीति' अस्मिन् प्रसङ्गे सहसा मैत्रेयी उवाच— 'यन्नु इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताऽहो नेति। नेति होवाच याज्ञवल्क्यः। यथैवोपकरणवतां जीवनं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति। मैत्रेयी उवाच— 'येनाहं नामृता स्यां किमहं तेन कुर्याम्[3]।

अत्र मैत्रेय्याः अमृतत्वस्य झटित्यवबोध अपरोक्षज्ञानवाद एव। यद्यपि सहजापरोक्ष-ज्ञानवादे बुद्धेः प्रयोगो न भवति, झटित्येवोदितेऽर्थे साधारणजनप्रवृत्तिः जायते, तथाप्ययं द्विप्रकारकः। 1. अदार्शनिकः सहजज्ञानवादः, 2. दार्शनिकश्च सहजज्ञानवादः। अदार्शनिके सहजज्ञानवादे नैतिका, निर्णया अन्तःप्रज्ञातो ज्ञाताः सहजोपलब्धिविषयाश्चापरोक्षाः। दार्शनिके सहजज्ञानवादे तु अन्तःकरणस्य स्वरूपं बुद्धिमूलकमेव। तस्मान्नैतिकनिर्णयास्तत्र अनुमानगम्या भवन्ति[4]।

इत्थं बुद्धिपरत्ववादः (Rationalism) दार्शनिकसहजज्ञानवाद एव उपनिषत्सु वर्णित इवाभाति, सहजज्ञानवादो नैतिकसिद्धान्तावधारणेऽन्तःकरणस्य स्फूर्तिव्यतिरिक्तं प्रमाणान्तरं न प्रस्तौति, दार्शनिकाधारं च प्रस्तौति बुद्धिपरतावादः छान्दोग्ये सप्तमाध्याये आत्मज्ञानेन शोकातिगो भवतीति वदन् ऋषिः आत्मज्ञानप्रकारस्य विवरणं प्रदाय विमृशति। वाक् नाम्नः प्रबला भवति, सा चैव आकीटपतङ्गं यावत् धर्माधर्मौ सत्यानृते साध्वसाधू हृदयज्ञञ्चा-हृदयज्ञं च विचारयति। वाङ्मनसोर्मध्य मन एव वागनुसरति तदेव वाचं च नाम चानुभूय मनस्यति, कर्माणि कर्तुं च प्रवर्तयति जनम्। मनसोऽपि श्रेष्ठः सङ्कल्पः स यत् संकल्पयते, ततः कर्माणि प्रारभते। संकल्पात् चित्तं श्रेष्ठम्, चित्तात् ध्यानम्, ध्यानात् विज्ञानम्, विज्ञानात् बलं (नैतिकं शारीरिकञ्च) श्रेष्ठतरम्। यतो हि सत्यपि ज्ञाने कर्मसु प्रवृत्तिः

1. कठोपनिषद् –1,1,20-29।
2. कठोपनिषद् –1,2,2।
3. बृहदारण्यकम् –4,5,3-4।
4. पाश्चात्यं नीतिशास्त्रम्, पृ० 52।

तावन्नोदेति, यावन्न मनुष्यो बुद्ध्या युक्तो बलं प्रयुङ्क्ते[1]। इत्थं बलमन्नात् जायते, अन्नं जलात्, जलं तेजसः, तेजो आकाशात्, आकाशः स्मरात्, स्मरो आशातः, आशा प्राणतो जीयते, प्राण एव सत्यं समीहते, सत्यं श्रद्धां, श्रद्धा निष्ठां, निष्ठा कृतिं, कृतिःसुखं, सुखं भूमात्वं, भूमात्वमात्मानम्। आत्मनः सर्वं भवतीति ज्ञात्वा मुच्यते। अतएव उक्तम्—

**न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्।**
**सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ।।इति[2]।।**

इत्थं व्यापकसन्दर्भं दत्वा यदा मनुष्य आत्मानं पश्यति, तदेवासौ भूमात्वमधिगच्छति यथार्थं च विन्दते। इदं च ज्ञानेनाधिगम्यम्। आत्मबोध एव लोकदुःखोत्तरणाय आवश्यक इति मैत्रयी-याज्ञवल्क्ययोः संवादेन स्वत एव स्फुटीभवति। उक्तं च तत्र—

'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति। आत्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेन सर्वं विदितम्[3]।

एवमुक्तप्रकारेण बुद्ध्या सर्वं विविच्य आत्मतत्त्वानुभूतेः योगःकरणीयः, स एव प्रियः, स च पुत्रादपि प्रेयश्च सर्वेभ्यः तस्मादयमेव भजनीयः। उक्तं यथा—

'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात् सर्वस्मात् अन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत। स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति[4]।

इत्थं बुद्धिवादो वस्तूनां विश्लेषणं कर्मणां संकल्पानां चानुशीलनं मानवात्मनो ज्ञानं च कारयति। तस्मादेव आत्मानुभूतिं कृत्वा संसाररागाद्विरक्तः सन् मनुष्यः शोकातिगो जायते। तस्मात् बुद्धिवाद एव नीतिमीमांसाया श्रेयस्करो वाद इति। स च उपनिषत्सु उपलभ्यते। बुद्धिवादादेव रहस्यात्मकं ज्ञानमपि संभवतीति विस्तृतालोचनया परिभाव्यते। आत्मनःस्वरूपस्य भूमात्वबोधे आनन्दावबोधः, अल्पत्वबोधे संसारासक्तिः। तस्मात् भूमात्वं ज्ञात्वा सुखानुभवः करणीय इत्यस्त्युपनिषदां वादः।

नीतिमीमांसायां सुखवादबुद्धिपरत्ववादौ च द्वौ परस्परविरोधिनौ पक्षौ। सुखवाद इन्द्रियपरः पक्षः। अत्र इन्द्रियजन्यं सुखमेव प्रधानम्। इन्द्रियतृप्तिरत्र अभिमता। बुद्धिपरत्ववादे त्विन्द्रियदमनमावश्यकम्। आधुनिके युगे काण्टस्य नीतिसिद्धान्तो बुद्धिपरत्ववादः

---

1. छान्दोग्य० –7।
2. छान्दोग्य० –7।26।
3. बृहदारण्यक० 2,4,5।
4. बृहदारण्यक० 1,4,8।

कठोरतावादश्च कथ्यते। बुद्धिरेव पशुभ्यो मानवं भिनत्ति। इच्छाविशेषात्मिका व्यवहारबुद्धिरेव नैतिकनियमस्य निर्माणं विधत्ते। व्यावहारिकबुद्ध्यैव चान्तःकरणे नैतिकनियमस्य सहजं ज्ञानं भवति। अस्मिन्नर्थे काण्टमहोदयस्य बुद्धिपरतावादः सहजज्ञानवादसदृशः। सहजज्ञानवादः नैतिकसिद्धान्ता-वधारणेऽन्तःकरणस्य स्फूर्तिव्यतिरिक्तं प्रमाणान्तरं न प्रस्तौति, बुद्धिपरतावादश्च तत्र दार्शनिकमाधारं प्रदर्शयतीति, सहजज्ञानवादाद् भिन्नो बुद्धिपरतावादः[1]।

इत्थमुपनिषत्सु सहजज्ञानवादोऽथ बुद्धिवादश्च समन्वितावास्ताम्। जीवनगतनियमा-नामन्वेषणपुरस्सरं ऐहिकसुखानुसन्धानस्य विरोधमेव उपनिषदामात्मीयो वादः। उक्तं च यथा कठोपनिषदि नचिकेतसा श्रेयप्रेयसोर्मध्ये धीरः श्रेयः विवृणुते। सः पुनः यमप्रदत्तलोभसंवर्द्धिकां मायामयीमिच्छां परित्यजति। तस्मादेव तां परित्यज्य स ब्रूते—

*यमः –* **इमा रामाः सरथाः-सतूर्या न हीदृशा लम्भनीया मनुष्यैः ।**

**आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥**

*नचिकेता –* **श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः ।**

**अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते[2] ॥**

इत्थं सुखवादस्य मूलं नैतिकतायां सुखप्राप्तेराशय इति यत्प्रतिपादितं तत् परित्यज्य कठोपनिषदि बुद्धिवादस्य पन्थानमनुसृतवान् नचिकेता। स च बुद्ध्यनुकूलं पन्थानमासृत्य आत्मसाक्षात्कारस्य मार्गं परिदधाति, यो हि भारतीयाध्यात्मवादस्य आचार इति। अतएव पुनः ब्रूतेऽसौ—

**अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन्।**

**अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत[3] ॥**

अत्र केचन आक्षिपन्ति यदियमध्यात्मवादजनिकेच्छा नैराश्याभिमुखीं वृत्तिं प्रवर्तयति उपनिषत्सु[4]। अतोऽध्यात्मवादोऽयं न रोचते तेभ्यः। तथा चान्यत्रापि एवमेव वर्णितम्, यथा—

'भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिते विण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिन् शरीरे किं कामोपभोगैः। कामक्रोधलोभभयविषादेर्ष्येष्टवियोगनिष्ठसंप्रयोग-क्षुत्पिपासाजामृत्युरोगशोकाद्यैरभिहितेऽस्मिन् शरीरे किं कामोपभोगैः। सर्व चेदं क्षयिष्णु पश्यामो यथेमे दंशमशकादयस्तृणवनस्पतयः उद्भूतप्रध्वंसिनः।.....अतः किमेतैर्वान्यानां

1. पाश्चात्यं नीतिशास्त्रम्, पृ० 54।
2. कठोपनिषद् –1,1,25-26।
3. कठोपनिषद् –1,1,28।
4. उपनिषदों का रचनात्मक सर्वेक्षण, पृ० 192।

शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य प्रचलनं स्थानं वा तरुणां निमज्जनं पृथिव्याः स्थानादपसरणं सुराणाम्' इत्येतद्विधेऽस्मिन्संसारे किं कामोपभोगैः[1]।

अत्र नैराश्यमुपगतस्यैतत् चित्रणं मैत्रायण्यामुपलब्धमिति केचन ब्रुवन्ति। किन्त्वेतन्नोचितम्। यतो हि अध्यात्मवादप्रवर्तकस्य कस्यापि जनस्य आसक्तितः पारगमनं भवत्येव। इत्थमासक्तीनामपाकरणं बुद्धिपूर्वकसदाचाराणां योगेन भवतीति सिद्धम्। आसक्तीः परित्यज्य मानवस्तत्त्वमभिलक्ष्य शान्तेः पन्थानं गच्छति। अतएव तं पन्थानमनुसरन्ती लोकहिताय उपनिषद्ब्रूते—

'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मा अयं लोकः इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति[2]।

एवं नित्यं वा शाश्वतं वा जीवनं कामयमानाः विद्वांसःसर्वानिह लौकिकान् कामान् परित्यज्य संन्यसन्ति, ते तु स्वेन्द्रियरागान् अपि परित्यजन्तो वाञ्छन्ति यत् ये पूर्वं तेषां द्वेषिणः आसन्, ये वा तं प्रतिरोधितवन्तः, ते एव पुनस्तस्य आनन्दाय भविष्यन्ति[3]। एतदर्थं स नैव प्रयत्नमनुतिष्ठतीति। तथैव बृहदारण्यके पुनः संन्यस्तानां जीवनस्य लक्षणं प्रदाय कथ्यते—

'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति......। तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'[4]।

तस्मादेव उपनिषत्सूपवर्णिता अध्यात्मकामनया संन्यासप्रवृत्तयः, न नैराश्यमूलिकाः न वा लोकापनोदनार्थम्, प्रत्युत बुद्धिपूर्वकं पूर्णतां प्राप्तुम्। पूर्णताप्राप्तिर्हि जीवनस्य। इदञ्च भारतीयानाम् ऋषीणां सहजावबोधः। तस्मात् एतदेव वरेण्यं सुखकरञ्च जीवनमिति सर्वत्रैव उपनिषत्सु प्रतिपादितम्।

## साध्यमूलकाः नीतिनियामकाः

### (क) सुखवादः (Hedonism)

साध्यमूलकनीतिनियामकसिद्धान्तस्य पक्षे आत्मनो लक्ष्यमुद्देश्यं वा नैतिकतायाः नियामकम्। तत्र आत्मनो लक्ष्यं त्रेधा विभज्यते। प्रथमं सुखप्रवृत्तिजनकम्, द्वितीयं आध्यात्मिकं, तृतीयम् आत्मपूर्णताधिगमकम्। अत एव साध्यमूलकः सिद्धान्त एव उद्देश्यमूलको हेतुमूलको

1. मैत्राण्यु० 1,2-7।
2. बृहदारण्यक० 4,4,22।
3. कौषीतकी० 2,1।
4. बृहदारण्यक० 3,5,1।

(Teleological) वा उच्यते। एतेषु प्रथमः सुखमेव नैतिकताया निष्कर्षं वदति। तद्यथा— 'दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्[1]' इति न्यायमधिकृत्य सुखस्य साधनीभूतं कर्म नैतिकम्, तद्विपरीतमनैतिकम्। इत्थं सुखमेवात्र नैतिकताया निकषरूपेण स्वीक्रियते। उपनिषत्स्वपि सुखस्य माहात्म्यं प्रतिपादितं वर्तते। मानवस्य सामान्यापि प्रवृत्तिः सुखमूलिकैव। तद्यथोक्तम्— 'यदा वै सुखं लभतेऽथ करोति, नासुखं लध्वा करोति। सुखमेव लब्ध्वा करोति। सुखं त्वेव विजिज्ञासितव्यम्'[2]। यस्मात् सुखाय यत्नं सर्वोऽनुतिष्ठति, तस्मात् सुखपूर्वककार्याणां करणे स्वाभाविकी प्रवृत्तिरिति। उपनिषद ऋषि इन्द्रियसुखस्य हीनत्वमाध्यात्मिकस्य च उत्तमत्वमङ्गीकुरुते वक्ति च—

**श्रेयो हि धीरोऽभिप्रेयसो वृणीते।**
**प्रेयो मन्दो योगक्षेमाद् वृणीते[3] ॥**

किञ्च, हीनतरत्वेऽपि भौतिके सुखे कदाचित् विवेचनक्रमे तेषामपि महत्त्वमापतत्येव। तद्यथा रैक्व ऋषिः सत्स्वपि धनधान्यगवादिषु स्त्रियमभिलक्ष्य उपदेशाय प्रावर्तत। अनेन तस्य सुखाभिलाषदृष्टिः अनुमीयते, अन्यथा कथमयं प्रसङ्ग उपगतः स्यात्। मन्ये, श्रद्धासमन्वितैरस्माभिस्तथा न वक्तुं शक्यते, किन्तु मनोवैज्ञानिकरीत्या तु स ऋषिः स्त्रियं प्राप्य आनन्दितो भूत्वा उपदेशं दत्तवान्। तद्यथोक्तम्—

'तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जाया अयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति। तस्या ह मुखमुपोगृह्णन्नुवाच। आहारेमाः शूद्रानेनैव मुखेनालापयिष्यथ इति[4]।

तथैव मनोवैज्ञानिकसुखमन्वीक्ष्य केनोपनिषदि यदि विवेचनं कृतं स्यात्तदा यक्षस्वरूपाख्यानेऽपि उमया हेमवत्या प्रोक्तं सत्यं ब्रह्मेति[5] इन्द्रः स्वीचकार। उपनिषदि बहुशोभमानामुमां हेमवतीमिति विशेषणमेवाभिव्यनक्ति यत् तत्त्वाभिनिर्णये मनोवैज्ञानिकस्य पक्षस्य भवति प्रभावः। तस्मात् सुखमभिलक्ष्य भवति नीतिनिर्णय इति समुचितमेव प्रतिभाति।

किञ्च, पुनश्छान्दोग्ये बुभुक्षितः उषस्तिचाक्रायणः स्वजायया आटिक्या सह भोजनान्वेषणे एकं हस्तिपालकं कुल्माषान्नं खादन्तं दृष्ट्वा याचितवान्। स च उक्तवान् अन्यत्कुलमाषान्नं नास्ति इमे च उपनिहिताः सन्ति। तत ऋषिरुवाच—

---

1. महाभारत 139,69।
2. छान्दोग्य॰ 7,22,1
3. कठ॰ 1,2,2।
4. छान्दोग्य॰ 4,2,4-5।
5. केन उप॰ 3,24,25।

'एतेषां मे देहीति होवाच, तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादिति ह्रोवाच[1]। अत्रापि क्षुधातृप्तिजनिकावृत्तिरेव नीतिव्यवस्थापिका। कुल्माषान्नभक्षणे न आसीद्दोषः, किन्तु उच्छिष्टजलस्य पाने दोष इति विचारविषयोऽयं नियमः। तस्मात् सुखमूलकं कर्म उचितम्, दुःखप्रदायकमनुचितमिति सुखवादस्य राद्धान्तः।

सुखवादस्यायं प्रकार एव भौतिकानन्दवादे आध्यात्मिकानन्दवादे च रूपान्तरितो भवति। भौतिकानन्दवादस्य यद्यपि आध्यात्मिकानन्दात् अस्ति असाधर्म्यम्, तथापि उपनिषदि दृष्टान्तानुसारं तद् आधिभौतिकाध्यात्मिकमेव विकसति। तद्यथोक्तम्—

'सैषा आनन्दस्य मीमांसा भवति। युवा स्यात्साधुयुवाध्यापकः। आशिष्टो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः, ये ते शतं मानुषानन्दाः, स एको मनुष्यगन्धर्वाणामानन्दाः। सः श्रोत्रियस्य चाकामहतस्य।......ये ते शतं प्रजापतेरानन्दाः। स एको ब्रह्मणः आनन्दः, श्रोत्रियस्य चाकामहतस्य[2]।

इत्थं रसानुभूतिरूपोऽयमानन्दः "रसो वै सः। रसं हि ह्येवायं लब्ध्वा आनन्दीभवति"[3] इति एतद्द्वारा अध्यात्मानन्दस्य यत परिचयः, तथैव भौतिकसुखवर्णनरूपेणाख्यात आनन्दः आधिभौतिकं सुखमेव। तस्मादानन्दमय एवायं सुखशब्देनापि वक्तुं शक्यते। तच्च सुखमेव सुखवादः।

भारतीयास्तु आधिभौतिकं सुखं जीवनस्योदेश्यं न मन्वते, कथयन्ति च—कामानामुपभोगेन न कदापि सुखशान्तिर्भवतीति। तद्यथा—

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते[4]॥**

तस्मादेव भौतिकसुखवादस्य जीवनोद्देश्यं विहाय आध्यात्मिकसुखवादाय यतमानो भवति जनः।

### (ख) अध्यात्मवादः (Spiritualism)

अस्य अन्वेषणे तत्परा अपि साधवो भौतिकवादस्य महिमानं स्वीकुर्वन्त्येव। याज्ञवल्क्यः जनकसभायामुपस्थितः सुवर्णालङ्कारयुक्ता गा ग्रहीतुं यतवान्। स वक्ति—

---

1. छान्दोग्य॰ 1,10,3।
2. तैत्तिरीय॰ 2,8।
3. तत्रैव 2,7।
4. मनु 2।94।

तं होवाच याज्ञवल्क्य किमर्थचारी, पशूनिच्छन्नण्वन्तानिति। उभयमेव सम्राडिति[1] ।.....स होवाच याज्ञवल्क्य पिता मे अमन्यत नाननुशिष्य हरेतेति[2] इत्थमर्थाधिगमनेन सहोपदेशदान-मध्यात्मतोषाय भवतीत्युभयोः समन्वयः। भारते चत्वारः पुरुषार्थाः सर्वेषामभीप्सिताः। तेषु प्राथमिकास्त्रयः सापेक्षाः, अन्तिमो मोक्षश्च निरपेक्षः। मोक्ष एव काम्यो भारतीयानाम्। अन्ये त्रयस्तु जीवनधारणाय आवश्यकरूपेण स्वीकृताः। मनुष्य अजरामरं सर्वज्ञं सर्वानन्दवन्तं शक्तिमन्तं च स्वरूपमभिलषति। भारते शरीरमुपभोगस्य साधनं मन्यते। अत इतः परमात्मनो निगूढं पुरुषार्थयुक्तं तस्य ब्रह्मरूपात्मकं स्वरूपम् अन्वेषितव्यम्। इमां ज्ञात्वैव जनस्तदधिगतये प्रवर्तते। अतो ब्रह्मावाप्तये बहवः सन्दर्भा उपलभ्यन्ते उपनिषत्सु। तत्र संन्यासाश्रमे योगी एनद् ब्रह्म ज्ञातुं गृहस्थाश्रमं परित्यजति। कश्चित् ब्रह्माधिगतये संन्यासस्य कल्पनां वैदिकीं' न मन्यते[3] । संन्यासो भवतु वैदिकोऽवैदिको वा, ब्रह्मणस्स्वरूपाधिगतिविषयक-उल्लेखस्तु उपनिषत्सु वर्तत एव। मुण्डकोपनिषदि तु संन्यासेन सह ब्रह्मलोकाधिगतिविषयः उक्तः। तद्यथा—

**वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे[4] ॥**

एवमेव केनोपनिषदि ब्रह्मणो माहात्म्यं प्रतिपादितम्। तत्र ब्रह्मणः सकाशाद् उत्पन्नं जगत् लोकञ्च न ज्ञायते, यदिदं यक्षरूपात्मकं किं तत्त्वमिति। ततस्तद्यक्षस्य बहुरूपेण विवरणमुपलभ्यते तत्र। अन्ते च सर्वैः देवैरिदं प्रख्यापितं यद्यक्षो ब्रह्म एव। एतस्य अन्वाख्यानं हेमवत्या इत्थं कृतम्। तद्यथा—

'सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति। तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्तेन ह्येनन्नेदिष्टं पस्पृशुः ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति'[5] ।

ब्रह्मेदं हि अध्यात्ममार्गेणैव प्राप्तुं शक्यते। ब्रह्म ध्रुवं सर्वव्यापकं नित्यं सनातनमिति व्यपदिश्यते। एतस्य स्वरूपावगतेः, कारणं ब्रुवाणो यमः प्रोवाच कठोपनिषदि—

**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति[6] ॥**

---

1. बृहदारण्य॰ 4,1,1।
2. तत्रैव 4,1,7।
3. बौद्धधर्म के विकास का इतिहास, पृ॰ 25, गोविन्दचन्द्र पाण्डेयः।
4. मुण्डकोपनिषद् 3,2,6।
5. केनोपनिषद् 4,1,2।
6. कठोपनिषद् 1,2,12।

अयं देवः सर्वैः वेदैः अध्येयः, अस्यैव महिम्ना लोकाः ब्रह्मचर्यभावमधिगच्छन्ति, अयमेव ऊंकाररूपात्मको नित्यः, अणोरपि अणुः, महतोऽपि महान्, शान्तेन चेतसा ध्यातव्यः। कामानां व्यपगतेरनन्तरं अस्वादगतिः। अयमेव प्रश्नोपनिषदः प्राणः[1], माण्डूक्योपनिषदः ऊंकारः[2], तैत्तिरीयस्य सत्यं ज्ञानमनन्तं[3] ब्रह्म। इत्थमस्य देवस्य यन्माहात्म्यं शास्त्रेषु दृश्यते तन्मानवमनसोऽध्यात्मचिन्तनस्यैव वर्तते प्रभावः। प्रायो जना इच्छन्ति सर्वेषां जीवानाम् उपशमात्मकं व्यवहारम्। स च इहलोके रागद्वेष्येर्ष्यामात्सर्ययुक्तेषु न कदापि उपलभ्यते, अतः एतादृशीमवस्थां जीवस्य कल्पयन्ति यत्र भौतिकानि विवेचनानि न परिबाधन्ताम्, ऐक्यञ्च समेषामुपगम्यन्तामिति। अत एतादृशी अवस्था चित्तस्य शरीरभिन्नावस्था भवति, यत्र सर्वे जीवाः स्वस्वकर्मानुसारं शरीरं परित्यज्य आत्मन ऐक्यं भावयन्ति, विषयगतभिन्नतां परित्यजन्ति। तद्यथोक्तम्—

'स यथा इमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्य अस्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येव प्रोच्यते। एवमेवास्य परिद्रष्टुः इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति भिद्येते चासां नामरूपे। पुरुष इत्येवं प्रोच्यते। स एषः अकलः अमृतो भवति। तदेष श्लोकः—

**अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।**
**तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥**
**एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति[4]।**

एतं भूतं परं ब्रह्म जातु साधको गुरुमुपसर्पति। ततः स गुरुस्तमुपगतं शिष्यं कर्मकाण्डयोगात् ज्ञानयोगे नियोजयति। स तत्राश्रमे वसन् तपःश्रद्धादीनां सम्यगभ्यासं कुरुते। पुनः कामनाभिरुपरतः स शान्तो भूत्वा ज्ञानाधिकारी भवति। ततो गुरुस्तमुपदिशति। यथोक्तम्—

**तस्मै स विद्वान् उपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्[5] ॥**

इमां ब्रह्मविद्यामधिगन्तुं स साधनामनुतिष्ठति। साधनायामसौ 'ओं' रूपात्मकं प्रणवमाधारीकृत्य अक्षरं ब्रह्मतत्त्वमधिच्छति। तदर्थं ध्यानभावनां कुर्वन्नसौ आत्मक्रीड आत्मरतिरिव

1. प्रश्नो० 3,11।
2. माण्डूक्यो० 1।
3. तैत्तिरीय० 2,1।
4. प्रश्नोपनिषदः षष्ठः प्रश्नः।
5. मुण्डक 1,2,13।

स्वस्मिन् स्थितो नैतिकान् आचारान् प्रतिष्ठापयति। ततः स ज्ञानेनैव सर्वाः कामनाः परित्यज्य ब्रह्मतत्त्वमेव लक्ष्यीकृत्य प्रणवेन धनुषा संधाय आत्मानं शरमिव विधाय ब्रह्मलोकमुपसर्पति। उक्तं च[1]—

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥**
**ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्॥**
**भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥**

एवंभूतस्य ब्रह्मसाक्षात्कर्तुः सर्वगुहाग्रन्थिविमुक्तो जायते। सर्वा च तस्य शिष्यपरम्परापि विमुक्ता भवति। अत एव परम्परागताध्ययनव्यवस्था व्यवस्थापिता उपनिषद्भिः। उक्तञ्च यथा—

**क्रियावन्तः श्रोत्रियाः ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयंतः ।**
**तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधवद्यैस्तु चीर्णम्[2] ॥**

अत्र उपनिषदि क्रियावतां ब्रह्मनिष्ठानां श्रोत्रियाणां विद्यापरम्पराविविधरूपेण उपदिष्टा। सा च परम्परा अद्यावधि अध्यात्ममार्गानुरोधेन प्रचलतीति वैशिष्ट्यमस्याः परम्परायाः। अस्यामेवब्रह्मविद्यापरम्परायामधिगता अन्याः सर्वा विद्याः। तद्यथा मधुविद्या-संवर्गविद्या-वैश्वानरविद्या-शाण्डिल्यविद्या-सामविद्या-पर्यंकविद्याप्रभृतयः। एतासां ज्ञानेन सर्वे जना अध्यात्मवन्तः सञ्जायते।

## (ग) पूर्णतावादः

अस्य प्रचारो भारते पूर्णतावादशब्देन नैवास्ति, किन्तु आध्यात्मिका जना स्वजीवनस्य पूर्णतामधिगन्तुं सदैव प्रयतन्ते। अध्यात्मवादिनोऽपि सर्वं वस्तु चैतन्यात्मकं स्वीकुर्वन्ति, किन्तु एतेन न ते पूर्णतामभिजानन्ति। यतो हि पूर्णः स भवति, यस्य सर्वभूतस्य लोकस्य कृते आत्मदृष्टिः प्रसृता भवति। भारते तु एषा भावना सर्वेष्वेवाध्यात्मग्रन्थेषूपलभ्यते, किन्त्वयमात्मपूर्णतावादो नैतिक-आत्मविकासस्य साधनमात्रम्, अत्र इन्द्रियपरत्वस्य विनाशित्वमनभ्युपेत्य बुद्ध्या नियन्त्रणं परिष्कारं चैन्द्रियकवासनानां क्रियत इति तस्मादयं

1. मुण्डक 2।2।4,11,8।
2. मुण्डक 3।2।10।

बुद्धिवादात् भिन्नो आत्मपूर्णतावादः। आत्मपूर्णतावादे तु सर्वजनानां संघटनात्मकः समाजो निर्मीयते, यत्र व्यक्तयः संकीर्णवैयक्तिकं स्वरूपमुत्सृज्य समृद्धेन व्यापकेन च सर्वभूतमयेन वैश्वानरात्मकेन विश्वात्मना सहैक्यमधिगच्छन्ति। अतः उपनिषत्स्वपि प्रोक्तम्—

**ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते[1] ॥**

अन्यत्रापि भारतीयसंस्कृतौ सर्वस्य उपकारित्वप्रसङ्गे उच्चते—

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्[2] ॥**

भूमात्वं खलु भारतीयायाः संस्कृतेः वैशिष्ट्यम्। अस्मिन् हि खलु सर्वजनाना-मेकत्वं परिभाव्य आत्मत्वं प्रतिष्ठाप्यते। भूमात्वे सर्वः स्वात्मस्वरूपो जायते। तत्रान्यत्वं परिहीयते। तद्यथोक्तम्—

'यत्र नान्यत् पश्यति नान्यत् शृणोति, नान्यद् विजानाति स भूमा। अथ यत्र अन्यत् पश्यति, अन्यत् शृणोति, अन्यत् विजानाति तदल्पम्। यो वै भूमा तदमृतम्। अथ यद् अल्पं तन्मर्त्यम्। स भगवः कस्मिन् प्रतिष्ठित इति। स्वे महिम्नि यदि वा न महिम्नीति'।

तस्मादेवान्यत्रापि उक्तम्—

**यो वै भूमा तत्सुखम्, नाल्पे सुखमस्ति ।**
**भूमैव सुखं, भूमात्वेव विजिज्ञासितव्य इति ॥**
**भूमानं भगवो विजिज्ञास' इति[3] ॥**

अस्मिन् हि पूर्णात्मवादे साधको भावनात्मकेन बुद्ध्यात्मकेन च विधानेन कार्यं नैव करोति। स तु उभयमपि प्रबाध्य सर्वात्मभावनां भावयति। क्षुद्रं पाशविकं ऐन्द्रियकं च रागं परित्यज्य नैतिकमाध्यात्मिकं च स्वरूपं स्थापयति, यत्र पूर्णात्मभावे प्राप्ते सर्वं नामरूपं व्यपगतं जायते। ततः पुरुषः स्वात्मरूपे स्थितो भावयति—

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।**
**अप्राणो ह्यमनाः शुभ्रः ह्यक्षरात् परतः परः[4] ॥**

---

1. ईशावास्योपनिषद् मङ्गलम्।
2. परम्पराबोधात्।
3. छान्दोग्य॰ 7।23-24।
4. मुण्डक॰ 2।1।2।

व्यपगते च सर्वस्मिन् केवलं पुरुषं दृष्ट्वा साधकः स्वस्मिन्नेव स्थितः ओंकारं प्रणवं परिचिन्तयति। अत्र परिचिन्तने उपनिषदः शस्त्राणि भवन्ति, उपासना शरवद् स्वीक्रियते, किञ्च भावगतं चित्रं आयम्य साधकस्तस्मिन् प्रणवे लक्ष्यवेधं कुरुते। तद्यथोक्तम्—

**धनुर्गृहीत्वा औपनिषदं महास्त्रं शरं ह्युपासानिशितं संधयीत ।**
**आयम्य तद् भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि।।**

**प्रणवो धनुः शरो ह्यात्मा ब्रह्मतल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्[1] ।।**

इत्थं पूर्णात्मप्राप्तये प्रयत्नशीलः साधकः सर्वं रागद्वेषादिकं परित्यज्य विनैव भौतिकेन सुखेन सः अरण्ये वसन् शान्तो दान्तो भूत्वा ब्रह्मत्वमधिगच्छति। तद्यथोक्तम्—

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ।।**

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।**
**अथमर्त्योऽमृतो भवति एतावद्धियनुशासनम्[2] ।।**

साधकः स्थितोऽपि अरण्ये लोकहितं भावयन् लोककल्याणाय सततमुपदिशति, जीवहितं च भावयति। एतच्चावलोक्यते अस्माभिरधनेष्वपि अरण्यस्थितेषु साधुषु। तस्मादयं मार्ग अन्वेष्य साधनीयो भवति साधकैः, यस्याधुनिकनीतिशास्त्रविद्भिः परीक्षणं कृत्वा विधानानि निर्मीयन्ते।

यद्यपि समग्रं भारतीयचिन्तनम् अध्यात्मपरं भवति, तथापि अध्यात्मचिन्तनस्य आधारस्तु— सद्गुणानामाधानमेव भवति।

### (घ) मूल्यात्मकम् : नीतिविवेचनम्

सम्प्रति नीतिशास्त्रे मूल्यात्मकं चिन्तनं प्रवर्तते। यस्मिन् नैतिकगुणानां विवेचनं मूल्यप्रदायकं भवतीति जानन्त्येव प्रतीच्यविदः। मूल्यं तु भारतीयेषु धर्म इति रूपेण ज्ञायते। मनुना धर्मस्वरूपं व्याकुर्वतोक्तम्—

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्[3] ।।इति ।।**

1. मुण्डक॰ 2।2।3-4।
2. कठोपनिषद् 2।3।14-15।
3. मनुस्मृति 6।92।

अत्र उपर्युक्तानि मूल्यानि धर्मलक्षणे समन्वितानि भवन्ति। को धर्मः? कश्चाधर्मः? अत्रापि अस्ति विसंवादः, किन्तु अत्र धर्मशब्दस्य प्रयोगो मूल्यात्मकरूपेणैव विहितः। याज्ञवल्क्येन अन्यत्र धर्मशब्दस्य प्रयोगः परम्परागताचाराणामनुपालनरूपेणापि कृतः। तद्यथा—

**यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः[1]।**

**तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥**

इत्थं परम्परागतपालनीयाचाराणामनुपालनमेव धर्मः, स च सदाचार इत्यपि वक्तुं शक्यते। भवत्येषापि रीतिः विधानवादिमानकेषु, परन्तु यदा मूल्यवादिमानानि विविच्यन्ते, तदा तु धर्मोऽयं सदाचारो वा मूल्यरूपेण वक्तुं शक्यते। यद्यपि भारतीयेषु मूल्यानां विवेचनं क्वचित् पुरुषार्थरूपेणापि दृश्यते। प्रायः सर्वे एव सम्प्रदायाः धर्मार्थकाममोक्षरूपात्मकं पुरुषार्थचतुष्टयं मूल्यं स्वीकुर्वन्ति। इत्थं धर्मः, पुरुषार्थः, मूल्यं वा पर्यायपरं भवति नीतिव्याख्यानावसरे। प्रतीच्यविदस्तु मूल्यस्य मीमांसां कुर्वन्तः कथयन्ति यत् मूल्ये परम्परागतमान्यतानां सत्यपि संसर्गभावनात्मकसंकल्पात्मकभावनानामपि भवति संश्लेषः। अतः साधको ज्ञानात्मकरूपेण परम्परागतमूल्यानामन्वीक्षणं कुर्वन् उचितानुचितभावनया तात्कालिकीं स्थितिं पर्यालोचयति। कश्च धर्मः कश्चाधर्म इत्यपि निश्चित्य अनुचितान् धर्मान् (मूल्यानि) परित्यजति, उचितान् धर्मान् च गृह्णाति। इत्थं एतद् ज्ञानान्वेषणप्रसंगे कदाचित् साधको वैयक्तिकं मूल्यं बहु मनुते, किन्तु तदपेक्षया सामाजिकमूल्यस्य महत्त्वं ततोऽपि अधिकतरं मनुते। एवं सामाजिकमूल्यस्य अपेक्षया आध्यात्मिकमूल्यस्य महत्त्वं सर्वोत्तममभिलक्ष्य स्वीकरोति। यतोहि स्वार्थसाधकं भवति वैयक्तिकं मूल्यम्, सामाजिकं तु स्वार्थेन सह अन्येषामपि हितमावहति। किन्तु आध्यात्मिके समग्रस्यैव कीटपतङ्गस्य समानं हितं क्रियते। तस्मात् अध्यात्मिकमूल्यस्य महत्त्वं प्रतिपाद्यते मूल्यवादिभिः।

उपनिषत्सु आत्मनो ब्रह्मणो वा व्यापकत्वकथनं सर्वेषु ऐकात्म्यभावस्थापनार्थमेव। तच्चैकात्म्यं सर्वमूल्यानतिशेते। तस्मादेतन्मूल्यवादिमानकेषु सर्वोत्तममिति विचार्यैव याज्ञवल्क्यस्य पत्न्या याचितम्—

मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरे अहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति। सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवीवित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताऽहो नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति। सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति'[2]।

---

1. याज्ञवत्क्यस्मृति-आचार० 343।
2. बृहदारण्यक० 4।5।2,3,4 तथा 2।4।1,2,3।

एतेन निदर्शनेन ज्ञायते यत् वित्तरूपात्मकमूल्यात् अध्यात्ममूल्यम् अतितरामतिशेते। अतो मैत्रेयी वित्तं परित्यज्य अमृतत्वप्रापकं मूल्यं याचत इति भावार्थः।

एवमेव कठोपनिषदि वाजश्रवाः सर्ववेदसं ब्राह्मणेभ्यः प्रायच्छत्। तस्मिन् सर्ववेदसयज्ञे दीयमानेषु सर्वेषु मूल्यात्मकवस्तुषु पीतोदकानां दुग्धदोहानां निरिन्द्रियाणां पशूनां दानं दृष्ट्वा नचिकेता तद्दानविषयकफलस्यामूल्यत्वं परिभाव्य उवाच—

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।**
**अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥**
**स होवाच पितरं तत कस्मै मां दास्यतीति[1]॥**
**द्वितीयं तृतीयं तं होवाच मृत्यवे त्वां ददामीति ॥**

अत्रापि मूल्यविश्लेषणप्रसङ्गेनैव बालकस्य ज्ञानसम्पन्नस्य चेतसि निरिन्द्रियाणां पशूनां दानेन किं फलं भविष्यतीति धीः समुपन्ना। स स्वस्य स्वास्थ्यसम्पन्नस्य युक्ततरस्य दानाय नैकवारं प्रेरितवान् पितरम्। येन क्रुद्धः पिता मृत्यवे त्वां ददामीति उक्तवान्। मन्येऽयमस्ति मूल्यवादस्य सर्वोत्तमो दृष्टान्तः। न केवलमेतदेव, मूल्यनिर्धारणप्रसङ्गे यमः स्वयमेव वक्ति— भो नचिकेतः। यत्त्वं तिस्रो रात्री मम गृहे अनश्नन् अवात्सीः, तेन अतिथिपराभवस्य मम उपरि दोषः समुपजातः, एतस्य दोषस्य परिहारायऽहं तुभ्यं त्रीन् वरान् दास्यामि, त्वं याचय। एषु त्रिषु वरेषु नचिकेता अन्तिमं वरं मरणानन्तरं जीवस्य का कथा भवतीति ज्ञानप्रसङ्गे याचते[2]—

**येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।**
**एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः॥**

अत्र यम एतस्य वरस्य कृते अपरं वरं याचितुं वारं वारं वक्ति, किन्तु नचिकेता तु एतदर्थमेव सततं प्रार्थयते। कदाचित् यमः सुखदायकानां स्त्रीणां स्वर्गस्थानां अप्सरसां दानाय प्रस्तावं करोति। कदाचित् द्रव्यस्य, रथस्य, दुर्लभानां वा मृत्युलोकेऽप्राप्यमाणानां वस्तूनां याचनाय वारं वारं प्रेरयति, किन्तु नचिकेता तु मृत्योः स्वरूपमेव सर्वानतिशेते इति धिया तमेव आरटति। अतः अध्यात्मं भौतिकात् श्रेष्ठतरं भवतीति ज्ञायते। तद्यथा[3]—

**शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् ।**
**भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥**
**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।**
**महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥**

---

1. कठोपनिषद् 1।1।3,4।
2. तत्रैव 1।1।20-29।
3. कठोपनिषद् 1।1।23,24,25।

**इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीयाः मनुष्यैः।**
**आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥**

एतदुत्तरप्रसङ्गे भौतिकानां वस्तूनां कियत्मूल्यमिति कथयन् नचिकेता ब्रूते[1]—

**श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः।**
**अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥**
**देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुविज्ञेयमात्थ ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यः नान्यो वरस्तुल्य एतस्य कश्चित्॥**

इत्थं ज्ञायते मूल्यान्वेषणप्रसङ्गे भौतिकात् वैयक्तिकात् भौतिकं सामाजिकं मूल्यं श्रेष्ठं, सामाजिकात् आध्यात्मिकं श्रेष्ठमिति, ततोऽपि सर्वजनहितप्रदायकमाध्यात्मिकं सर्वोत्तममिति मूल्यनिर्धारणमेतत् कथं न उपनिषत्सु गृह्यते। मन्ये एषा दृष्टिरुपनिषत्सु आधुनिकमूल्यवादिनां दृष्टिमप्यतिशेते।

## २—सुत्तनिपातस्य नीतिमीमांसा

विश्वेतिवृत्तचक्रे ईसापूर्वषष्ठशताब्दी मानवाचारनिर्धारकाणां चिन्तकानां प्रादुर्भावकाल इति तत्तद्देशस्थितानां विश्वपुरुषाणां विचाराकलनद्वारा ज्ञातुं शक्यते। चीनदेशे कन्फ्यूशियस-(551-479 ई.पू.) महाशयानामाविर्भावः, यूनानदेशे पाइथागोरस (580-470 ई.पू.)-सुकरातमहाशययोराविर्भावः, भारते बुद्धमहावीरयोश्चाविर्भावः कामपि विशेषाचारविचार-संधायकानां परस्परं दूरस्थितानामपि मानवज्ञानस्य समानशीलतामभिव्यनक्ति। ते खलु स्वपरम्परायां प्राक्कालतः समागतानां दुर्वृत्तानां खण्डनं विधाय नूतनाचारवृत्तिं स्थापितवन्तः तामाचरितुमुपदिष्टवन्तश्च। भारते यस्मिन् काले भगवतो बुद्धस्याविर्भावः समजनि तत्सुनिश्चितमेव कर्मकाण्डविधानेना-कुलितजनमानसानां कृते मुक्तिमार्गस्य प्रेरणाप्रवर्तकत्वमिति बुद्धस्य भगवतो दर्शनं शीलाभिव्यञ्जकमिति सर्व एव आहुः। शीलेन भवतापखण्डनं संभवतीति निर्धारितं तथागतानुयायिभिस्तद्यथोक्तम्—

**सीले पतिट्ठाय नरो सपञ्ञो, चित्तं पञ्ञं च भावयं ।**
**आतापी निपको भिक्खु सो इमं विजटये जट'ति[2]॥**

न केवलं बुद्धेन शीलस्य माहात्म्यं प्रत्यपादि, महाभारते शीलनिरूपणाध्यायेऽपि शीलस्य माहात्म्यं वर्णितमस्ति। यत्र शीलं तत्रैव लक्ष्मीः, विद्या, कुलस्य सर्वे देवा वसन्तीति उक्तम्[3]—

---

1. कठोपनिषदि 1।2।26,22।
2. विसुद्धिमग्गो 1।1।
3. शीलनिरूपणाध्यायः 61-62।

**शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्जिताः।**
**तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ॥**
**धर्मः सत्यं तथा वृत्तं बलं चैव तथाप्यहम्।**
**शीलमूला महाप्राज्ञ! सदा नास्त्यत्र संशयः ॥**

शीलं हि खलु नीतिमीमांसायां यन्माहात्म्यं बिभर्ति तत्सकलेऽपि पाश्चात्यनीतिशास्त्रे कोऽप्येकः शब्दः तथा अर्थगाम्भीर्यं नैव बिभर्तीति संसूच्यते नीतिविद्भिः। प्रतीच्ये देशे वृत्तं चरित्रमिति शब्दद्वयं बहुशःशीलार्थसम्पत्तौ व्यवह्रियते, तच्चाङ्गलभाषायां character/conduct शब्दाभ्यां कथ्यते। चरित्रं खलु चरधातोः 'इत्रन्' प्रत्यये कृते निष्पद्यते। यस्यार्थोऽस्ति व्यवहारस्य चर्चाया वा प्रेरकं कर्म। अयं हि शब्दः आङ्गलभाषायाः character शब्देन प्रतिपाद्यते, यस्मिन् हि सङ्कल्पशक्त्या कृत्यानि सम्पाद्यन्ते, सङ्कल्पशब्देन आभ्यन्तरो विचारः गृह्यते। वृत्तमपि वृत्धातोः क्तप्रत्यये कृते निष्पद्यते, यस्यार्थः वरणात्मकं कृत्यं भवति, अयं शब्दः आङ्गल-भाषायाः conduct शब्दार्थरूपः। अस्मिन् हि सङ्कल्पानुरूपं कृत्यं क्रियते, अतएव willed action इति उच्यते। बाह्योऽयं व्यापार आन्तरिकेण will power शक्त्या संयुक्तः, इत्थमुभाभ्यां कृतं कर्म शीलादावन्तर्हितं भवति[1]। शीले बाह्यमान्तरिकं चैच्छिकं कर्म आगच्छति। अतएव योगी प्रज्ञामारुह्य शीलेन स्वं तथा प्रतिष्ठापयति, येनास्य संसारजनिततृष्णा अपगच्छति, जीवनादर्शानुरूपं कृत्यञ्चाधिगच्छति। तस्मादेव भगवतापि उक्तं शीले प्रतिष्ठाय इति।

भारते बुद्धाविर्भावात् प्राक्कर्मकाण्डस्य हिंसायाः यज्ञविधानस्य च तथा प्रयोगः आसीत्, यं दृष्ट्वा जनानां चेतांसि चेखिद्यन्ते स्म। समाजे जातिव्यवस्थयापि असमता प्रतिष्ठिता आसीत्। उपनिषदां ज्ञानं परम्पराक्रमेण केषाञ्चन कृते एव आसीत्। सामान्यो लोकः परमार्थावबोधनेऽनधिकृतः अपवारितश्चासीत्। बुद्धस्य काले षट्संख्याकाः[2] श्रमणाः आसन्, ये खलु विविधवादविधानेन जनेषु कृत्याकृत्यानां समालोचनां कुर्वन्तः विराजन्ते स्म। तेषु केचन नियतिवादिनः, केचन संशयवादिनः, केचन च लोकायतिकाः आसन्। अतः बुद्धो भगवान् तान् सर्वान् समीक्ष्य परम्पराप्राप्तवेदज्ञानञ्चानुशील्य मध्यमार्गस्य उपदेशं दत्तवान्। अयं हि शीलप्रधानो व्यवहारिकोपदेशः चित्तधर्मावलम्बी चासीत्। गृहस्थधर्मे विविधान् दोषान् दृष्ट्वा उक्तवान् स :—

**फन्दमानं पजं दिस्वा मच्छे अप्पोदके यथा**
**अञ्जमञ्ञेहि व्यारुद्धे दिस्वा मं भयमाविसि ।**
**समन्तमसरो लोको दिसा सव्बासमेरिता**
**इच्छं भवनमत्तनो नाद्दसासिं अनोसितं ॥**

1. नीतिशास्त्र का सर्वेक्षण –सङ्गमलाल पाण्डेय, पृ० 78।
2. सभियसुत्त-सुत्तनिपात, सामञ्ञफलसुत्त-दीघनिकाय, जिल्द 1, पृ० 30-31।

**ओसाने त्वेव व्यारुद्धे दिस्वा मे अरती अहु।**
**अथेत्थ सल्लमद्दक्खिं दुद्दसं हृदयनिस्सितं।।**
**येन सल्लेन औतिण्णो दिसा सव्वा विधावति ।**
**तमेव सल्लं अब्बुह्य न धावति न सीदति[1] ।।**

इत्थं संसाररागेण आबद्धानां जाननां कृते विरागस्य पन्थानमुद्घाट्य भगवान् बुद्धः निवृत्तिप्रधानं धर्ममुपदिष्टवान्। यस्मिन् धर्मे सर्वे जना तथा सम्मिलिता बभूवुः यथा सागरे नद्यः। तद्योक्तम्—

'सेय्यथापि, भिक्खवे या काचि महानदियो, सेय्यथीदं गङ्गा, यमुना, अचिरवती, सरयू, मही ता महासमुद्दं पत्ता जहन्ति पुरिमानि नामगोत्तानि, महासमुद्दो संघं सङ्कं गच्छन्ति, एवमेव खो भिक्खवे चत्तारामे वण्णा खत्तिया ब्राह्मणा वैस्सा सुद्धा, ते तथागतप्पवेदिते धम्मविनये अगारस्मा अनगारियं पब्बजित्वा जहन्ति नामगोत्तानि समणा सक्यपुत्तिया त्वेव संघं गच्छन्ति यं भिक्खवे चत्तारोमे— पे॰— सम्यपुत्तिया त्वेव संघं गच्छन्ति— द्वयं भिक्खवे इमस्मिं धम्मविनये चतुथ्यो अच्छरियो अब्भुतो धम्मो यं दिस्वा दिस्वा भिक्खु इमस्मिं धम्मविनये अभिय्यन्ति[2]।

अत्रेदं चिन्तनीयं वर्तते यत् तथागतप्रवेदितधर्मे सर्वे समानाः, सर्वे भागं प्रहीतुं योग्याः सन्ति। किन्तु ते खलु आगारात् अनागारिको भूत्वा इमं धर्मं स्वीकुर्वन्ति। यो हि खलु इमं धर्मं स्वीकरोति, स आध्यात्मिकं जीवनं संधारयति, लौकिकं उपासकं जीवनं च कुत्सितमिति अनुमिनोति। अतएव भगवता अत्तदण्डसूत्रे प्रजानां जीवनस्य कलुषितं स्वरूपमुट्टङ्कितमिति। किञ्च कुत्रचिद् उपासकजीवनस्य माहात्म्यमपि उद्भावितमस्ति तद्यथा धनियसुते उपासकस्य धनियस्य आख्यानं हृदयमावर्जयति जनान्, तथापि बुद्धस्य जीवनक्रमः ततोऽपि बलवत्तरः प्रतिभाति, तस्मात् संन्यासः श्रेष्ठः, निवृत्तिमार्ग एवोचितः, इति हार्दो भावोऽस्ति तथागतानाम्। धनियगोपो बुद्धमभिलक्ष्याह[3]—

**पक्कोदनो दुद्धखीरोऽहमस्मि, अनुतीरे महिया समानवासो।**
**छन्ना कुटि आहितो गिनि अथ चे पत्थयसि पवस्स देव ।।**

इत्थं जल्पन्तं धनियं श्रुत्वा योगिराजो बुद्धो अन्यथाह—

**अक्कोधनो विगतखिलोऽहमस्मि अनुतीरे महियेकरतिवासो।**
**विवटा कुटि निब्बुतो गिनि अथ चे पत्थयसि पवस्स देव ।।**

---

1. अत्तदण्डसुत्त 2-5, सुत्तनिपात, पृ॰ 244।
2. चुल्लवग्ग 9।2।3।
3. धनियसुत्त सुत्तनिपात 1।

अनयोर्वार्तालापक्रमे जागतिकवैभवसमलंकृतस्य धनियगोपस्य सर्वो व्यवहारजातः संयमादिना युक्तोऽपि निर्वृतस्य योगिनो व्यवहारात् कनिष्ठ इति स्वीकृत्य योगिनं सरणमुपसर्पत्ययमिति। तस्मात् बुद्धकाले संन्यासिनः भिक्षवश्च श्रेष्ठतमा बभूवुरिति अनुमातुं शक्यते। भारतीयचिन्तनस्य वैशिष्ट्यमिदं यत् यो हि अनासक्तः गृहान्निर्गतो भवति, स हि श्रेष्ठो मन्यते। एतच्चात्र वार्तालापे दृश्यत एव— धनियगोपो आह—

**गोपी मम अस्सवा अलोला दीघरत्तं संवासिया मनापा।**
**तस्सा न सुणामि किंचि पापं, अथ चे पत्थयसि पवस्स देव।।**

तथागतः सत्यप्येवं भूते गार्हस्थ्यजीवने वर्तमाने पवित्रे गोपेऽपि तस्य प्रतिवादं कृत्वा स्वधर्मस्य महिमानं ख्यापयति तद्यथा—

**चित्तं मम अस्सवं विमुत्तं, दीघरत्तं परिभावितं सुदन्तं ।**
**पापं पन मे न विज्जति, अथ चे पत्थयसि पवस्स देव ।।**

एवमेवान्यदप्युक्तं यथा—

**उभसोरिव छेत्वा बन्धनानि नागो पूतिलतं व दालयित्वा**[1] **।**
**नाहं पुन उपेस्सं गब्भसेय्यं अथ चेपत्थयसि पवस्स देव ।।**

एवं जन्ममरणयोः चक्रमतिक्रामन्तं बुद्धं दृष्ट्वा तौ तं शरणं ययतुः। उक्तं यथा—

**लाभा वत नो अनप्पका, ये मयं भगवन्तं अद्दसाम ।**
**सरणं तमुपेम चक्खुम सत्था नो होहि तुवं महामुनि ।।**
**गोपी च अहं च अस्सवा, ब्रह्मचरियं सुगते चरामसे।**
**जातिमरणस्स पारगा, दुक्खस्सन्तकरा भवामसे**[2] **।।**

इत्थं परिज्ञायते श्रमणधर्मः तत्कालिके समाजे सम्मानित आसीत्। तस्मादेव चरित्रवन्तौ गार्हस्थ्यधर्मं पालयन्तौ तौ बुद्धं शरणं जग्मतुः। सुत्तनिपातः मानवाचारस्य तथैवालोकविधायको ग्रन्थो यथा उपनिषदः। सकलेऽपि वर्तमाने बुद्धसाहित्ये सुत्तनिपातस्य प्राचीनत्वेन गाथानां सुष्ठुसमाकलनेन धम्मपदादनधिकं महत्त्वं वरीवर्ति। उपनिषदः यद्यपि मूलतः चिन्तनप्रधानाः तथापि लोके गीतायाः एव प्रसिद्धिः। ग्रन्थेऽस्मिन् भारतीयत्त्वाचारानुशीलने एतयोर्वैशिष्ट्य-ख्यापनमेव परमं उद्देश्यमिति। यतो हि एतौ ग्रन्थौ भारतीयाचारस्य द्वे धारे अनुकुरुतः। अतः एतेषु विमृष्टा आचारा मूलभारतीयाचाराणां प्रतिष्ठापका भवितुमर्हन्तीति दृष्ट्याहं पाश्चात्याधुनिकीं दृष्टिमवलम्ब्य एतयोः धारयोः आचारक्रमं विमृशामि। आचारप्रस्थापकमानेषु

1. धनियसुत्त सुत्तनिपात-5,6,12।
2. धनियसुत्त सुत्तनिपात-15।

केचन बाह्याः, केचन आन्तरिकाश्च भवन्ति। तत्र बाह्या विधायकाः आचाराः समाजमधिकृत्य कृताः भवन्ति। आन्तरिकाश्च बुद्धिं सहजां प्रकृतिं वानुसृत्य जायन्ते। अतः एतेषु मध्ये सुत्तनिपातस्य आचारक्रमः विश्लेषणाभिमुखीक्रियते।

पूर्वोक्तधनियगोपतथागतयोः वार्तालापस्य विश्लेषणसन्दर्भे इदं सुनिश्चितरूपेणाकलितं यत् गार्हस्थ्यजीवनं निवृत्तिमूलकजीवनात् कनिष्ठमिति। किन्तु गार्हस्थ्यजीवनस्य नीतिप्रमापकाः केचन व्यवहाराः सन्ति। ये खलु निश्चितरूपेण तात्कालिकसमाजेषु अभिनन्दिता आसन्। सुत्तनिपातमधिकृत्य तान् विमृशामि—

## (क) बाह्या नीतिमूलका आचाराः

पिटकानां विवेचनद्वारा ज्ञायते यत् तदानीं ब्राह्मणाः कर्मकाण्डप्रधानं धर्ममधिकुर्वाणाः समाजे नैव सर्वजनप्रियाः आसन्, यद्यपि तेषु केचन ब्राह्मण-श्रमणाः श्रेष्ठा अपि[1] अमन्यन्त। ब्राह्मणश्रमणाः तदानीमपि पूज्यन्ते स्म। बुद्धेनापि श्रमणगुणविभूषितानां ब्राह्मणानां प्रशंसा[2] कृता। तथापि गृहस्थधर्मस्य तत्संसक्तजीवनस्य स्वाभाविकी या तृष्णा भवति तया मनुष्य आबध्यत एव। अतः बुद्धो निवृत्तिकामेन जनसंकुलदुःखमपवारयितुं श्रमणजीवनमेव श्रेष्ठममन्यत। सत्यपि तादृशे आदर्शे समाजस्य उपासकानां उपासिकानां जीवनं कथं भवेत् तदर्थं तेन केचन नियमाः उपदिष्टाः।

सुत्तनिपातस्य 'वसलसुत्ते' वृषलबोधकं कृत्यं समाचक्षाणेन बुद्धेन प्रोक्तम्—यः क्रोधी पापी मायावी विपन्नदृष्टिः स वृषलः। यः प्राणान् हन्ति, लोकं प्रति दयारहितः, अन्येषां अदत्तधनमाहरति, ऋणं गृहीत्वा पुनर्न ददाति, पथि गच्छन्तं जनं हत्वा तस्य वस्तूनि बलात् गृह्णाति, मिथ्यावादी, कामी, स्त्रीषु च सदा विचरणशीलः, सत्यपि सामर्थ्ये वृद्धान् न सेवते, पापं कृत्वापि नैव मया कृतमिति वदति, परगृहे शुचिभोजनं कृत्वा स्वगृहे अन्यान् न तथा भोजयति, यो गृहे समुपस्थितं श्रमणं ब्राह्मणं परुषवचसा अपसारयति, यो मोहेन विमोहितः मोहमभिलषन्नपि मिथ्यां वदति, यः आत्मप्रशंसां कुरुते, अन्यान् च निन्दति, क्रोधी, कदर्यः, पापः, मत्सरी, लज्जाहीनः, बुद्धं परिभावयति श्रमणं वा, तस्य श्रावको, अनर्होऽपि स्वमर्हं मनुते, स खलु वृषलत्वं धारयति[3]। न हि कश्चित् जन्मतो ब्राह्मणः श्रमणो वृषलो वा भवति, कर्मणा एव सः श्रमणो ब्राह्मणो वा जायते। तद्यथोक्तम्—

**न जच्चा वसलो होति, न जच्चा होति ब्राह्मणो ।**
**कम्मुना वसलो होति, कम्मुना होति ब्राह्मणो[4] 'ति ॥**

---

1. 'मुण्डा'पि हि इधेकच्चे ब्राह्मणा भवन्ति, तन्नूनाहं उपसङ्कमित्वा जातिं पुच्छय्यन्ति' सुत्तनिपात 3।4। –सुन्दरिकभारद्वाजसुत्त।
2. धम्मपद-ब्राह्मणवग्ग।
3. वसलसुत्तं –सुत्तनिपात 1-7।
4. वही 1-7-27।

एवं कर्मणः महिमानं लोके प्रतिष्ठापितवान् भगवान् बुद्धः। जातिवादस्य खण्डयिता स जात्या उच्चनीचभावनायाः खण्डनं चकार। वसिष्ठसुत्ते जातितः श्रेष्ठताक्रमस्य प्रश्ने भगवान् अवोचत्—वासेट्ठस्य प्रश्नोत्तरे पोस्करसादित्तारुक्षयोः शिष्यौ परस्परं श्रेष्ठताक्रममधिकृत्य विवदमानौ भारद्वाजवासिष्ठं भगवन्तमुपेत्य ऊचतुः[1]—

**अनुञ्ञातपटिञ्ञाता, तेविज्जा मयमस्मुभो**
**अहं पोक्खरसातिस्स, तारुक्खस्सायं माणवो**
**तेविज्जानं यदक्खातं, तत्र केवलिनोस्मसे**
**पदकस्मा वेय्याकरणा, जप्पे आचरियसादिसा**
**तेसं नो जातिवादस्मिं विवादो अत्थि गोतमो**
**जातिया ब्राह्मणो होति भारद्वाजो 'ति भासति**
**अहं च कम्मुना ब्रूमि, एवं जानाहि चक्खुमा॥**

अस्यामवस्थायां आवयोः परिचर्चयोरन्तो न भवति। तस्मात् आवां भवतः समीपमागच्छावः। भगवान् उत्तरयतु किं जातिः आहोस्वित् कर्म एव जनस्य श्रेष्ठत्वं निर्धारयति? ब्राह्मणत्वं हि तदानीं समाजे श्रेष्ठतायाः प्रतीकमासीदिति तु त्रिपिटकेषु वारम्बारं सञ्जातप्रश्नैर्ज्ञायते। एतस्य खण्डनं तत्र नैकधाभिहितम्। बुद्धेनापि ब्राह्मणत्वस्य जातिगतस्य निन्दा विहिता? किन्तु किं ब्राह्मणत्वं वर्तते, एतदपि परिभाषितं तेनैव, तस्मात् ज्ञायते ब्राह्मणत्वं खण्डयन् स लोकहृदयस्थितजनानामादर्शचरित्रं प्रदर्शयितुं तदेव स्वरूपं प्रतिपादितवान्, यत्स्वरूपं ब्राह्मणा तदानीं धारितवन्तः। यथा आङ्ग्लपराधीनताभिलाषिणोऽपि वयं तेषामाचाररीतिमनुकुर्मस्तथैव ब्राह्मणोच्चजातिविचारस्य द्वेषिणः तथागताः तेषामाचारस्य प्रशंसका बभूवुः। अतएव निन्दां कुर्वन्नसौ केन कर्मणा ब्राह्मणो भवतीत्यपि समुपस्थापयति।

यथा तृणेषु, प्राणिषु, चतुष्पदेषु, पादोदरेषु, मत्स्येषु लिङ्गगतो विभेदः, तथा मनुष्येषु नैवास्ति विभेदः तस्मादेवोक्तम्—

**यथा एतासु ज़ातीसु, लिङ्गं जातिमयं पृथु[2] ।**
**एवं नत्थि मनुस्सेसु लिङ्ग जातिमयं पुथु ॥**
**न चाहं ब्राह्मणं ब्रूमि, योनिजं मत्तिसम्भवं ।**
**भो वादि नाम सो होति सच्चे होति, सकिञ्चनो ।**
**अकिञ्चनं अनादानं, तमहं ब्रूमि ब्राह्मणं ॥**

1. वासेट्ठसुत्त 3।9। सुत्तनिपात।
2. सुत्तनिपात-वासेट्ठसुत्त 3।9।14,27।

**सब्बसंयोजनं छेत्वा, यो वे न परितस्सति।**
**सङ्गातिगं विसंयुत्तं, तमहं ब्रूमि ब्राह्मणं ॥**
**न जच्चा ब्राह्मणो होति, न जच्चा होति अब्राह्मणो।**
**कम्मुना ब्राह्मणो होति, कम्मुना होति अब्राह्मणो[1] ॥**

तथापि लोकव्यवस्थाकारकं किमपि तत्त्वमवश्यमेव अङ्गीकर्तव्यमिति धिया बुद्धेन भगवता अग्निहुतमुखं यज्ञस्य, सावित्रीमुखं छन्दसां, राजा मुखं मनुष्यानां, चन्द्रो मुखं नक्षत्राणां, तीक्ष्णेषु आदित्यो मुखं तथैव पुण्यपुण्यानुष्ठानेषु संघ एव मुखमभिहितम् तद्यथा—

**अग्गिहुतमुखा यञ्जा, सावित्ती छन्दसो मुखं ।**
**राजा मुखं मनुस्सानं, नदीनं सागरो मुखं ॥**
**नक्खतानं मुखं चन्दो आदिच्चो तपतं मुखं[2] ।**
**पुञ्जं आकङ्खमानानं सङ्घो वे यजतं मुख'न्ति ॥**

एतेनापि बाह्याचारविधायिकाः नीतयः प्रत्युक्ताः भवन्ति। राज्ञां यः सदाचारः राज्यनियमः स पालनीय एव, तथैव परम्परायाः यो हि विधिः सोऽपि पालनीय इति। तस्मादेव राजामुखो भवति समाजः। संघमुखो वा भवति धर्मः।

भगवता बुद्धेन किं शीलमिति अभिदधता प्रोक्तम्—

वृद्धोपसेवी, अनुसूयकः, कालज्ञः, समये समये गुरूणां दर्शनकर्ता, धर्मज्ञः उपदेशानां श्रोता, जडतां परित्यज्य धर्मानुष्ठानाय गुरुं समीपे समये गमनकर्ता, अर्थं धर्मं संयमं ब्रह्मचर्यं चानुसरति, यः स शीलवान् भवति। धर्मानुरूपं जीवनयापकः धर्मे स्थितः धर्मविनिश्चयज्ञः, धर्मसन्देहवादस्य अननुकारकः, हास्यं जल्पं, गल्पं, द्वेषं, मायां, गृद्धकभावं, मदरहिततां च परित्यज्य यः संयमेन विचरति सुभाषितं च अनुसृत्य समाध्यनुकूलं विचारं निर्मिणोति। आर्यप्रवेदिते धर्मे यः मनसा वाचा शरीरेण च रतो भवेत्, शान्त्या समाधिना शिष्टतया वा मनः श्रुतौ सलग्नं कृत्वा प्रज्ञासारमधिगच्छति, स एव शीलवान् भवति[3]। तद्यथा—

**बद्धापचायी अनुसुय्यको सिया कालञ्ञू चस्स गरुनं दस्सनाय**
**धम्मिं कथं एरियितुं खणञ्ञू सुणेय्य सक्कच्च सुभाषितानि**
**कालेन गच्छे गरुनं सकासं धस्मं निरङ्कत्वा निवातवुत्ति।**
**अत्थं धम्मं संयमं ब्रह्मचरियं अनुस्सरे चैव समाचरे च।**

किञ्च निवृत्तिप्रधानस्यास्य बुद्धमार्गस्य श्रावकाणां के धर्मा इत्यपि भगवता भिक्षुधर्मात् पार्थक्यमुक्तवता कथितम्—

---

1. वासेट्ठसुत्त 3।9।28,57 सुत्तनिपात।
2. सैलसुत्त 3।7।21,22 सुत्तनिपात।
3. किं सीलसुत्तं 2।9।

संसारे वसतां जनानां हिंसा मा कुर्याः, न वा केनचित् मारयेत्, तं न च तदर्थमनुमन्येद् वा सर्वेषां प्राणिनां नैव दण्डं विदध्यात्। अदत्तं यः नाहरति न च चोरयितुं प्रेरयति, इत्थं य सर्वमदत्ताहरणं परिवर्जयति स श्रेष्ठः श्रावकः। यो हि श्रावकः ब्रह्मचर्यम् आचरति अब्रह्मचर्यं च अङ्गारमिव मनुते स परदारमपि नैव अतिक्रामति। सभायां अनृतं न वदति, न परं प्रति अनृतभाषणाय प्रेरयति, स सर्वविधिना अनृतं परित्यजति, स एव गृहस्थः श्रावकः। यः मद्यं न पिबति, न य अन्यान् पातुं प्रेरयति, यतो हि अनेनैव पापं भवति, यः प्राणिवधं न कुरुते, स्तैन्यं चापि नानुकरोति, असत्यं न भणति, मद्यपो च न भवति, अब्रह्मचर्यात् मैथुनाद्वा प्रतिविरतः विकाले चापि न भुङ्क्ते, स गृहस्थः श्रावकः।

यः पुष्पमालां परिवर्जयति, गन्धं नानुसेवते, भूमौ शेते सर्वाङ्गपूर्णमुपोसकं च धारयति, प्रत्येकं पक्षे चतुर्दश्यां पूर्णिमायाम् अष्टम्यां वा प्रातिहार्ये काले अष्टाङ्गमुपोसकं पालयति। प्रसन्नो भूत्वा स भिक्षून् भोजयति, मातरं पितरं पोषयति, धार्मिकव्यवहारे यः स्वं नियोजयति, एवंभूतः व्रती गृहस्थः स्वयंप्रभनामके देवलोके उत्पद्यते। तद्यथोक्तं सुत्तनिपाते[1] —

**गहट्ठवत्तं पन वो वदामि यथाकरो सावको साधुहोति।**
**न हेसो लब्भा सपरिग्गहेन फस्सेतुं यो केवलो भिक्खुधम्मो।।**

**पाणं न हाने न च घातयेय्य न चानुजञ्ञा हननं परेसं।**
**सब्बेसु भूतेसु निधायदण्डं ये थावरा ये च तसन्ति लोके।।**

**पाणं न हाने न चादिन्नमादिये मुसा न भासे न च मज्जपो सिया।**
**अब्रह्मचरिया विरमेय्य मैथुना रत्तिं न भुञ्जेय्य विकालभोजनं।।**

**धम्मेन मातापितरो भरेय्य पयोजये धम्मिकं सो वणिज्जं।**
**एतं गिही वत्तयं अप्पमत्तो संयपभे नाम उपेति देवे'ति।।**

यद्यप्येतेषु उपदेशेषु अस्ति निवृत्तिधर्मस्य प्राधान्यं तथापि एतेन ज्ञायते यत् तत्काले काश्चन सामाजिक्यः राज्यकृताः नीतिनियन्त्रिताश्च रीतयः आसन्, याषामनुपालनेन श्रावकाः चरित्रवन्तः सभ्याः नागरिका उच्यन्ते स्म। पञ्चशीलेषु ये धर्माः भवन्ति तेषामनुपालनं न तदानीं यावत्कर्तुं शक्यते, यदि ते राज्यनियामकाः न स्युः, वज्जीजनानां पराभवकारणं ज्ञातवतां अजातशत्रूणां कृते बुद्धेन प्रोक्तम्—यावत् वज्जिजनपदस्य जना सप्तापरिहाणीयान् धर्मान् अनुपालयिष्यन्ति, ये स्वमेव तैनिर्मिताः, तावत् ते पराभवं नानुभविष्यन्तीति। इत्थं ज्ञायते यत् तात्कालिकराज्ये नियमानामनुपालनमावश्यकमासीदिति[2]।

भगवता बुद्धेन सामान्यानां धर्माणां पूजार्थं जनाः प्रेरिताः, धर्मस्य पूजनं परिपालनं मनुष्यैः तथैव कर्तव्यं, यथा इन्द्रस्य पूजनं देवैः क्रियते। अत्र धर्माः खलु सामाजिकनियमाः

---

1. सुत्तनिपात धम्मिक्सुते 2।14।18,19,25,29।
2. महापरिनिव्वाणसुत्त।

व्यवस्थाः वा कथ्यन्ते। इन्द्रश्च भवति राजा, राज्ञां पूजनं देवत्वयुक्तैः सर्वैरेव क्रियते। तस्मात् बुद्धकाले सामाजिका नियमाः आसन्नेव येषां परिपालनं पूजनं च जनैः क्रियन्ते स्म। तद्यथोक्तम्—

**यस्मा हि धम्मं पुरिसो विजञ्जा, इन्दं' व नं देवता पूजयेय्य।**
**सो पूजितो तस्मिं पसन्नचित्तो, बहुस्सुतो पातुकरोति धम्मं[1]॥**

बुद्धं गच्छन्तं दृष्ट्वा विम्बिसारः तदनन्तरं च तं पण्डरमुपतिष्ठन्तं विभाव्य तदन्तिकं गत्वा तस्य प्रथमे वयसि प्राप्तस्यैव विरागकारणं पृष्ट्वा प्रोवाच—भवान् युवा वर्तते, वर्णारोहेणापि भवान् क्षत्रिय इव प्रतिभाति, अतः भवान् कथं न रागादिना समायुक्तः सन् राज्यसुखमनुभवति। अहं भवन्तं तद्दातुं परिचिन्तयामि। अस्मिन् प्रसङ्गे पृष्टे जातिविवरणे बुद्धः स्वं शाक्यकुमारं उक्त्वा कामेभ्यः निवृत्त इति पर्यालोच्य भिक्षुविहारं सर्वोत्तमममन्यत। तस्मादेवोक्तम्—

**कामेस्वादीनवं दिस्वा नेखम्मं दट्ठु खेमते।**
**पधानाय गमिस्सापि, एत्थ मे रञ्जति मनोति[2]॥**

तस्मात् राज्ञां तत्र काले स्थितिवशात् ज्ञायते यत् राज्यशासनं धर्मव्यवस्थापनाय आसीदिति।

## (ख) देवानुशासनम्

लोकधर्मपालनाय यथा राज्ञां राज्यव्यवस्थायाः परिपालनमावश्यकं प्रतिभाति तथैव कदाचित् ईश्वरस्य अस्तित्वेनापि पापाचरणं प्रहीयते। बुद्धधर्मे यद्यपि ईश्वरो नास्ति, सुत्तपिटकेऽपि तस्याभावः दृश्यते तथापि बुद्ध एव भगवान् श्रेष्ठेषु श्रेष्ठतमः इति देवा भाषन्ते। नारदपर्वतौ तु देवौ सन्तौ अपि भगवन्तं प्रार्थयेते, भगवतो गुणानुवादमकुरुताम्—तस्मात् भगवन् ममापि रागादिवासनां दूरीकरोतु, प्रव्रज्यायां च शरणं गृह्णातु इति। तद्यथा—

**तस्स ते नागनागस्स, महावीरस्स भासतो**
**सत्वे देवानुमोदन्ति, उभो नारपदपब्बता।**

**नमो ते पुरिसाजञ्ञ, नमो ते पुरिसुत्तम**
**सदेवकस्मिं लोकस्मिं, नत्थिते परिपुग्गलो॥**

**तुवं बुद्धो तुवं सत्था, तुवं माराभिभू मुनि**
**तुवं अनुसये छेत्वा तिण्णो तारेसिमं पजं[3]॥**

---

1. नावासुत्त–सुत्तनिपात 2।8।1।
2. सुत्तनिपात पव्वज्जासुत्त 3।1।20।
3. सुत्तनिपात सभियसुत्त 3।6।34-36।

अत्र 'तिण्णो तारेसिमं पंजं इति कथनेन देवत्वं द्योत्यते। अतः बुद्धे भगवति देवानुभावनेनाथ च देवानुशासनेन ईश्वरत्वाभासः सम्पद्यते। येन दुर्गुणानां विलोपो भवति तथा कुर्वतः तस्य ऐश्वर्यं स्वत एव समागच्छतीति। तस्मादेव सभियः परिव्राजकत्वं तत्र बिभर्ति—

न केवलमेतदेव 'सेलो' ब्राह्मणः त्रयाणां वेदानां पारगः निघण्टुकल्पानां साक्षरप्रभेदज्ञानी, इतिहासपुराणस्यापि पारगः, वैयाकरणः, महापुरुषलक्षणज्ञः बुद्धमुपसृत्य तस्मिन् द्वात्रिंशत् महापुरुषलक्षणं विभाव्य धार्मिकं तं राजानं निश्चित्य एकांशं चीवरं कृत्वा येन भगवान् बुद्धो तेभ्यः साञ्जलिं प्रणम्य भगवन्तं आभिः गाथाभिः अध्यभाषत—

**यं तं सरणमागम्म, इतो अट्ठमि चक्खुम**
**सत्तरतेन भगवा, दन्तम्ह तव सासने ॥**

**तुवं बुद्धो तुवं सत्था तुवं माराभिभू मुनि**
**तुवं अनुसये छेत्वा, तिण्णो तारेसि'मं पजं ॥**

**उपधी ते समतिक्कन्ता, आसवा ते पदालिता**
**सीहो' सि अनुपादानो, पहीनभयभेरवो ॥**

**भिक्खवो तिसता इमे, तिट्ठन्ति पञ्जलीकता**
**पादे वीरे पसारेहि नागा, वन्दन्तु सत्थुनो[1] ॥**

इत्थं शैलब्राह्मणः बुद्धस्य देवत्वं धर्मराजत्वं च स्वीकृत्य शरणं जगाम। तस्मादेतेन आख्यानेन ज्ञायते यत् भगवान् बुद्धः स्वकाले देवत्वं प्राप्य नीतिनियमानाम् उपदेष्टा वक्ता च जात इति। यतो हि तस्मिन् श्रीकृष्णवत् विराड्रूपदर्शनस्यापि शक्तिः आसीत्। अतः स साक्षात् भगवान् एव। विराड्रूपवता तेनापि ऋद्ध्याभिसंस्कारेण कोषेन निगूढितं गुहावस्तिं शैलब्राह्मणाय प्रादर्शि तद्यथा[2]—

**"अथ खो भगवा तथारूपं इद्धाभिसंङ्खारं अभिङ्खासि यथा अद्दस सेलो ब्राह्मणो भगवतो कोसोहितं वत्थगुह्यं॥**

### (ग) आन्तरप्रमापकबुद्धिनियमाः

भगवतो बुद्धस्य धर्मो भारते बुद्धिवाद इव प्रसिद्धिमलभत। बुद्धेन भगवता तथैव आन्तरिकज्ञानेन लोकहितं भावयितुं यतितं यथा सुकरातेन सोफिस्टसमर्थकानां संदेहपरिव्याप्तजगन्मानसानां लोकानां नीतिगतैक्यभावना स्थापिता। भारते यज्ञेन कर्मकाण्डेन वा तथा अव्यवस्था—बोधो नैव आसीत्तथापि पशुहिंसया लोकमानसं संविग्नमवश्यमेवासीत्।

1. सेलसुत्त–3।7।23-26 सुत्तनिपात।
2. तत्रैव, पृ० 148।

अतो बुद्धस्योपदेशा बुद्धिमालक्ष्यैव आविभूर्ता इति सर्व एव आमनन्ति। बुद्धेन भगवता स्वोपदेशानां विस्तारः परिभ्रम्य जनमानसेषु कृत इति तेषां अशीतिवर्षपर्यन्तं देशाटनेन ज्ञायते। रागादीनां लघुत्वं विरागादीनां च महत्त्वं कथं भवतीति तेषां सुत्तनिपातगतादर्शगृहस्थजीवनं यापयतः धनियस्य स्वसंघप्रवेशस्य स्वशरणागमनस्य वा प्रेरणया बोध्यते। उद्बोधिते बुद्धे धनियो सपरिवारः बुद्धशरणं समागच्छति वक्ति च—

**गोपी च अहं च अस्सवा ब्रह्मचरियं सुगते चरामसे ।**
**जातिमरणस्स पारगा, दुक्खस्सन्तकरा भवामसे ॥**
**नन्दति पुत्तेहि पुत्तिमा, गोमिको गोहि तथेव नन्दति[1] ।**
**उपधीहि नरस्स नन्दना, नहि सो नन्दति यो निरुपधि ॥**

खड्गविषाणसुते भगवान् बुद्धः प्रज्ञावादिजीवनस्य स्वरूपमुद्भावयन् प्रोक्तवान्— बहुश्रुतः धर्मधरः उदारश्च जनः बुद्धिसम्पन्नान् प्रातिभयुक्तान् सार्धं कृत्वा लोकव्यवस्थापकं हितं समवेक्ष्य एकाकी विहरेत्, संसारं प्रति रतिं न कुर्यात्, रागात् विरहेत्, सत्यमेवाश्रयेत्। सम्पूर्णलोके मैत्री-करुणा-उपेक्षा-विमुक्ति-मुदिताभावनानां अभ्यासं विधाय एकाकी एव प्रचलेत्[2] ।

लोभद्वेषादिभिः संयुक्ताः जनाः कथं पराभवं प्राप्नुवन्ति तत्तु पराभवसुत्ते उट्टङ्कितम् भगवता। एते पराभवकारकाः धर्माः तथैव सन्ति यथा सोफिस्टानां अर्थलोलुपानाम् असंयतानां चरित्राणि आसन्। विवेकी भिक्षुः एतान् परिहाय आर्यदर्शनान्वितः लोकं भजते। यो हि एवं न परिभावयति स खलु एकादशभिः पराभवैः संयुक्तो जायते। तस्य धर्मद्वेषिणः, असत्यधर्मानुचारिणः षड्दोषदूषितस्य, मातापित्रोः अवमानकस्य, श्रमणब्राह्मणयोः असत्यप्रलापेन अपवारकस्य, सर्वधनसम्पन्नोऽपि अन्याननादृत्य एकाकिनः उपयोगिनः, स्वस्यजातेः सर्वोत्तमं स्वरूपं स्वीकृतवतः, सुरास्त्रीभ्यां समाकृष्टचेतसः, स्वां स्त्रियं परित्यज्य अन्यस्यां स्त्रियामनुरक्तस्य, वृद्धावस्थायां कृतोद्वाहस्य लोभयुक्तस्य वा पुरुषस्य पराभवो भवत्येव। तस्मात् विवेकी पुरुषः एतान् पराभवकारकान् दोषानपवार्य संतिष्ठते उक्तं यथा—

**एते पराभवे लोके, पण्डितो समवेक्खिय।**
**अरियो दस्सनसम्पन्नो, स लोकं भजते सिवं'ति[3] ॥**

इत्थं बुद्धेन पराभवकारणम् उक्तवा सत्याधिगतये दृष्टिभेदानां विलोपं विधाय धर्मस्य सत्यं ज्ञानमुपदिश्यते। य एवं कार्यं करोति स एव धर्माचारी महाप्राज्ञ उच्यते। एवंभूतः साधक आत्माधिष्ठितं अर्हन्त्वं परित्यज्य केवलं स्वस्यैव ज्ञानस्य उत्तमतायां नैव

---

1. धनियसुत्त–सुत्तनिपात 1।2।15-16।
2. तत्रैव खग्गविषाणसुत्त 1।3।24,25।39।
3. पराभवसुत्त, 1।6।25 सुत्तनिपात।

विश्वसिति, स खलु वर्गभेदं परित्यज्य सत्यं स्वीकुरुते। यस्य एवंभूतं ज्ञानमस्ति तस्य भावाभावयोः पुनरुत्पत्तिः नैव जायते। स खलु प्रशस्तो योगीति कथ्यते तद्यथा—

**दिट्ठिम्पि लोकस्मिं न कप्पयेय्य, ञाणेन वा सीलवतेन वा'पि**
**समो'ति अत्तानमनूपमेय्य, हीनो न मञ्ञेथ विसेति वा'पि ।**

**अन्तं पहाय अनुपादियानो ञाणे'पि सो निस्सयं नो करोति**
**स वे वियत्तेसु न वग्गसारी, दृट्ठिम्पि सो न पच्चेति किञ्चि[1] ।।**

ये खुल परिभाषासु स्वां प्रशंसामर्जयितुं हीनं कुत्सितं वा तर्कमुपस्थापयन्ति तेन च ते यदि अन्येषां पराभवं कृत्वा हसन्ति उन्नमन्ति, तर्हि एतेनापि ते स्वाभिमानमेव वर्धयन्ति। एतत्कृत्यं कदापि ज्ञानतः श्रेष्ठतां नैव भजते। अतो ज्ञानी सदैव मानापमाने विहाय सत्यं कृत्यमनुतिष्ठति। स च इह संसारे तथैव न लिप्यते यथा सलिले पद्मपत्रं नोपलिप्यते। तस्मात् ज्ञानिना सत्यं कृत्यं करणीयम्[2]। यथोक्तम्—

**एलम्बुजं कण्टकं वारिजं यथा, जलेन पङ्केन च नूपलित्तं ।**
**एवं मुनी सन्तिवादो अगिद्धो, कामे च लोके च अनूपलित्तो ।।**

यथा नचिकेता यमं मृत्युपारगमनस्य पन्थानं पृच्छति किन्तु यमः तम् शीघ्रं नैवोत्तरति तथैव मोघराजमाणवपरिपृच्छायां मोघराजो मृत्योः पारं गमनस्य बुद्धतः पन्थानं पृच्छति सोऽपि वारद्वयं पृष्टः सन् समादधाति—

**द्वाहं सक्कं अपुच्छिस्सं, न मे व्याकासि चक्खुमा**
**कथं लोकं अवेक्खन्तं, मच्चुराजा न पस्सति।।**

**सुञ्ञतो लोकं अवेक्खस्सु, मोघराजा सदा सतो**
**अत्तानुदिट्ठिं उहच्च, एवं मच्चुतरो सिया।**
**एवं लोकं अवेक्खन्तं मच्चुराजा न पस्सती'ति[3] ।।**

हे मोघराज! लोकं शून्यं ज्ञात्वा आत्मदृष्टिं च प्रहाय पारं गमिष्यति, एवंभूतस्य दृष्टिभेदयुक्तस्य संसारपारगमनस्य बोधो भवति। शून्यता खलु तत्त्वदृष्टिरस्ति बुद्धानां भगवताम्। अतएव नागार्जुनः शून्यतां दृष्टिं सर्वपारगमनस्य दृष्टिं विभावयन् ब्रूते—

**शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः ।**
**येषां च शून्यतादृष्टिस्तानसाध्यान् बभाषिरे[4] ।।**

---

1. सुत्तनिपात–परमट्ठकसुत्त4।5।
2. मागन्दियसुत्त 4।9।11 सुत्तनिपात।
3. मोघराजमाणवपुच्छा 5।16।3-4 –सुत्तनिपात।
4. मूल माध्यमिक कारिका–13।8।

यद्यपि शून्यतादृष्ट्या विमोक्षो भवति, किन्तु शून्यतायां यदि दृष्टिः बद्धमूला भवेत्, तर्हि पारगमनमसंभवमित्यपि ज्ञातव्यम्। अत्र नैतिकताचरणं ज्ञानमवलम्ब्यैव भवतीति बोद्धव्यम्। यः खलु ज्ञानं विना नैतिकतामनुबोधयति स खलु अयथार्थतां प्राप्नोति। तस्मात् यथार्थावगमाय बुद्धेराशयोऽध्यवसेय इति। तस्मादयमेव आन्तरिको बुद्धेः प्रमापको नियमो भवति नीतिविदाम्।

## साध्यमूलकाः नीतिनियमाः

### (अ) सुखवादः

साध्यमूलकेषु नीतिनियमेषु तावत् प्रथमं सुखवादस्य नियममुपतिष्ठते। पूर्वोक्तप्रसङ्गे प्रस्तुतस्य अस्य नियमस्य संवेगात् आकलनेन ज्ञायते यत् मनुष्यः तानि एवं कार्याणि करोति येषामनुपालनेन तेषां हृदये संतुष्टिः सञ्जायते। अत्र स्वाभाविक्याः इच्छाशक्तेः प्रथमं महत्त्वमुपस्थाप्यते। सुत्तनिपाते एवंभूतानां नीतिनियमानां यद्यपि नास्ति बहुत्र चर्चा, तथापि यत्र कुत्रचित् प्राप्यत एव।

विम्बिसारः बुद्धस्य स्वरूपं दृष्ट्वा प्रव्रज्यायाः कारणं पृच्छति। भगवान् युवा, अल्पवयस्कः, सुन्दर शरीरेण मनोहरः, जात्या क्षत्रिय इव परिलक्ष्यते। एवं तर्हि कथं लोके हस्तपादेन युक्तः सम्पत्त्या च समायुक्तः भवान् स्वजीवनं न यापयति। अत्र भगवान्बुद्धः झटिति ब्रूते— अहं क्षत्रियः कोशलस्य राजकुले समुत्पन्नः शाक्यकुलीनः, किन्तु मम कुले कामोपभोगानां कामना नैवेदानींमुपस्थाप्यते। सांसारिकेच्छानां दुष्परिणामं ज्ञात्वैव तपसा तेषां निष्फलत्वं परिभाव्य मया एष मार्गः स्वीकृतः। तस्मान्न मह्यं गार्हस्थ्यं रोचते[1] —

**युवा च दहरो चासि, पठमुप्पत्तिको सुसु**
**वण्णरोहेन सम्पन्नो, जातिमा विय खत्तियो ।।**
**सोभयन्तो अनीकग्गं, नागसङ्घपुरक्खतो**
**ददामि भोगे भुज्जस्सु, जातिं अक्खाहि पुच्छितो ।।**

अत्र बुद्धो ब्रूते—

**उजुं जनपदो राजा, हिमवन्तस्स पस्सतो**
**धनविरियेन सम्पन्नो, कोसलेसु निकेतिनो ।**
**आदिच्चा नाम गोत्तेन, साकिया नाम जातिया**
**तम्हा कुला पब्बजितो 'म्हि, न कामे अभिपत्थयं ।**
**कामेस्वादीनवं दिस्वा नेक्खम्मं दट्ठु खेमतो**
**पधानाय गमिस्सामि, एत्थ मे रज्जति मनो 'ति ।।**

---

1. सुत्तनिपात पब्बज्जासुत्त 3।1।16।20।

सुत्तनिपाते मागन्दियसुते मागन्दियो ब्राह्मणः कामानुरूपं सर्वोत्तमं जीवनं मत्वा बुद्धाय स्वां कन्यकां दातुं प्रस्तौति। तत्र बुद्धः तृष्णामूलकस्य रागस्य सुखस्य गर्हितत्वं प्रतिपादयति। वक्ति च[1]—

**दिस्वान् तण्हं अरतिं च रागञ्च नाहोसि छन्दो मैथुनस्मिं**

**किमेविदं मुत्तकरीसपुण्णं, पादा'पि न सम्फुसितुं न इच्छे ॥**

**एतादिसं चे रतनं न इच्छसि, नारिं नरिन्देहि बहूहि पत्थितं**

**दिट्ठिगतं सीलवतानुजीवितं, भवूपत्तिञ्च वदेसि कीदिसं ॥**

अत्र यद्यपि बुद्धो रागरक्तो न जातः तथापि लोके तु जीवनस्य स्वरूपं गृहरागेण संशक्तं आसीदिति आकल्प्यते। बुद्धोऽत्र अमीषु रामासु नचिकेता इव भागन्दियस्य कन्याकायां मलमूत्रपुरीषत्वं पश्यति, किन्तु स्वाभाविके मानुषे जीवने एतन्नैव विभाव्यते। मन्ये समाजे सुखप्रबोधजनिका तु एषा रागवृत्तिः आसीत्, तस्मादेव राज्ञा विम्बिसारेण ब्राह्मणेन मागन्दियेन च सामाजिकानां जीवनस्य बारंबारं स्वरूपमाकलयितुं बुद्धाः प्रार्थिताः। यद्यपि अत्र भौतिकेषु वस्तुषु बुद्धस्य रागो नोपलभ्यते, किन्तु तदानीन्तनसमाजे एष राग आसीदिति वक्तुं शक्यते। वस्तुतस्तु साधारणो जनः सुखप्राप्तिविषयकमाचरणमेव अनुतिष्ठतीति संक्षेपः।

**(ब) अध्यात्मवादः**

आध्यात्मिकजीवनसम्पादने बुद्धस्य उपदेशानां सर्वत्रैव संयोजनमिति तु संल्लक्ष्यत एव। सर्वत्र प्रवृत्तिहेतूनामपवारणं विधाय निवृत्तिहेतूनां समाकलनं खलु अध्यात्ममार्गस्य प्रेरकं भवति। संसारे खलु ज्ञानवान् ऋषिः रैक्वः संसारस्य किं मूलमिति प्रश्नस्योत्तरं तदेव परिददाति यदा धनधान्यसंकुलः सन् स्त्रिया संयुक्तो भवति। किन्तु बुद्धस्तु मागन्दिकेन प्रदत्तायां कन्यकायां मलमूत्रपुरीषत्वं परिभावयति। अस्यामवस्थायां स रागात् विरागं प्रति अभिमुखोऽपि संसारगामिनं पन्थानं सर्वेषां कृते उद्धाटयति। अयं मार्गः खलु अध्यात्मत्मार्ग इत्यपि वक्तुं शक्यते। बुद्धस्य सर्वे उपदेशाः अध्यात्ममार्गेण युक्ताः आसन्निति। यत्रैव भौतिकमार्गेण उपमा दीयते तत्रैव तदनुरूपोऽध्यात्ममार्गो बुद्धेनोपस्थाप्यते। यथा कसिभारद्वाजसुत्ते कसिभारद्वाजः स्वस्य भोजनस्य उपलब्धये कृषिकार्यस्य प्रशंसां कुरुते तदा च बुद्धस्योपरि भोजनाय कृषिकार्यस्य महत्त्वमुपस्थापयति, तदानीं बुद्धोऽब्रवीत्—

हे काश्यप! त्वं स्वं कृषकं मन्यसे, परं मां न तथा अवगच्छसि। अहमपि कृषककार्यं करोमि तद्यथा— मम श्रद्धाभावना बीजमिवास्ते, तपश्चर्या वृष्टिः, प्रज्ञा च मे युगलाङ्गले स्तः, लज्जा मे हरीषस्य दण्डो भवति, मनो योतकमस्ति, स्मृतिः च मम फालपाचनी, शरीरेणाहं संयतः, वचनेनापि संयतः, आहारेण संयमसमायुक्तः तथैव परिमितं

1. सुत्तनिपाते मागन्दियसुत्ते 4।9।1,2।

भोजनं करोमि, येन सत्यं मे निदानं भवेत्। एवंभूतस्य मम कृषिकार्यस्य अर्हत्वं फलं जायते। अस्मिन् अर्हत्वफले वीर्यं मे बलिवर्दौ भवतः, वीर्यरूपबलीबर्दाभ्यामहं तादृशं कृषिकार्यं करोमि येन अमृतं कृषि फलं लभते। दुःखानि च परिसमाप्यन्ते। एवमुक्ते गौतमे ऋषिभारद्वाजः तस्मै श्रद्धया पायसं प्रददौ। किन्तु दत्तोपदेशानाम् अनन्तरं प्राप्तं वस्तु बुद्धैः न स्वीक्रियते। ततः कस्मै पायसं दद्यादिति पृष्टो बुद्धः तस्य पायसस्य जले निक्षेपाय उपदेशं दत्तवान्। तथा कृते सति जलतो चिटचिटायति, संघूषयति इति शब्दः संजायते, तस्मात् तथाभूतात् शब्दकृतपायसात् बुद्धस्यैवायं महिमा इति ज्ञात्वा ऋषिभारद्वाजः तादृशोच्चारणस्य कारणमज्ञात्वा बुद्धस्य शरणं जगाम[1]।

अध्यात्मजीवने रहस्यस्य भवति महत्वपूर्णं स्थानं, पायसे चिटचिटायतीति शब्दाह्वानं जले निक्षिप्ते किमपि रहस्यस्यैवावकलनमिति तस्मात् बुद्धः अध्यात्मवादी रहस्यवादी च कथ्यते।

अध्यात्मरस एव बुद्धोपदेशनानां प्रधानरसः, सुत्तनिपातस्य प्रारम्भत एव अध्यात्मरसः प्रवहति, अन्तोऽपि अनैनैव समायाति। भिक्षुः कथं भवति इत्यस्मिन् प्रसङ्गे भगवान् बुद्धो ब्रवीति— यः खलु रागमशेषं समुच्छिन्नवान्, कमलपुष्पमिव सरसि प्रविश्य, तृष्णां, मानं, असूयां बन्धनानि नीवरणानि च कर्तितवान्। स खलु स्वां जीर्णत्वं परित्यज्य नूतनां त्वचं धारयति, अध्यात्मशरीरेण च एकाकी विहरन् संसारपारं गच्छति[2]। बुद्धो भगवान् संसारदुःखैर्न तथा परिक्लृष्टोऽभूत्, येन सः कदापि जनानां रागोत्पादकव्यासङ्गानां संश्लेषणमपि नैव स्वीकरोति। खग्गविषाणसुते एकाकी न रमते इति औपनिषदं सिद्धान्तं प्रबाध्य एकाकी रमते इति सिद्धान्तमेव प्रस्थापितवान्। अस्मिन् युगे स्वातन्त्र्योत्पादके महात्मनि गांधिमहाभागे मन्ये एष एकाकी रमते इति सिद्धान्तस्तत एव समागतः। यद्यपि आधुनिकाः गान्धिमहोदये अस्यागतसिद्धान्तस्य प्रभावं टैगोरकृतमामनन्ति 'एकला चलो रे' इत्यस्याख्यानतः, तथापि भारतीयसांस्कृतिकवाङ्मयस्य विश्लेषणेन मन्ये अयमेकाकी रमते' इति राद्धान्त बुद्धप्रयुक्तः खग्गविषाणसुत्ततःसमागत इति। संसर्गमात्रेण एव मानवः दुःखी भवति, तस्मादेव संसर्गभावकं सर्वं परित्यक्तव्यम्। तद्यथा—

**संसग्गजातस्स भवन्ति स्नेहा, स्नेहान्वयं दुक्खमिदं पहोति**
**आदीनवं स्नेहजं पेक्खमानो, एको चरे खग्गविसाणकप्पो[3]॥**

रागं संसर्गं वानुसृत्य बुद्धधर्मे अभिधम्मसिद्धान्ता निर्मिताः। रागोऽपि प्रथमः अकुशलेषु चित्तेषु, गण्यते तस्मादेव रागस्य प्रहाणं भिक्षुभिः सदैव कर्तव्यम्। भगवान् बुद्धो महाभिषग्

1. कसिभारद्वाजसुत्त–सुत्तनिपात।
2. उरगसुत्त–सुत्तनिपात।
3. सुत्तनिपाते, खग्गविषाणसुत्त 1।2।1।

मन्यते, अतएव तेन महात्मना रागरोगस्य अपवारणाय यावत्यः ओषधयः प्रयुक्तास्ता निश्चितरूपेण भारतीयवाङ्मये अध्यात्मशास्त्रस्य अमूल्यानि निदर्शनानि भवन्ति। तेन जनानां एकाकिनां विहरणस्य निदर्शनं खड्गविषाणेनैव उपमीयते। अयं त्यागभावः कथं जनेषु आगच्छेत् इत्येवासीत् बुद्धानां भगवतां हार्दो भावः।

त्यागः खलु न केवलं भावनाश्रितः स्यादपितु बुद्ध्याधारितो भवेदित्येन... श्रामण्यस्य माहात्म्यं प्रतिपादयति। एतच्च कासिभरद्वाजसुत्ते कृषिकर्मतः संन्यास... प्रतिष्ठां प्रतिपादयन् ब्रूते[1]—

**एवमेसा कसी कट्ठा, सा होति अमतप्फला ।**

**एतं कसिं कसत्वान, सब्बदुक्खा पमुच्चती 'ति।।**

पूर्वं मया गृहस्थधर्मापेक्षया निवृत्तवादस्य श्रेष्ठतां प्रतिपादिता गृहस्थधर्मात् ... श्रेष्ठं भवति। आध्यात्मे चेदं अमृतं फलं ददाति। धम्मिकसुत्ते भिक्षुश्रावकयोर्जन... उपस्थिते भगवन्तमुपसृत्य धम्मिको लोकहितप्रतिष्ठापकवचनानां ज्ञानं बुद्धात्कर्तुं प्रार्थयत, यतो हि असौ बुद्धः देव-मनुष्य-ब्राह्मणेषु श्रेष्ठतमः आसीदिति तद्यथोक्तम्[2]—

**तुवं हि लोकस्स सदेवकस्स, गतिं पजानासि परायणं च ।**

**न चत्थि तुल्यो निपुणत्थदस्सी, तुवं हि बुद्धं पवरं वदन्ति।।**

तस्मात् निवृत्तस्य बुद्धस्य ज्ञानेनापि प्रभाविताः तदानीन्तनाः तस्याध्यात्मिकीं सम... स्वीकृत्य श्रेष्ठतां चामन्यन्त।

संबुद्धस्य महाकारुणिकस्य भौतिकाः कामाः नैव प्रबाधन्ते। महावग्गे प्रधानसुत्ते तपसा क्लिष्टस्य बुद्धस्य तपश्चर्याः दृष्ट्वा तस्याध्यात्मिकं चातिवृद्धिं विभाव्य भीतो मारः स्वां सेनां सज्जीकृत्य बुद्धान् उत्कम्पयितुं प्रवृत्तः। एवं मारसेनायाः कामना, अरतिः, क्षुत्पिपासा, तृष्णा, स्त्यानमिद्धं, भीतिः, विचिकित्सा, ईर्ष्या, जडता च सैन्यशक्तयः समागत्य बुद्धं प्रवञ्चयितुं यतितवत्यः। बुद्धस्ताः दृष्ट्वा अभाषत—

**एषा नमुचि ते सेना, कण्हस्साभिप्पहारिणी**

**न तं असूरो जानाति, जेत्वा च लभते सुखं ।**

**एस मुञ्जं परिहरे, धिरत्थु इध जीवितं**

**संगामे मे मतं सेय्यो, यं चे जीवे पराजितो[3] ।।**

---

1. कसीभारद्वाजसुत्त 1।4।5 सुत्तनिपात।
2. धम्मिकसुत्त 2।14।2 सुत्तनिपात।
3. पधानसुत्त 3।2।15-16 महावग्ग –सुत्तनिपात।

तस्मात् मारसेना सप्तवर्षाणि यावत् भगवन्तं बुद्धं पराजेतुं तमुपजगाम, किन्तु बुद्धः स्मृतिमान् तृष्णा-राग-समलंकृतेन मारसैन्येन नैव विभीतोऽभूत्। अतः मारः परावृत्तः सन् कथयति—

**सत्त वस्सनानि भगवन्तं, अनुबन्धिं पदा पदं।**
**ओतारं नाधिगच्छिस्सं, सम्बुद्धस्स सतीमतो[1]॥**

तस्मात् शोकपरिवृत्तो मारः स्ववीणया सह दुर्मनो भूत्वा शान्तचित्तस्य अध्यात्मबलविशिष्टस्य बुद्धस्य सम्मुखात् परावृत्तः।

यो हि भिक्षुरागानपाकृत्य विरागमनुसेवते, स खलु सकलां कामनां परित्यज्य अकामी भवति। अकामस्य कापि वासना कोऽपि रागो नैव परिभवति। स च उच्चनीचभावनाभ्यामपि विमुक्तः सन् ब्राह्मणो भवति। अकामी संयोजनानां छेदनकर्ता एकाकी भ्रमणशील एव ब्राह्मणः कथ्यते—

**सब्बसंयोजनं छेत्वा, यो वे न परितस्सति।**
**सङ्गातिगं विसंयुत्तं, तमहं ब्रूमि ब्राह्मणं[2]॥**

एवं ब्राह्मणरूपो भिक्षुः अशान्तिरहितः अव्यूहशल्यशान्तचित्तः सर्व्वशोकमतिक्रम्य अशोकात्मकं निर्वाणं पदं लभते। तद्यथा—

**अब्बूळ्हसल्लो असितो, सन्ति पप्पुय्य चेतसो ।**
**सब्बसोकमतिकन्तो, असोको होति निब्बुतोति[3] ॥**

एवं भूतः निर्वृतो भिक्षुः श्रमणो नैव बहुभाषते। स तु तदैव ब्रूते यदा तत्समक्षमुपेतमर्थमागच्छति। यो खलु ज्ञानेन संयुक्तोऽपि मौनभावेन इच्छासम्पन्नानां हितभावमवेक्ष्य ब्रूते उपदिशति च स मुनिः, अध्यात्मवादी कथ्यते। तद्यथा—

**यं समणो बहुभासति, उपेतमत्थसंहितं**
**जानं सो धम्मं देसेति, जानं सो बहु भासति ।**
**यो च जानं संयतत्तो, जानं न बहु भासति**
**स मुनी मोनमरहति, स मुनी मोनमज्झगा[4]॥**

---

1. सुत्तनिपात - महावग्ग - पधानसुत्त 3।2।22।
2. सुत्तनिपात - महावग्ग - वासेट्ठसुत्त 3।9।28।
3. सुत्तनिपात - महावग्ग - सल्लसुत्त 3।8।20।
4. सुत्तनिपात - महावग्ग - नाळकसुत्त 3।11।44,45।

### (स) पूर्णतावादः

सुत्तनिपाते पूर्णतावाद इव कश्चिद्वादः अन्यो वादशब्देन नोपलभ्यते। किन्तु चिन्तनशीलप्रवृत्तिषु तत्त्वानुशीलनविधौ पूर्णताकामः भवति एव आध्यात्मिको जनः। भिक्षूणां स्वरूपमुत्ख्यापयता नालकसुत्ते पूर्णत्वस्वरूपमुद्भावितं भगवता। तद्यथा—

**यदूनकं तं सणति, यं पूरं सन्तमेव तं**
**अट्ढकुम्भूपमो बालो, रहदो पूरो'व पण्डितो[1]॥**

यः खलु अल्पो भवति (रिक्तो भवति) स खलु बहु भाषते, यश्च पूर्णः स गाम्भीर्येण शान्तः सन् इच्छारहितः आक्रोशरहितः पण्डितो भवति। पण्डितैः सर्वदा पूर्णतायै यत्नः समाचरितव्यः। अल्पता खलु जीवने वैषम्यम् आनयति, वैषम्यमानेतुं अल्पत्वं दूरीकर्तुं पण्डितैः अल्पोदके पलायमानो मत्स्य इव तृष्णासमन्वितं जीवनं परिहापितव्यम्। यश्च खलु अन्तद्वयं परिजानाति अननुगृद्धो भवति, आत्मानम् अनिन्द्य दृष्टिषु नोपलिप्यते। स शान्तो धीरःपूर्णश्चोच्यते[2]—

**उभोसु अन्तेसु विनेय्य छन्दं, फस्सं परिञ्ञाय अनानुगिद्धो**
**यदत्तगरही तदकुब्बमानो न लिप्पति दिट्ठसुतेसु धीरो॥**

पूर्णतायां आप्तकामो भवति जनः। कस्याञ्चित् दृष्टौ कस्मिंश्चिद् वादे वा न भवति रागः, न वा द्वेषः मुनेः। यश्च भिक्षुः शान्तः उपशान्तो वास्ति स रागरहितः सन् आर्यं धर्मं वेत्ति[3]।

आर्यस्य न कुत्रापि भवति आसक्तिः, स खलु सीमातिगः, सर्वं दृष्टं श्रुतं स्मृतं वा यत् भवति दृष्टिग्राहे तत्सर्वमपनयति, यतो हि तेन सत्यधर्मः साक्षात्कृतः। स न तु रागेषु अस्ति लिप्तः न च विरागेषु एव सन्दधाति। यतो हि तस्यार्थः किमपि ज्ञेयो नास्ति न वा कामयितव्यो वर्तते। अतः तत्त्वदर्शी मुनिः भूरिप्रज्ञः नैव उच्चावचं पश्यति लोके। स तु पापानि परित्यज्य सीमानं पापकरणस्य परित्यजति। तस्मात् शान्तो विद्वान् सर्वं सत्यं धर्मं वेत्ति[4]।

परमट्ठकसुत्ते भगवान् दृष्टिरहितानां श्रेष्ठतां ख्यापयन् ब्रूते— यो हि खलु स्वां दृष्टिं सर्वोत्तमां मनुते, अन्येषाञ्च, अधमां, स वादेषु आपतति। यो हि भिक्षुः स्वेन दृष्टे श्रुते शीलव्रते वा गुणभावं स्थापयति, अन्यस्मिन् च हीनभावं सोऽपि विवादेषु आपतति। तस्मात् सर्वां दृष्टिं परित्यज्य अहन्त्वं चापि निरस्य व्यत्ययेषु वर्गचारी न भवेत्। दृष्टिं

1. सुत्तनिपात - महावग्ग - नालकसुत्त 3।11।43।
2. सुत्तनिपात - अट्ठकवग्ग - गुहट्ठकसुत्त 4।2।7।
3. सुत्तनिपात - अट्ठकवग्ग - दुट्ठट्ठकुसुत्त।
4. सुत्तनिपात - अट्ठकवग्ग - सुद्धट्ठकसुत्त।

परित्यज्य अहन्त्वं चापि निरस्य व्यत्ययेषु वर्गचारी न भवेत्। दृष्टिग्राहेण आसक्तयः, समुद्भवन्ति सत्यधर्मबोधेन च ताः अपहीयन्ते। यो हि ब्राह्मणः श्रमणो वा एवंविधं शीलव्रतपरामर्शं दृष्टिसमन्वितं न करोति। स एव भवसागरस्य पारं याति। तस्मात् दृष्टिरहितेन भवितव्यम्— तद्यथा—

**तस्सीध दिट्ठे व सुते मते वा, पकप्पिता नत्थि अणूपि सञ्ञा**
**तं ब्राह्मणं दिट्ठमनादियानं, केनीध लोकस्मिं विकप्पयेय्य[1]॥**

दृष्टि(आग्रह)हीनःखलु संसारस्य अनित्यतां, लोभस्य अयाथार्थ्यं ज्ञात्वा कमलपत्रे जलावास इव[2] संसारे नोपरज्यते। विवादं[3] परित्यज्य आग्रहहीनो जनः आसक्तिरहितो भवति[4]। स कस्याञ्चिदपि दृष्टौ अनापतिताम् आध्यात्मिकीं शान्तिमधिगच्छति। तद्यथोक्तम्—

**इदं वदामीति न तस्स होति (मागन्दियाति भगवा) धम्मेसु निच्छेय्य समुग्गहीतं[5]।**
**पस्सञ्च दिट्ठीसु अनुग्गहाय, अज्झत्तसन्तिं पचिनमदस्सं।**

यश्च खलु आध्यात्मिकीं शान्तिं प्राप्तवान्। तस्य अनवेक्षस्य जनस्य सांसारिकबन्धनानि न भवन्ति, उपशान्तश्च[6] स जायते। पूर्णकामश्चाप्यसौ अनासक्तः दृष्टिरहितश्च भवति। यो हि एवंविधो जानीते, स सत्याधिगतये नैव विवदते इदञ्चैकं सत्यं श्रमणाः वदन्ति तद्यथा[7] —

**एकं हि सच्चं न दुतियमत्थि यस्मिं पजानो विवदे पजानं।**
**नाना ते सच्चानि सयं थुनन्ति तस्मा न एकं समया वदन्ति॥**

तस्मात् मुक्तकामो जनःप्रपञ्चस्य मूलमहंकारमिति मत्वा स्मृतिसम्पन्नो रागान् परित्यज्य विहरत्। उक्तञ्चैतद् भगवता तुवटकसुते देवानधिकृत्य—

**मूलं पपञ्चसंखाय (इतिभगवा) मन्ता अस्मीति सब्बसुपरुन्धे**
**या काचि तण्हा अज्झत्तं तासं विनया सदा सदा सतो सिक्खे**

एवमस्मीति रूपिकां विद्यां विद्यया श्रद्धास्मृति-समाधिना अपच्छेदं भावयति भिक्षुः। इमां विद्यां यो जानाति, सः शान्तो भवति।

---

1. परमट्ठकसुत्त 4।5।7 अट्ठकवग्ग –सुत्तनिपात।
2. जरासुत्त 1,6,9 अट्ठकवग्ग।
3. तिस्समेतेय्यसुत्त 10 अट्ठकवग्ग।
4. वही।
5. सुत्तनिपाते मागन्दियसुत्त 4।9।3 अट्ठकवग्ग।
6. पुरासेहसुत्त अट्ठकवग्ग।
7. चूलवियूहसुत्त 4।14।2 अट्ठकवग्ग।

पारायणवग्गे बाबरिशिष्यस्य वावरीप्रयुक्तप्रवचनस्योत्तरणे भगवान् ब्रूते—

**अविज्जा मुद्धाति जानाहि, विज्जा मुद्धाधिपातिनी**
**सद्धासतिसमाधीहि, छन्दविरियेन संयुता[1]॥**

अत्र मूर्द्धा तं निपतिष्यतीति याज्ञवल्क्यागार्ग्योः सम्वाद इव साम्यं बिभर्ति। अतः अतिप्रश्ने कृते सति श्रद्धास्मृतिसमाधीनाम् उपदेशा विधीयन्ते। येन तत्त्वसाक्षात्कारः पूर्णतावाप्तिश्च भवेताम्। अन्यथा तर्कोऽप्रतिष्ठ इव अतिप्रश्नानां प्रयोगे शान्तेः पूर्णतायाश्च अभावः स्यादिति। तस्मात् पूर्णतावादः कथञ्चिद् सुत्तनिपातेऽपि दृश्यत एव।

## (द) मूल्यमीमांसा

बुद्धस्य नीतिमीमांसकत्वेन लोके प्रसिद्धिः। नीतौ मूल्यानां परिपालनं यैः विधीयते स खलु धर्मात्मा उच्यते। यश्च एवं न करोति स अधर्मात्मा इति। भगवान् बुद्धःकिमुचितम् किमनुचितमिति सर्वत्रैव उपदिशति। सुत्तनिपाते आदितो आरभ्य पारायणवर्गान्तं सर्वस्मिन्नेव वर्गे मूल्यानि मीमांसितानि सन्ति।

उरगवर्गे भिक्षुमालक्ष्य भगवता बुद्धेन प्रोक्तम्—यश्च खलु क्रोधं नोत्पादयति, अशेषं रागम् उच्छिनत्ति, तृष्णा-मान-वितर्कादिप्रपञ्चातिरिक्त-अनुशयहीनः सः खलु संसारं जहाति[2]। धनियसुत्ते संसारात् अध्यात्मं श्रेष्ठम् इत्यस्मिन् प्रसंगे संसारस्य हीनतरत्वं प्रतिष्ठाप्यते। अतएव धनियः भगवतो बुद्धस्य गर्भावक्रान्तो पुनरनुत्पादकस्य गाथां श्रुत्वा तं शरणं गच्छति[3]।

खड्गविषाणसुत्तेऽपि कामनानां परित्यागेन सह एकाकिगमनस्य वैशिष्ट्यं प्रतिपाद्यते। एकाकिगमने सति सर्वाणि संयोजनानि विनष्टानीव भवन्ति गमकश्च स्वयमपि तं विनाशयति। तद्यथोक्तम्[4]—

**रागं च दोसं च पहाय मोहं, संदालयित्वा संयोजनानि ।**
**असन्तसं जीवितसंखयम्हि, एको चरे खग्गविसाणकप्पो ॥**

कसिभारद्वाजसुत्ते कृषिकर्मणो माहात्म्यं स्वीकृत्य अध्यात्मकृषेः सामान्यकृषिकर्मतोऽधिकं मूल्यं भवतीति चमत्कारप्रदर्शनेन भारद्वाजब्राह्मणं चमत्करोति। तेन प्रभावितः भारद्वाजः बुद्धस्य शरणं याति। अत्र श्रद्धाख्यं मूल्यं बीजमिव, प्रज्ञां च युगलाङ्गलमिव, ह्रीश्च

---

1. पारायणवग्ग - वत्थुगाथा 5।1।51।
2. उरवग्ग - उरगसुत्त।
3. उरकवग्ग - धनियसुत्त।
4. खग्गविषाणसुत्त 1।3।40 उरगवगम –सुत्तनिपात।

हरिषमिव, मनः सन्धानमिव, स्मृतिः प्रवारकमिव फालकर्मणो आध्यात्मिकं स्वरूपमत्र प्रदर्शितम्। एतेन कृषिकर्मणा दुःखनाशो जायते तद्यथोक्तम्[1]—

**एवमेसा कसी कट्ठा सा होति अमतप्फला ।**
**एतं कसिं कसित्वान सब्बदुक्खा पमुच्चतीति ।।**

के पराभवकारकाः दोषाः? के चापराभवकारका इति पराभवसुत्ते सातिशयेन प्रदर्शितम्। तद्यथा— यो हि जनः दुर्जनं स्वीकरोति, सन्तं परिहरति, असत्यं धर्मं चरति, स खलु पराभवं याति[2]। एवमेव निद्रालुः, पित्रोः असेवकः, मृषावादी, जातिमानी, व्यभिचारी, वृद्धावस्थायां युवतीपत्नीकार्यः, धनलोभी च भवति, स पराभवं व्रजति।

वृषलसुत्तेऽपि मूल्यविहीनानां आचरणानामपवारणाय निर्देश आस्ते। जातेश्च कर्मपरत्वं तत्र निर्दिष्टं भगवता। तद्यथा—

**न जच्चा वसलो होति, न जच्चा होति ब्राह्मणो।**
**कम्मुना वसलो होति कम्मुना होति ब्राह्मणो[3] ।।**

मेत्तसुत्ते कुशलभावनानां सातिशयो विमर्शः, ब्रह्मविहाराणां च अनेकशः संस्तवनमास्ते। एवमेव हेमवते सुत्तेऽपि बुद्धगुणानां महती अनुशंसा दृश्यते। अत्र हेमवतनामकेन यक्षेण बुद्धात् अध्यात्ममार्गस्य पन्थाः पृष्टः। स च तं गंभीरभावेनोपदेशं ददाति! ततः हेमवतः बुद्धगुणान् श्रुत्वा तत्र विश्वस्तश्च तं शरणं याति[4]। एवमेव आळवकसुत्ते, विजयसुत्ते, मुनिसुत्ते चापि उत्तमाध्यात्मिकगुणानामनुशंसा विहिता।

सुत्तनिपातस्य चुल्लवग्गे रतनसुत्ते सर्वजीवान् प्रति मैत्रीभावनायाः उपदेशः, सत्यचारणानाञ्चोपदेशः विहितः। आमगन्धसुत्ते जीवहिंसा वधः बन्धनं स्तेयम्, असत्यभाषणम्, उपन्यासादीनाम् अध्ययनं, परस्त्रियं प्रति कुभावना प्रभृतयः दुर्गुणाः नैव सेवनीयाः। एतेभ्यो अधिकं पापदायकं मांसभोजनं न भवति[5]। हिरिसुत्ते मित्रस्य स्वरूपमुल्लिखन् ब्रूते- यो हि खलु लज्जां परिहृत्य स्वसामर्थ्यानुकूलं न भाषते, मित्रेषु भेदबुद्धिं करोति, छिद्रान्वेषणं च कुरुते, स खलु नैव उपशान्तिमधिगच्छति। तस्मात् उपशान्तये वक्ति—

**पविवेकरसं पीत्वा रसं उपसमस्स च।**
**निद्दरो होति निप्पापो धम्मपीतिरसं पिबं'ति[6]।।**

1. कसिभारद्वाजसुत्त 5।5 उरगवग्ग –सुत्तनिपात।
2. पराभवसुत्त - उरगवग्ग –सुत्तनिपात।
3. वसलसुत्त 30–सुत्तनिपात।
4. हेमवतसुत्त - उरगवग्ग –सुत्तनिपात।
5. आमगन्धसुत्त - चुल्लवग्ग –सुत्तनिपात।
6. हिरिसुत्त 2।3।5 चुल्लवग्ग –सुत्तनिपात।

महामङ्गलसुत्ते च शोभनकर्मणां विवेचनं कृतं वर्तते। तत्र दानस्य चित्तस्य शमथभावनायाः, ब्रह्मचर्यानुपालनस्य, धर्मश्रवणप्रभृतीनां च बहु प्रशंसा विहिता। सुचिलोमसुत्ते तृष्णाक्षयस्य पन्थानं पृच्छन् सुचिलोमनामको यज्ञः बुद्धात् अशिष्टाचरणपूर्वकं वक्ति—

'पञ्हं तं समणं पुच्छिस्सामि, सचे मे न व्याकरिस्ससि, चित्तं वा ते खिपिस्सामि, हृदयं वा ते फालेस्सामि, पादेसु वा गहेत्वा पारगंगाय खिपिस्सामीति। एवमुक्ते सुचिलोमे यक्षे बुद्धः तं प्रति अद्वेषभावेन वक्ति— त्वया प्रश्नः पृष्टः। किन्तु तव भयदानेन नाहं बिभेमि— 'न ख्याहं तं आवुसो पस्सामि सदेवके लोके समारके सब्रह्मके सस्समणब्राह्मणिया पजाय सदेवमनुस्साय यो मे चित्तं वा खिपेय्य हृदयं वा फालेय्य, पादेसु वा गहेत्वा पारगङ्गाय खिपेय्य अपि च त्वं, आवुसो पुच्छ यदाकङ्खसीति[1]।

ततः सुचिलोमस्य रागद्वेषादीनामुत्पादनप्रकारस्य प्रश्नस्योत्तरं भगवान्बुद्धः सम्यगुत्तरयति, शान्तेःपन्थानं च वक्ति। इत्थं शान्तः शुचिलोमः बुद्धं शरणमुपैतीति। धम्मचरियसुत्ते अविद्यायाः स्वरूपं कामभोगानां रतेः अपवारकं पन्थानम् उपदिशति[2]। ब्राह्मणधम्मिके च सुत्ते प्राक्कालिकानां ब्राह्मणगुणानामनुशंसा पश्चादागतानां दोषाणां परिशीलनमपि परिभावितं बुद्धेन। प्राक्कालिकसमाजे जातिवादे कर्मणो माहात्म्यमेवासीत् किन्तु रागवशात् पाश्चात्य-जन्मगतजातिभावना उद्दीप्ता। ततः ब्राह्मणानां पतनमपि जातम्। इत्थं तथागतो ब्रूते—

**खत्तिया ब्रह्मबन्धू च, ये चञ्ञे गोत्तरक्खिता**
**जातिवादं निरङ्कत्वा, कामानं वसमुपागमु'न्ति[3]॥**

धर्मज्ञातारं जनं तथैव पूजयन्ति बुद्धाः यथान्ये इन्द्रं पूजयन्ति। यथोक्तं—

**तस्मा हवे सप्पुरिसं भजेथ, मेघाविनं चेव बहुस्सुतं च**
**अञ्ञाय अत्थं पटिपज्जमानो, विञ्ञातधम्मो सो सुखं लभेथा'ति[4]॥**

तस्मात् सत्पुरुषः सदैव माननीयः, यो मेघावी, बहुश्रुतः, स अन्येभ्यो धर्ममुपदिशति, सुखं चापि लभते।

किं नाम शीलम्, किञ्च आचरणं सदिति मूल्यात्मके प्रश्ने भगवान् किं सीलसुत्ते' ब्रूते। यः खलु वृद्धान् सेवते, अन्यान् प्रति इर्ष्यां न कुरुते, समये समये गुरूणां दर्शनं करोति, धर्मकथां च उचिते काले श्रृणोति, विनीतेन भावेन धर्मम् अर्थं संयमं ब्रह्मचर्यं च भावयति, रागं मोहं परित्यज्य समाधिभावनां करोति, स खलु शीलवान् निर्वाणाधिगामी

1. सुचिलोमसुत्त - चुल्लवग्ग –सुत्तनिपात 2।5।
2. धम्मचरियसुत्त 32 चुल्लवग्ग –सुत्तनिपात।
3. ब्राह्मणधम्मिकसुत्त 32 चुल्लवग्ग –सुत्तनिपात 2।7।32।
4. नावासुत्त 8 चुल्लवग्ग –सुत्तनिपात 2।8।8।

भवति[1]। एवंभूतस्य निर्वाणाभिमुखस्य कृते प्रेरणादायकं वचनमपि कठोपनिषद्वत् तत्रैव दत्तम्—

**उट्ठहथ निसीदय को अत्थो सुपितेन वा**

**आतुरानं हि का निद्दा सल्लविद्धान् रूप्पतं॥**

**उट्ठहथ निसीदथ दल्हं सिक्खथ सन्तिया**

**मा वो पेमत्ते विञ्ञाय (मच्चुराजा) अमोहयित्थ वसानुगे[2]॥**

अर्थात् शीलाचारवन्तः सर्वे शान्त्यधिगमाय तत्पराः भूत्वा अप्रमत्ताः भवन्तु येन मृत्युस्तान् नोपेयात्। बुद्धस्य शीलाचारेण प्रभावितः-बंगीसो ब्रूते हे ऋषिसत्तम! भवतामुपदेशेन अहं प्रसीदामि। भवन्तः ब्राह्मणाः सन्ति। भवतां शिष्याश्च तथताभिलाषिणः सन्तः मृत्युपारगमनस्य हेतुं जानन्ति[3]। तथैव धम्मिकसुत्ते[4] भिक्षुगृहस्थधर्मयोः किं स्वरूपं भवतीति उपदिशति भगवान्। संक्षेपेण तु सर्वमेव बुद्धवचनं मूल्यमेवाधिकरोति। मूल्यवतां पुरुषाणां बोधाय बुद्धोपदेश इति ज्ञातव्यम्।

## ३. रिपब्लिकस्य नीतिमीमांसा

यथा संसारस्य मनुष्याणां भोजनाच्छादनाय समानं स्वरूपमस्ति तथैव आचारगत-नियमानामपि समानत्वमिति वक्तुं शक्यते। दृश्यते चापि आधुनिकयुगे सर्वत्रैव देशेषु आदर्शाचारमाश्रित्य व्यवस्थागतविधेः वैविध्यम्। कस्मिंचिद् देशे प्रजातन्त्रात्मकं स्वरूपमवलोक्यते, कुत्रचित्तु राजतन्त्रात्मकं, कुत्रचिद्वा साम्यवादात्मकमिति। केचन तु धर्ममाश्रित्यैव धर्मानुसारिणीं व्यवस्थां विचारयन्ति। परन्तु एतासु व्यवस्थासु सर्वत्रैव दृश्यते आचारानुरोधिनी विप्रतिपत्तिः। क्वचित् सर्वे समानाः भवन्ति, परन्तु विचारस्वातन्त्र्यं नास्ति, क्वचित् समानत्वं विचारस्वातन्त्र्यञ्चापि अवलोक्येते, केचन तु पुरातनादर्शचरित्राणां विचाराण्याकलय्य तदनुरूपं जीवनं यापयितुं प्रयतन्ते।

अस्माभिराकलनमिदं, सम्पर्कसूत्रञ्च, मानवजातेः प्राक्कालिकं संस्कृतेः वृत्तमाश्रित्यैव प्रस्तोष्यते। तत्र एशियायां प्रसृतानां बौद्धानां विचारसरणी, भारते च प्रचलितानां वैदिकानामाचारसरणी दृष्टा, तत्र संक्षेपतोऽस्माभिः विवेचितम्। इदानीं प्रतीच्यां यूनाने सांस्कृतिक-परम्परायामागतस्य रिपब्लिकस्य विचाररीतिं विवेचयितुमहमुद्यतः किञ्चित् प्रस्तौमि, परम्परायाः नूतननीतिमुखेन विश्लेषणम्। रिपब्लिकस्य पाश्चात्ये जगति तथैवास्ति महत्त्वं यथा प्राच्ये

1. किं सीलसुत्त - चुल्लवग्ग –सुत्तनिपात।
2. उट्ठानसुत्त 2 - चुल्लवग्ग –सुत्तनिपात 2।10।1-2।
3. वंगीससुत्त (निग्गोधकप्पसुत्त) - चुल्लवग्ग –सुत्तनिपात।
4. धम्मिकसुत्त - चुल्लवग्ग –सुत्तनिपात।

उपनिषदां सुत्तनिपातस्य च सभ्यानां जनानां परम्परां प्रति भवति सदैव सद्भावः, अतः नूतनविचाराणामाकलनं यदि परम्परागतग्रन्थानां माध्यमेन प्राप्यते, तर्हि तन्निश्चितमेव स्वीकारार्हो जायते। यद्येवं न भवति, तर्हि किञ्चित् स्वस्मिन् न्यूनत्वम् अवबुध्यते। तस्मात् मानवजातेः परम्परागतवैशिष्ट्यावकलनेन सह तद्गतदोषाणामाकलनमपि क्रियते। यदि ते दोषाः परम्परागतशास्त्रैः नैवापवार्यन्ते, तदा नूतनाचाररीतिमाकलयितुं प्रयतते जनः। भारते शूद्राणां स्थानं नीचातिनीचं विचार्य शूद्रेषु महत्त्वाधायकं किमपि राष्ट्रीयपरम्परायामस्ति न वेति बहुकालतः विचारयन् डॉ. अम्बेडकरः बौद्धेषु शूद्राणां महत्त्वमाकलय्य बौद्धधर्मं स्वीकृतवान्[1]। तदर्थञ्चोपदिष्टवान् स्वानुयायिनः। एषा प्रणाली सर्वत्रैव बुद्धिवादिषु प्रचलति। इदानीमपि वयं प्रजातन्त्रप्रणालीं आत्मीकृतमिव कर्तुं सदैव बुद्धकालिकानां जानपदानां, संहितासु समागतानां विशप्रभृतिजनानां सदाचाररीतिं च तथैव प्रजातन्त्रात्मकं विमृशामः, यथा इदानीं प्रजातन्त्रं दृश्यते।

पाश्चात्ये जगति प्लेटोमहाशय एव तादृशो विचारकः आस्ते, यः खलु सकलमपि मानवजीवनं समग्रतया विश्लेषयति। एतदनन्तरं समागतोऽरस्तुमहाशयस्तु, शास्त्राणां प्रतिवर्गं विधाय तथा अवान्तरं भेदमकरोत्, येन समग्रता खण्डिता एवाभवत्। एतस्य दूषणं मानवाचारे व्यवहारेऽवलोक्यते। मानवजीवनस्य प्रत्येकं कर्मणि सदैव मनोवैज्ञानिकी, तार्किकी, सामाजिकी, राजनैतिकी, आचारशास्त्रीया वा रीतिः सार्धमेव प्रचलति। नहि कश्चित् शास्त्रं विभज्य कश्चित् कर्म करोति। किन्तु विश्लेषणपद्धत्यां तु प्रत्येकं पृथगिव विधाय विश्लेष्यते, यद्धि पुनः विंशतिशताब्द्यां असाधुकरमिव प्रतिभाति। प्लेटोमहाशयेन तु नैवेतादृशी रीतिरनुसृता, तथैव भारतीया परम्परापि न विभक्तिविधामनुभावयति। यद्यपि विभाजनवादद्वारा ज्ञानस्य प्रकर्षस्तु भवत्येव, तथापि इदं न सर्वदा साधु मन्यते। प्रतीच्यां नीतिविश्लेषणं तु सोफिस्टानां चिन्तनेन सह प्रारभत। किन्तु ते ज्ञानिनंमन्याः स्वार्थसिद्धये यथा तेभ्यो रोचते तथा तद्वस्तु ते साधु साधयन्ति स्म। यदि तत् तेभ्यः न रोचते स्म, तदा ते तस्याऽसाधुत्वं साधयन्ति। एतेन सोफिस्टा समाजे दूषिताः घृणाभाजश्चाभवन्। एतेषां विश्लेषणमतीवं सुन्दरमपि सामाजिकानां कृते हितावहं नासीदिति विभाव्यैव सुकरातेन परमर्षिणा तेषां माध्यमेन समेषां जनानां एका नीतिः विवृता। एतच्च तेन स्वसूत्रे भाषितम् तद्यथा— 'वरचू इज नालेज, एण्ड नालेज इज वरचू' ज्ञानमेव धर्मः धर्मश्च ज्ञानमिति। अत्र ज्ञानधर्मयोः यथा व्याख्या विहिता सुकरातेन, एतेन समाजे एका समाजनीतिः प्रस्थापिताभवत्। एतादृशी नीतिः सर्वत्रैव प्रचलति। सर्वे जना आचारगतं व्यावहारिकं वा किञ्चित् साम्यं स्वीकृत्य कार्यं परिचालयन्ति। मानवानां रोगापनोदाय यथा 'हू Who संस्थया कार्याणि क्रियन्ते, तथैव तेषु सांस्कृतिक-सामाजिक-शैक्षणिकप्रवृत्तीनामध्ययनाय यूनेस्को संस्था निर्मिता, एवमेव देशेषु किञ्चिद् युद्धगतं व्यवहारं न स्याद् एतदर्थं यू. एन. ओ. वर्तते। यथा कुत्रचित् प्रदेशे भीषणोऽकालः पतति, तदा तत्र जनानामार्तिनाशाय सर्वे एव संघीभूय साहाय्यमनुतिष्ठन्ति। एताः प्रवृत्तयो

---

1. नवदीक्षित बौद्ध –राहुलसांकृत्यायन।

मानवज्ञानस्य धर्मस्य च बोधद्वारा एव प्रादुर्भवन्ति। यतो हि मानवेषु संकटे उपस्थिते कथं साहाय्यं विधातव्यं, कथं वा तेषामुद्धारः कर्तव्य इति, सकलमाकलय्य संस्थाः तान् समुद्धारयन्ति। क्लेशजनितपरिस्थितीनां मानवज्ञानानां सर्वत्रैवैक्यमास्ते। तथा च तदपाकरणाय साधनानां साम्यमपि तथैव वर्तते। अतः स्वाभाविकमिदं कथनं सुकरातस्य प्रतिभाति यत् 'तत्र ज्ञानं यत्र धर्मः' तदनुसारिकर्तव्यबोधश्च भवति।

ग्रीसे तदानीं जनेषु समाजव्यवस्था कथं हितकारिणी स्यादित्येव प्राथमिकमुद्देश्यमासीत् प्लेटोमहाशयानाम्। तेषां गुरूणां यादृशो विनिपातो जातः, तेन स स्वराज्यपरम्परां परित्यज्य सुकरातस्य विचारसरण्या एव जनानां क्लेशापनोदाय, न्यायस्य प्रतिष्ठापनाय च स प्रजातन्त्रं प्रणिनाय। एथेन्सनगरे स्पार्टायां च यानि खलु वैशिष्ट्याचारविधानानि आसन्, तानि सकलानि एकीकृत्य प्रजातन्त्रे तथा संकलितानि तेन, येन सर्वेषां मानवानां हितं समग्रतः समागच्छेत्। सज्जनानां सुकरातसदृशानां कथमपि संहारो मा भूदिति धिया वर्गभेदं प्रतिष्ठाप्य राज्यव्यवस्था विहिता प्लेटोमहाशयेन। कथं सद्गुणानामुत्पत्तिः भवति, कथं जनाः लोकहितं स्वहितं च समाजमुखेन आकलयन्ति, तदपि विवेचितं तत्र। ज्ञानस्य परमं महत्त्वम्, तदनु च ज्ञानाधिपतिरूपस्य राजानो वा, व्यवस्थासु का अन्यायपरा, का च न्यायजनिका, कथं सत्याधिगतये प्रयत्नः स्थापयितव्यः, कथं वा जनानां स्वकर्मसु एव संलग्नता भावनीयेति बहुधा विचारितं तेन। तेषां काले किमपि आचाराख्यानं केवलं मनोवैज्ञानिकसुखमाश्रित्य, केवलं बौद्धिकं विचारं वा स्वीकृत्य परिचालनीयमिति नैव आसीत्। यथेदानीं कश्चित् ब्रूते अहं चार्वाकः, अहं भौतिकवादी, आध्यात्मिको वा। समाजस्य प्राथमिक-विश्लेषणप्रक्रियायां न भवत्येषा प्रणाली, याः खलु तदानीं यावदुपगताः परम्पराः अभूवन्, तासु प्रत्येकं खलु अपूर्णा समग्रमानवसमाजहितमवेक्ष्य नैव प्रसृता इति। तामेव परिष्कर्तुं तथा च तदनुष्ठातुं विविधो प्रयत्नः आसादितस्तेन। एतेषां प्रयत्नानां कथं तत्र तत्र विधानं कृतं तेन, तदेवात्रालोच्यते लोकहिताय—

यूनाने नीतिशास्त्रस्य प्रादुर्भावः सोफिस्टविचारकाणां विचारादेव प्रसृत इत्यत्र नास्ति विवादः। सोफिस्टाः खलु व्यक्तिसापेक्षं सर्वमिति मत्वा शुभाशुभयोः व्यवस्थापकाः स्वयमेव मन्यन्ते स्म। तेषां कथनमत्र विषये प्रोटेगोरस वचनमधिकृत्य साधु प्रतिभाति— 'मैन इज द मीजर ऑफ आल द थिंग' अर्थात् मानव एव वस्तूनां (शुभाशुभयोः) प्रमापकः''। प्रोटैगोरसमहाशयानामयं सिद्धान्तः जार्जियास्-हिरोडोटसप्रभृतिभिरपि स्वीकृतः। रिपब्लिकेऽपि प्रेसिमेकसनामकेन सोफिस्टेन न्यायस्य उत्सं प्रोक्तवता भणितम्-न्यायः खलु शक्तिशालिजनानां स्वाधिकारस्थापनाय कृतव्यवस्था भवति। आई से देट जस्टिस आर राइट इज सिम्पली ह्वाट इज इन्टरेस्ट ऑफ द स्ट्रान्गर पार्टी[1] अस्यां व्यवस्थायां न्यायधीशाः तदेव कुर्वन्ति यत्खलु राज्भिः स्वहितसंस्थापनाय विधयः संस्थाप्यन्ते। इदानीमपि केचन नीत्शेकार्लाइलप्रभृतयः तद्वदेव आमनन्ति।

1. रिपब्लिक इन्ट्रोडक्शन, पृ० 77।

अत्र तावत् विचारणीयं भवति यत् सोफिस्टाः न्यायस्य, शुभाशुभयोः, उचितानुचितयोः, संस्थापनां तत्त्वनिष्ठां विनैव कथं कुर्वन्ति? तत्र केचन एवं कथयन्ति यत् तदानीं यूनाने सामाजिकी राजनैतिकी वा व्यवस्था तथाऽभूत् यस्यामेकत्र किञ्चित् कर्तव्यमुच्यतेऽन्यत्र च ततोऽन्यत्। अतो विभिन्नेषु नगरेषु, विभिन्नासु रीतिषु, विभिन्नभावनां व्यवहारपद्धतिं च वीक्ष्य तैराकलितं यत् नैतिकतायाः प्रत्ययाःखलु व्यक्तिनिष्ठा भवन्ति। तत्र यथा मनुष्यैः प्रस्थाप्यन्ते तथा स्वीक्रियन्ते एव। इत्थं नीतिः खलु भावनाश्रिता इच्छाधारिता भवतीति सोफिस्टानामाशयः। एषां मते नैतिकदर्शनं संदेहवादेन, व्यक्तिनिष्ठसापेक्षवादेन च जनितम्। किन्त्वेतेन मानवसमाजे जनानां विश्वासहानिरजायत। अतः सुकरातप्लेटोऽरिस्तुतिलादयः एतान् समालोचयाञ्चकुः।

एतस्य प्रत्याख्यानं कृतवता सुकरातेन भणितम्—न केवलं स्वसाफल्याय विकीर्णचिन्तनं कर्तव्यम्, अपितु सत्यावाप्तये दर्शनस्य प्रयोजनं स्थापयितव्यमिति। सत्यमेव मूलं तदेव च ज्ञानं इम एवाधिरोहतः उचितानुचिते, शुभाशुभे, न्यायसत्ये वा। ज्ञानमेव नैतिकतायाः मूलम्। ज्ञात्वा न कोऽपि अनैतिकं कर्म आचरति। यतो हि तस्योद्देश्यं जीवने जायते शुभस्यैवावाप्तिः। यदि कश्चन अशुभं प्रति संचेष्टते तर्हि स अज्ञानवशादेव तथा करोतीति[1]। के सद्गुणाः, के च अनैतिकाः भावा इति एतेषां सम्यग्बोधः करणीयः दार्शनिकैः। यतोहि सम्यग्बोधे सति जनाः सदा तथैवाचरन्ति। विवेकः, साहसम्, संयमः न्यायश्चेत्यादयः ज्ञानस्यैवान्यभेदाः भवन्ति। अतः ज्ञाने सति जनान् समुद्धर्तुं खलु सर्वः यतते। इत्थं गुणानामैक्यं ज्ञाने सम्पत्स्यते। ज्ञानस्य पूर्णतायां सद्गुणानुष्ठानं आनन्दयति तद्बोधरसिकान्।

शुभं न तद्वस्तु यत्खलु व्यक्तिसापेक्षं भवति, शुभं तदेव यत्खलु सर्वैः शुभमामन्यते। यस्मिन् च मानवानां हितमवेक्ष्यते। इत्थं व्यक्तिनिष्ठं शुभं विखण्ड्य सुकरातेन जनहितावहं शुभं प्रतिपादितम्[2]। ज्ञानिनः सद्गुणानां शुभानां च अनुष्ठानेन सुखिनो भवन्ति, सुखमपि आन्तरिकं शारीरिकं च वृत्तम्। आन्तरिकं सुखमेवानन्द, अस्मिन्नेवानन्दे शान्तिरवाप्यते, आत्मबोधश्च जायते। यो हि खलु विवेकेन संयमेन कर्तव्यभावनया एवं कर्तव्यं कुरुते, सैव आनन्दं प्राप्नोति। ज्ञाने सति एतानि कर्तव्यानि स्वत एव आगच्छन्ति, वासनाश्च एतस्मात् मार्गात् विलयं यान्ति। जनः ज्ञानमवाप्य निर्भयो भूत्वा सत्याधिपथमारोहति। स्वकर्तव्यपालने राज्यादेशानामपि ते (सुकराताः) न कदापि अवहेलनां चक्रुः। मृत्युदण्डं सहर्षं स्वीकृत्य श्रेयसः पथि ते समादृताः, एतेनापि राज्यनियमान् प्रति तेषां निष्ठा आकल्प्यते। यद्यपि आलोचका एतेषां विचाराणां नैतिकालोचनां कुर्वन्ति, तथापि एतेषां जीवनक्रमस्य यः

1. Vice on the other hand is ignorance and sensualist is as stupid as ax. A Short History of Ethics –R.A.P. Rogers.
2. It is proved to be objective by fact that it can be understood by means of general conceptions and its realisation is determined by definite iniformity laws which does not depend on the feelings of this or that individual. A Short History of Ethics – R.A.P. Rogers.

प्रभावः इदानीं यावत् मानवजातौ वरीवर्ति, स सर्वैरेव स्वीक्रियते। एतेषां प्रभावेण प्रभावितः प्लेटो नीतिदर्शनस्य सर्वमेव अङ्गं सुकरातमाध्यमेन स्पृष्टवान्। तच्चेह प्रस्तूयते—

प्लेटोमहाशयानां तार्किकान्वीक्षणात् प्राक्, नीतिशास्त्रे सुकरातस्यानुकरणमादधता एन्टीथैनीसमहाशयेनापि प्रोक्तम्— यस्तु खलु गुणवान् भवति, स स्वतन्त्रः स्वात्मनि च रमते। स विश्वनागरिको भवति, तस्य समग्रोऽपि मानवसमूहः गृहमिव प्रतिभाति। स एतदधिगतये सुकरातस्य माध्यमेन प्राप्तव्यगुणानां सिद्धान्तमपि स्वीकृतवान्। तर्कशास्त्रं, भूविज्ञानं, अन्यानि च सिद्धान्तविज्ञानानि न तथा मानवहितं प्रत्यक्षमाकलयन्ति, यथा प्रजया व्यावहारिकं ज्ञानं गुणश्च आकल्येते[1]।

किञ्च सोफिस्टानिव ज्ञात्र्यधीनत्वं स्वीकृतं ज्ञानमपि, सिरीनाइकवादिनः अरिस्टिप-समहाशयाः ज्ञानस्य संस्कृतेश्चापि महत्त्वं सुखातिशयतायामेव मन्यन्ते[2]। गुणाः साधनानि भवन्ति सुखावाप्तये, नतु साध्यानि। अतः प्रज्ञया मैत्र्या च यथा सुखमनुभूयते[3], तथैव तयोः वैशिष्ट्यमाकल्प्यते। एते ग्रीकप्रान्तस्य सुखवादिन उच्यन्ते, एतेषामेव पश्चादनुकरणं इपिकुरियनमहाशयैरपि विहितम्।

इत्थं प्लेटोमहाशयानां पृष्ठभूमौ एतौ द्वौ इदानीं विस्पष्टरूपेण अनूभूयेते। तदानीं यावत् तु तथा विभागो नैवासीदिति। तस्मात् एकाङ्गिनौ इमौ इति दृष्ट्या प्लेटो—महाशयेन सर्वाङ्गपूर्णं नीतिदर्शनं प्रस्थापितम्— तद्यथोक्तम् ह्वाइटहैडमहाशयेन[4] —

The whole of the western philosophy consists in a series of foot-notes to the philosophy of plato[4].

तथा चोक्तं भण्डारकरमहाशयेनापि—

**असमाप्तं गुरोः कार्यं प्रापयामास पूर्णताम् ।**
**ये तेनोद्घाटिताः प्रश्नाः सम्बद्धाश्च परस्परम् ॥**
**सर्वेषां चैव मूलं यत् प्लेटो सम्यग्व्यचारयत् ॥**

इत्थं दृश्यते यत् सकलमपि प्रतीच्यदर्शनं यदि अस्ति प्लेटोदर्शनस्य व्याख्यानम्, तर्हि नीतिदर्शनस्यापि तथैवास्तित्वं भवति। एतच्चाहमिदानीन्तननीतिविदां मतानुसारं

1. He who has virtue needs nothing else, he is independent of society around him and of the laws of his own state. He is a citizen of the world and is every where at home because of his well being depends on himself. Antithens agreed with socrates that knowledge is essential to virtue but held that logic, physics and all theoretical studies are only indirectly valuable as means to well being. Uromices generally identify wisdom with practical virtue. A Short History of Ethics –R.A.P. Rogers.
2. Knowledge and culture are valuable so for as they lead to pleasure. Ibid p.39.
3. The virtues are not ends in themselves but only means. Ibid p.39.
4. White Head and some have been said; Zeller in his Greek philosophy page 198.
5. पाश्चात्यदर्शनम् पृ. 14, व्य.आ.रा. भण्डारकर।

प्लेटोमहाशयस्य रिपब्लिकेऽपि विमृशामि। यतो हि पुरातननीतिग्रन्थानां संरचनं नाधुनिक-विश्लेषणवादिविचारानुद्दिश्य अभवदिति। तस्मात् म्यूरहैडमहोदयानुसारं यथा उपनिषदां नीतिमीमांसा मयोपस्थापिता तथैवात्राप्युपस्थाप्यते।

म्यूरहैडमहाशयो नैतिकचेतनाया विकासस्य सोपानत्रयं निर्दिशति। बाह्यनियमास्तत्र भवन्ति प्रथमे सोपाने। समुदायनियमाः, जातिनियमाः, परम्परानियमाश्च भवन्ति बाह्याः। एतेषां नियमानामनुसरणं साधुत्वस्य, अननुसरणमसाधुत्वस्य च भवति प्रयोजकम्। इयं हि खलु मानवाचारस्य आदिकालिका प्रवृत्तिः। विकासक्रमे तु बाह्यनियमानां स्थाने आन्तरिकप्रेरणाया अपि महत्त्वं भवति, सोपानद्वयमिदं वैधानिकनीतिमीमांसाया अङ्गभूतम्। तृतीयं सोपानं तु हेतुवादिनीतिशास्त्रस्य (टेलीलाजिकल एथिक्स) अङ्गं भवति। हेतुवादिनीतिमीमांसाशास्त्रे तु उद्देश्यस्य भवति प्राधान्यम्, नियमस्तु तत्र साधनमात्रमेव। हेतुवादिनीतिमीमासांयाः सुखवाद-बुद्धिपरतावाद— आत्मपूर्णतावादभेदेन अनेके भेदाः नैतिकतायाः प्रमापका भवन्ति, विप्रतिपत्तयश्चात्र संदृश्यन्ते[1]।

रिपब्लिकनामके ग्रन्थेऽपि एते नियमाः प्रमापकरूपेण ज्ञातुं शक्यन्ते। यतोहि प्लेटो समाजस्य साम्यव्यवस्थां कर्तुं तान् सर्वान् नियमान् द्रढयति, येभ्यः समाजो राष्ट्रं वा सुशिक्षितं सुदृढं च भवति। तस्य व्यवस्थायां न कोऽपि धनिकः दरिद्रं परिभवति, न वा दरिद्रः धनिकं परिभवति। अपि तु उभयोरपि समाजे साम्यमासीत्। तेषां काले यतो हि एथेन्सस्य प्रजातन्त्रे भाग्यवशेन (लाटरी द्वारा) नियुक्तिर्विधीयते स्म, अतस्तत्र कोऽपि कस्मिँश्चिदपि पदे नियुक्तो भवितुमर्हति स्म। तस्मादेव एथेन्सस्य प्रजातन्त्रम् अयोग्यानां शासकानां हस्ते आगतमासीत्। तं दूरीकर्तुं तेन द्वयोःविघ्योः प्रयोगः प्रजातन्त्रे उल्लिखितः।

लोकेषु ऐक्यस्थापनायै स वैशिष्ट्यापादने (by specialisation) एकात्मभावनया (by unification) च सम्पूर्णं राज्यं वर्गत्रयेषु विभक्तवान्। एतेषां वर्गाधिकृतजनानां विभागः गुणमाधारीकरोति स्म। तद्यथा— यो हि खलु कृषकादिकार्यं करोति तत्सम्बन्धिगुणेषु विशिष्टो भवति, स श्रमिक इति उच्यते (Artison)। यस्तु राष्ट्रस्य बाह्यशत्रुभिः रक्षां भावयति, स सैनिको वर्ग (Warrior) उच्यते। राष्ट्रं कथं समुन्नतं स्यात्, जनेषु कथं न्यायव्यवस्थया कर्तव्याकर्तव्ययोर्निर्धारणं भूयादित्येतदर्थं शासका (Guadians) खलु संरक्षका अपि निगद्यन्ते स्म, तेषां विशेषाध्ययनव्यवस्था तत्र निर्धारिता यामधिकृत्य ते न्यायमाचरिष्यन्ति। एतेषां स्वपरिवारा अपि नैव अभवन् येन ते स्वपरिवारस्य मोहं कुर्युः। इत्थं मोहरहिताः इमे सर्वान् जनान् समबुद्ध्या पश्यन्ति स्म। तस्माद् प्लेटोमहाशयानां प्रजातन्त्रे राज्यं सर्वगुणसम्पन्नं भवति। राज्यशासकाः संरक्षकाश्च शिक्षिताः ज्ञानिनः सन्तः लोकहितं कुर्वन्ति स्म।

राज्यस्यैक्यं कथं स्थापितं स्यादित्येतदर्थं स मनोवैज्ञानिकेन विधिना वर्गेषु ऐक्यं स्थापयति। येन जनाः स्वस्वकर्तव्येषु औदासीन्यं परित्यज्य अज्ञानं वा दूरीकृत्य संलग्नाः भवेयुरिति।

1. पाश्चात्यं नीतिशास्त्रम्, पृ० 29, आचार्यविश्वेश्वरः।

## (क) बाह्यनियमानां स्थापना

प्लेटोमहाशयानां रिपब्लिकाख्ये ग्रन्थे बाह्यनियमानां बहुविधाख्यानं प्राप्यते। सर्वप्रथमं स पुरस्य निर्माणे आवश्यकान् जनान् एकत्रीकरोति तथा च कथयति— बृहत्तरे पुरे न्यायं लभते। ततः पुरपरीक्षणानन्तरं व्यक्तिपरीक्षणं कर्तव्यम्। व्यक्तौ न्याय्यादीनाम् अल्पावकाशात् संहननं भवति। तस्मात् तमपाकर्तुं एतस्य अन्वीक्षणमारभ्यते—

We may therefore find justice on a larger scale in the larger entity, and so easier to recognize. I accordingly propose that we start our inquiry with the community, and then proceed to the individual and see if we can find in the conformation of the smaller entity anything similar to what we have found in the larger[1].

पुरस्थितानां जनानां भवन्ति हि बहुविधानि आवश्यकेच्छादीनि तच्चैकेन परिवारेण नैवाप्तुं शक्यते। अतस्तत्र नानावस्तूत्पादकपरिवाराणां भवति नितान्तमपेक्षा। तद्यथा— कृषकाः अन्नानि उत्पादयन्ति, तन्तुवायाः वस्त्राणि वयन्ति, चर्मकाराः उपानहः, शिल्पकाराः वासस्थानानि निर्मान्ति, विनिमयार्थं राज्येन एवं व्यवस्था क्रियते, येन आपणे समागतानि वस्तूनि विक्रीतानि भवेयुः। तदर्थं च द्रव्यस्यावश्यकता भवति। एतेषां द्रव्याणां विनिमयार्थं जना अपेक्ष्यन्ते। जनानां रोगापनोदार्थं चिकित्सकास्तत्रावश्यं स्थापनीयाः स्युः। पुनश्च पुरस्य रक्षार्थं सैनिका भवेयुः। सैनिकानां कथं विनियोजनं स्यादेतदर्थं संरक्षका नियोक्तव्याः। ते पुनः यथा अतीव महत्वशालिनः भवन्ति तथैव स्वस्वकर्मसु रता जना अपि। प्रत्येकं वर्णस्थितजनानां शान्त्या स्वकर्तव्यपालनमेवावश्यकमितिवद्[2] बोधयति प्लेटो। तद्यथा—

And so the business of our defence, just because it is the most important of all, requires a correspondingly complete freedom from other affairs and a correspondingly high degree of skill and practice[3].

प्रत्येकं पुरे वर्गाणां समूहः स्वस्वशिल्पानुसारमेव जीवनं यापयेत्, नहि कश्चिद् एकः वर्गः, एकः परिवारो वा अन्यवर्गस्य परिवारस्य वा शिल्पं कर्म कुर्यात्। यस्य यत् कर्म तत्तदेव आचरतु। एतच्च भारतेऽपि वर्णव्यवस्थायामुच्यते—

**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः[4] ॥**

---

1. Republic book two. p. 117. 369 A.
2. चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
   तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्।। –गीता 4,13। पृ० 682।
3. रिपब्लिक 374 डी।
4. गीता 3,35। पृ० 672।

तथैव रिपब्लिकेऽपि प्रोक्तम्-यथा—

वयं स्वचर्मकारं कथयामो यदसौ उपानहम् ऋते स्वहस्तकौशलं कृषिकर्मसु, वयने, गृहनिर्माणे वा न प्रदर्शयेत् येन हि तस्य उपानत्कौशलं प्रबाधितं भवेत्। एवमेव अन्यान् कर्मकरान् वदेम यत् तेऽपि तदेव कुर्युः यत् तेषां कृते संयोजितमास्ते तथा यदनुतिष्ठति च सः। इत्थं स्वकर्मणि व्यापृतोऽसौ सदैव कौशलपूर्वं कर्म समनुतिष्ठते। इत्थं प्रतिव्यक्तिनिष्ठं कर्मव्यवस्थां विभज्य युद्धकौशलस्यापि व्यवस्थां समनुभावयामः। इदं कृत्यं तु सैनिकैरेव कर्तुं शक्यते सरलतया। तथैव यदि असौ चर्मकारकृत्यं, कृषकस्य कार्यं करोति न तथा वैशिष्ट्यमाप्नोति। तदेवोक्तम् यथा—

Merely to pick up the tools of any other trade does not turn a man into a craftsman or games-player : The tool is useful only to the man who knows how to use it and has had enough practice in the use of it[1].

अत्र गुणान्वाख्यानेन यथा वर्गव्यवस्था कर्मव्यवस्था वा विधीयते, तथैव अन्यवर्गीयकर्मणां प्रतिषेधेन राज्यदोषाणामापतनमपि सम्भाव्यते। अत एव वक्ति प्लेटो, वयं तान् अन्यकर्मसु नैव कदापि प्रयुञ्ज्मः ये खलु तद्गुणेषु निपुणा न सन्ति। अन्यकर्मणि संसक्ते सति कर्मसंकरता समापतति। राज्यनियमानाम् अननुपालनं दण्डकृत्यार्हं भवति। यथा स्त्रीसु तेषामेव समागमो वरो मन्यते, ये खलु स्वस्थाः श्रेष्ठाश्च सन्ति, अश्रेष्ठानां बलविहीनानां स्त्रीषु नैव तथाधिकारः।

We must, if we are to be consistent, and if we are to have a real pedigree herd. mate the best of our men with the best of our women as often as possible, and the inferior men with the inferior women as seldom as possible, and bring up only the offspring of the best. And no one but the Rulers must know what is happening, if we are to avoid dissension in our Guardian herd.

एतच्च भारतेऽपि प्रतिषिद्धमास्ते[3]

न केवलमेतदेव सम्बन्धिषु निकटस्थेषु अपि विवाहसम्बन्धः राज्येन प्रबाध्यते अन्यच्चापि अप्रौढासु कृतोपयमः पुरुषः न केवलं राज्यविरुद्धमपि तु धर्मविरुद्धमपि आचरति-तद्यथोक्तम्[4] —

The same rule will apply if any man still in his mating years lays hands on a woman of child-bearing age without the Rulers' sanction, we shall regard him as putting upon the state a child that is a bastard on both civil and religious grounds[4].

---

1. रिपब्लिक 374 डी, पृ० 124-25।
2. रिपब्लिक, 240 पृ०, 459 ई.।
3. भगवद्गीता 1.42।
4. रिपब्लिक 461 बी०, पृ० 242।

बाह्यनियमेषु न केवलं राज्यविधानानि, न वा केवलं पारिवारिकविधानानि रिपब्लिके प्राप्यन्ते। अपि तु ईश्वरकृतविधानस्यापि विवेचनं तत्र प्राप्यते। प्लेटो ईश्वस्यास्तित्वं मनुते। स होमरस्य काव्यरचनायां यानि खलु अप्राकृतिकानि कल्पितानि वा आख्यानानि सन्ति ईश्वरस्य विषये तत् प्रतिरुणद्धि किन्तु ईश्वरस्य वचनकर्मणोः सत्यत्वे च नैव प्रतिरोधं प्रस्थापयति। स एव जगत् रचयति, यतोहि प्राकृतिकं जगत् ईश्वरं विहाय कोऽन्यः स्त्रष्टुमीहते। ईहायां सत्यामपि असामर्थ्यवशात् न कोऽपि सृष्टिं निर्मापयति, तस्मात् ईश्वरः सर्जकः कारणम्। उक्तं यथा—

We have seen that there are three sorts of bed. The first exists in nature, and we would say, I suppose, that it was made by god. No one else could have made it could they?[1]

सैव जगतः कारणम् अस्ति, तस्य कारणतायां कथमपि अविश्वासो नैव कर्तव्यः किन्तु तस्मिन् रागद्वेषादयो न सन्ति यथा होमरेणालिखितम्—

God implants a fault in man, when he wishes to destroy a house utterly[2]

प्लेटो इत्थं भणितस्य होमरस्य तद्विरुद्धम् आख्यानं विरुणद्धि तथा च वक्ति[3] —

So we can not allow Homer or any other poet to make such a stupid mistake about the gods.

भारतेऽपि तथा प्रोक्तम्

एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यः उन्निनीषति, एष एव असाधु कर्म कारयति तं यं अधोनिनीषते (बृहदा. 4,5,6)।

ईश्वरः प्लेटोमहाशयानां मते नैव उपादानकारणम्, अपि निमित्तमात्रम्। एवंभूतः ईश्वरो Demiurge इति उच्यते। ईश्वरः कार्यविज्ञानानामुपरि दृश्यजगतः संरचनां करोति। इत्थमीश्वरः जगतो निमित्तं, विज्ञानं स्वरूपम्। जडतत्त्वञ्च उपादानम्, परमशिवस्वरूपं लक्ष्यं भवति। एतैः सर्वैरेव नियन्त्रितः स्वकार्यं कुरुते। कल्याणभावनया ईश्वरः तेषां हितमावहति। इत्थम्, ईश्वरेणापि मानवा आचारा नियन्त्रिता भवन्ति। यथा उक्तम्[4] —

Then will you first grant that neither the just nor the unjust man's character is hidden from the gods.

---

1. रिपब्लिक 597 बी०।
2. रिपब्लिक 380 ए०।
3. रिपब्लिक 379 डी०।
4. रिपब्लिक 612 ई०।

## (ख) आन्तरिकविधानानि

प्लेटोमहोदयात् प्राक् बुद्धिवादिषु सुकरातसिनिक्ससंप्रदायौ विकसतः। भावनावादिषु च सैरेनिक्ससोफिस्टावपि आस्तामिति। तत्र उभयोः पक्षयोः या नीतिव्यवस्था भवति, तस्याम् ऐकान्तिकत्वम् आक्षिप्यते। यतोहि ये विशुद्धाः बुद्धिवादिनो भवन्ति, ते खलु मानवचरित्रस्य इच्छास्वातन्त्र्यस्य च महत्त्वं नैव स्वीकुर्वन्ति, ये च खलु मूलतः भावनाविलसिताः सन्ति, ते तु बुद्धेः माहात्म्यं परित्यज्य ईच्छायाः एव वशित्वं गच्छन्ति। अतः पूर्वोक्तयोः सम्प्रदाययोः स्थानमेकस्यां भावभूमौ जायते। प्लेटोमहाशयानां नीतिदर्शने उभयोरपि माहात्म्यं स्वीकृतम्। तेन यथा भावनानां प्रभुत्वं निर्धारितं तथैव बुद्धेश्चापि। तेनोक्तं यथा मानवाकल्याणाय शुभं नितरामपेक्षते तथैव आनन्दस्यापि भवति आवश्यकता, तस्य पूर्णतायां खलु सुखं प्राप्यते। तच्च सुखं नैन्द्रियकमपि तु बौद्धिकं सत् आनन्दानुरूपम्।

T'ien we shall not be without justification if we recognize these two elements as distinct. We can call the reflective element in the mind the reason, and the element with which it feels hunger and thrist, and the agitations of sex and other desires, the element of irrational appetite an element closely connected with satisfaction and pleasure[1].

इत्थं बौद्धिकभावनात्मकपक्षयोः एकत्र समन्वयः विधातव्यः। येन जीवनं सामञ्जस्यपूर्णं स्यात्। शारीरिकसुखं इन्द्रियजन्यं भवति। किन्तु मानवः न केवलं ऐन्द्रिकसुखमेव सदा अभिलषति। स तु ततोऽप्यधिकतरं किमपि दृढं मानवहितावहम् आनन्दमभिलषति। अतः पूर्वं परित्यज्य मानसिकरूपेणावस्थितस्य बौद्धिकानन्दस्य अवाप्तये सदा यतते। एतच्च मानसिकं बौद्धिकं वा सुखं साहित्येन, कलया, ज्ञानेन, आदर्शविचारेण च अवाप्यते। केवलं सुखमेव न काम्यं भवति मानवानाम्। ते तु संयमेन प्रातिभासिकं प्रतिविम्बितं वा सुखमैन्द्रियकं प्रबाध्य बुद्ध्या नियन्त्रितं भावयन्ति। विवेकबलेन सद्गुणं लभन्ते, तदनुसारं च जीवनं यापयन्ति ते। अतः बद्ध्याधारितजीवनमेव नैतिकम् आदर्शात्मकज्योतिरिति तेषामाशयः।

And what if he thinks he's being wronged? Then his indignation boils over and fights obstinately for what he thinks right, persevering and winning through hunger and cold and all similar trials. It won't give up the struggle till death or victory, or till reason calls it back to heel and calms it, like a shephered calls his dog[2].

तस्मात् दूषितभावनानामपाकरणं विधाय बुद्धिः जागृता सती कार्यं करोति। इयञ्च बुद्धिः आन्तरिकी प्रज्ञा, यस्याः आदेशेन विवेकी जनः कार्यं कुरुते। तस्मात् प्लेटोमहाशयानां आचारनीतौ बुद्धेः आन्तरिकप्रज्ञायाश्च अस्ति महन्महत्त्वम्।

---

1. रिपब्लिक 439 ई०।
2. रिपब्लिक 440 सी० एण्ड डी०।

यथा बाह्यविधानानि राज्यकृतानि, समाजनिर्मितानि वा पारिवारिकसंरचनायुक्तानि मानवात् सदाचारे संयोजयन्ति तथैव आन्तरिकबुद्धेः आदेशा अपि तथैव नियोजयन्ति। किन्तु प्लेटोदर्शने आन्तरिकबाह्यविधानानामिव उद्देश्याधारितवादानामपि यत्र तत्र निरूपणमुपलभ्यते। मया पूर्वमेवोक्तं यत् प्लेटोनीतिदर्शने सकलमेव नीतिविवेचकं प्रमापकं वा सिद्धान्तं मिलति। किन्तु आधुनिकनीतिविदां यथा इदानीं विश्लेषणयुक्तं वर्गविभेदकं मानकं लभते तथा तदानीं नासीत् समेषां समग्रत्वेन विवेचनात्। अहमिदानीं हेतुवादिमानकानां विश्लेषणं रिपब्लिकमुखेन प्रस्तौमि। तन्नूनमेव प्राचीनग्रन्थानां नूतनसरण्या विश्लेषणप्रकारं भविष्यतीति—

## (ग) सुखवादस्य विवेचनम्

अध्यात्मवादिनो कदापि सुखवादिनो न भवन्ति तथापि विश्लेषणक्रमे जनमनस्सु वर्तमानानां विचाराणां विश्लेषणं ते कुर्वन्त्येव, तेनैव तेषां सुखवादमूलकप्रवृत्तीनां कश्चिद् बोधः सञ्जायते। रिपब्लिके सोफिस्टानां इन्द्रियपरताया विरोध उपलभ्यते, बुद्धिवादभाववादयोश्च समन्वयः दृश्यते, तथापि कानिचिद् वचांसि तथा मिलन्ति, येभ्यः सुखवादिप्रवृत्तीनामाकलनं कर्तुं शक्यते। रिपब्लिके होमरकृतवर्णनानां यदा स्वीकरणमुपलभ्यते तदा प्लेटो तं प्रतिषेधयति, यद्धि अतीव कामोत्पादकं भूतमात्रात्मकं च वर्तते। होमरग्रन्थे मद्यपानस्य महती प्रशंसा मिलति। किञ्च तत्र तादृशस्य आख्यानस्य माहात्म्यमपि प्रतिपादितम्। एषु आख्यानेषु सुखवादिप्रवृत्तीनामेव सर्वतोभावेन उल्लेखो वर्तते[1]। तद्यथोक्तम्—

For they are hardly sutable to encourage the young to self-control, though we need not be surprised if they give pleasure in other ways. What do you think?

'I agree'

Then is it likely to encourage self-restraint if the poet represents the wisest of men saying that he thinks the best moment of all is when.

the tables are laden with bread and meat, and a steward carries round the wine he has drawn from the bowl and fills their cups?

And what about lines like

"death by starvation is the most miserable end that one can meet?"

And then there is the story of how Zeus stayed awake, when all the other gods and men were asleep, with some plan in mind, but forgot it easily enough when his desire for sex was roused; he was indeed so struck by Hera's appearance that he wanted to make love to her on the spot, without going indoors, saying that he had never desired her so much since the days when they first used to make love 'without their parents' knowledge' And There's the story of Hephaestus trapping Areas and Aphrodite because of similar goings on.

अस्मिन् संदर्भे सकलस्यैव इच्छासुखस्य विवरणमुपलभ्यते तच्च प्रतिषिद्धं प्लेटोमहाशयेनेति। किन्तु एतत्सन्दर्भेण ज्ञायते यत् तदानीं सुखवादिप्रवृतयः प्रामुख्येण

1. रिपब्लिक प्लेटो 390 बी॰सी॰।

विराजन्ते स्म। तस्मात् सर्वत्रैव सांस्कृतिकसामाजिकानुसन्धाने रिपब्लिके तथाविधाः सन्दर्भाः सन्ति येन सुखगतजीवनस्योद्देश्यं केचन स्वीकुर्वन्ति स्म। केचन च तं विरुधन्ति स्म। येऽत्र विरुधन्ति तेषु प्लेटोऽप्येकः महान् विचारक आसीत्। तेन एतादृशानां प्रसङ्गानामन्वाख्यानं जनानां कृते प्रतिवर्जयता प्रोक्तम्[1]—

We must therefore neither believe nor allow the story of the dreadful rapes attempted by Theseus, son of Poseidon, and Peirethous, son of Zeus, or any of the other lies now told about the terrible and wicked things which other sons of gods and heroes are said to have dared to do.

अन्यत्रापि विषयसुखस्य विषयमुपवर्णयता प्लेटोमहाशयेन प्रोक्तम्— संगीतं खलु आनन्दं वर्धयति। तस्यानन्देन विषयसुखेऽपि प्रवृत्तिर्भवति। संगीतकर्मणि सांगीतिकवस्तुना तत्कर्तृभिर्वा सह शारीरिकसुखावबोधः जायते। प्रोक्तं च यथा शारीरिकप्रेमापेक्षया अन्यत् किमपि तीव्रं सुखावबोधकं न भवति[2]—

And what is very beautiful will also be very attractive, will it not?

'Certainly'.

'It is, then with people of this sort that the educated man will fall in love, where the harmony is imperfect he will not be attracted'.

Not if the defect is one of character, 'he replied, 'it it's a physical defect, he will not let it be a bar to his affection'.

I know, 'I said, 'you've got, or once had, a boy friend like that. And I agree with you. But tell me : does excessive pleasure go with self-control and moderation?'

'Certainly not, excessive pleasure breaks down one's control just as much as excessive pain'.

'Does it go with other kinds of goodness?' 'No'

then does it go with violence and indiscipline? certainly;

And is there any greater or keener pleasure than that of sex? 'No : not any more frenzied :

`But to love rightly is to love what is orderly and beautiful is an educated and disciplined way.

इत्थं मद्यसेवनकर्मतः परं कामप्रवृत्तीनां कृते उदाहरणानि होमरतः तथैव कामप्रवृत्तेरुद्भावकानि शारीरिकसौन्दर्यादीनाञ्चोदाहरणानि रिपब्लिकतः संद्योतयन्ति यत्

---

1. रिपब्लिक 391 डी०।
2. वही, 402 डी० इ० तथा 403 ए०।

मानवस्य सहजसुखबोधकप्रवृत्तयः प्लेटोमहाशयानां रिपब्लिकेऽपि आसन्। इयं च प्रवृत्तिः स्वाध्यमूलिका भवति। यतो हि यत्र मानवानाम् इच्छाकर्मणां साध्यमुपशमं लभते, तत्र स्वाभाविकी भवति स्थितिः। सुखवादिनामपि अत्रास्ति ऐकमत्यम्। शारीरिकं सुखमाध्यात्मिक-सुखापेक्षया तीव्रानुभूतिविषयत्वात् वरणीयमास्ते। अस्मिन् हि वादे वर्तमान एवोपभोगयोग्यः। सुखवादोऽयं स्थूलो वैयक्तिकश्च कथ्यते। स्थूलभौतिकसुखापेक्षयापि स्थिरं सुखमयं जीवनं काम्यं भवति, अस्मिन् हि बुद्धेश्चापि भवति सहयोगः। बौद्धिकसुखमैन्द्रियकसुखापेक्षया चिरस्थायि दुःखेनासंभिन्नं च भवतीति तदेवाभिलषणीयम्। प्लेटोग्रन्थे एतादृशोऽपि सुखवादः लभ्यते। तद्यथा[1]—

'Self-discipline, 'I said, 'is surely a kind of order, a control of certain desires and appetites. So people use 'being master of oneself' (Whatever that means) and similar phrases as indications of it. Isn't that so?'.

## (घ) अध्यात्मवादः

कर्मणां नैतिकत्वव्यवस्थापनविषये सुखवादो बुद्धिपरत्ववादश्चेति द्वौ प्रधानपक्षौ। तौ च प्राचीनकालादेव समागच्छतः। सुखवादस्य साम्प्रदायिकेषु सिरैनिकाः प्रमुखाः आसन्। सिरैनिकसम्प्रदायस्य संस्थापकः ऐरिस्टिपसमहोदयः यूनानदेशस्य सिरीननगराभिजन आसीदिति। तत्सम्प्रदायस्तद्देशनाम्ना सिरैनिकसंज्ञामलभतेति स्वार्थमूलकास्ते। अस्मिन्नपि खलु इपिक्यूरिनप्रभृतिभिः स्थायिसुखस्य भावमागृह्य इन्द्रियसुखापेक्षया संयमादिना संयुक्तं सुखं श्रेष्ठतरं मन्यते।

एतेषां विरोधे सुकरातादनन्तरं सिनिक्सम्प्रदायः सुखस्य स्थाने धर्ममेव नैतिकतायाः व्यवस्थापकं मन्यते, स च तपश्चर्याप्रधानः। एतस्य संस्थापकः 'एन्टिथेनीज' इति नाम्ना प्रसिद्धः। एते तपश्चरणपरायणाः सुखस्य नितान्तं विरोधिनः। सुखमयजीवनापेक्षया बौद्धिकं जीवनं ततोऽप्यधिकतरं श्रेष्ठं मन्यन्ते। एतस्मिन् विषयेऽपि प्लेटोमहाशयानामपि वचांसि दरीदृश्यन्ते। रिपब्लिके तान्येव कानिचिदिहाकल्यन्ते[2]—

And the quality of good judgement is clearly a form of knowledge, as it is because of knowledge and not because of ignorance that we judge well'.

तथा च सत्परामर्शः एकं विशिष्टं ज्ञानं तथाविधं विकसति, येन वस्तुस्थितीनां सम्यक् निर्णयो भवति। नायम् अज्ञानेन भवितुमर्हति। तस्मात् ज्ञानं राष्ट्रे अत्यावश्यको गुणः, प्लेटोमहाशयेन चतुर्षु नैतिकगुणेषु मध्ये ज्ञानं, साहसं, संयमो न्यायश्चेति परिगणिताः। तत्र ज्ञानं प्रमुखतमं भवति। एतस्य अवाप्तये संरक्षकेषु ज्ञानविवेकौ उद्भावनीयौ स्तः।

---

1. रिपब्लिक 430 ई०। तथा 403 ए०।
2. वही, 428 बी०।

संरक्षकाणां कथं नीतिशिक्षणं स्यात्। राज्ये वा संरक्षकाणां किं कर्तव्यमिति सर्वं शिक्षणव्यवस्थायामेव समाकलितम्। संरक्षकाः परिवारहीनाः सन्तोऽपि सर्वाणि सुखकाम्यानि स्त्री-धन-वैभवादीनि कामयन्ते स्म, यथा ते सर्वान् लोकान् स्वजनान् मत्वा तेषां हिताय यतेरन्। ते सर्वदा ज्ञानेन कार्याणि अधिकुर्वन्ति स्म। एतेषां मते तथा ज्ञानवतां स्वरूपविषये बहुधा रिपब्लिके विवृतमिति। किञ्च ज्ञानिनां जनानां ज्ञानेन राष्ट्रं समुन्नतं सुविकसितं च स्यादिति विषयेऽपि उक्तम्[1]—

So the state founded on natural principles is wise as a whole in virtue of the knowledge inherent in its smallest constituent part of class, which exercises authority over the rest. And it appears further that the naturally smallest class is the one which is endowed with that form of knowledge which alone of all others deserves the title of wisdom.'

पूर्णरूपेण बौद्धिकः खलु शारीरिकमैन्द्रियकं वा सुखं परित्यज्य लोकहितसाधकं मार्गमनुसरति। बौद्धिको हि राज्यं धर्मेण, साहित्येन, कलया, संगीतेन विविधकलाचातुर्य्या च संयुनक्ति। अतः बौद्धिकानां संरक्षकाणां वर्गस्य महत्त्वस्य वा ध्यानं राष्ट्रमेव करोति। संरक्षकेषु एव यो दार्शनिकः परमतत्त्ववित्, स एव राजा भवितुमर्हति। यो हि खलु लोकस्य जनताया वा कल्याणं भावयति।

परमनिःश्रेयसपदार्थस्य ज्ञानेन नैतिकगुणाः समुद्भवन्ति। परमनिश्रेयस एव मानवमस्तिष्के परमशुभपदेन उच्यते। अन्तर्दृष्ट्या खलु ज्ञानवस्तु-प्रकाशश्च उपलभ्यते। इत्थं बुद्धिद्वारा मनसः वस्तु शुभं ज्ञायते। एतच्चैव सुकरातमुखेन प्लेटो व्याख्यापयति।

विषयसुखमेव श्रेयः, किन्तु केचन बुद्धिमन्तः आमनन्ति यत् ज्ञानमेव श्रेयोहेतुः। ये खलु ज्ञानं विना एव सत्यं जानन्ति, ते तु अन्धा इव अन्यबलेन मार्गं पश्यन्ति। श्रेय एव ज्ञातं सत्यम् अवबोधयति, ज्ञातारं वा ज्ञानशक्तिं प्रददाति। इत्थं श्रेयःप्रत्यया एव ज्ञानं तथा च सत्यं बोधयन्ति, तच्च ज्ञानेन गृह्यते[2]।

And you know of course that most ordinary people think that pleasure is the good, while the more sophisticated think it is knowledge[2]'.

जगति दृश्यं वस्तु आभासमात्रं, ततः परं किञ्चित् तथ्यं भवितव्यं, तदनुसारेण जगद्व्यवहारस्य फलाफलत्वं कल्प्यते। तथ्यं ज्ञात्वा यदि कश्चित् कार्यं कुरुते तर्हि स संयमेन, साहसेन, न्यायबुद्ध्या वा करोति, एतस्मादेव सर्वप्रथमं नैतिकगुणेषु ज्ञानस्य महत्त्वं प्रतिपादितं प्लेटोमहाशयेन। ज्ञानी खलु स्वस्य रागभावमपवार्य अन्यस्य हिताय, लोकस्य कल्याणाय, राज्यस्य वा लाभाय यतते। ज्ञानी एव उचितानुचितयोः विभेदं भावयति। अतः बुद्धिवादस्य तस्मिन् एव भवति संप्रत्ययः।

1. रिपब्लिक 428 ई० तथा 429 ए०।
2. रिपब्लिक 505 ए०।

इन्द्रियसंवेदनानाम् अपेक्षया विज्ञानप्रत्ययानां वैशिष्ट्यं वर्तते। प्रत्यया एव अस्माकं ज्ञानविषयाः, एतेषां बलेन जगति कश्चन न्यायी अन्यायी वा जायते, तस्मादेव तथा तस्य बोधः क्रियते। यतो हि न्यायस्य प्रत्ययः पूर्वं तस्मिन् विज्ञानजगति तत्त्वात्मकेन रूपेण प्रतिबद्धो भवति। ज्ञानमेव आत्मनः स्वाभाविको गुणः। तच्च आत्मनि भवति नेदमुत्पाद्यते। अनुभवेन केवलं प्रसुप्तमेव ज्ञानं आविर्भवति। इदमपि लौकिकज्ञानमेव।

विज्ञानानि तु नानुभवजन्यानि। कानिचिदपि अनुभवज्ञानानि नैव सत्यं, शिवं, सुन्दरं सदृशानि भवन्ति। जगति बोधः विज्ञानप्रत्ययेन भवति। सत्यं-शिवं-सुन्दरं प्रभृतिविज्ञानप्रत्ययैः जागतिकप्रत्ययानां कदाचित् तद्वज्ज्ञानं जायते। एते च विज्ञानप्रत्यया बुद्धिस्था, एतान् एव प्लेटो कस्यचित् मानदण्डान् विभावयति।

विज्ञानबोधकप्रत्ययानां कि मापदण्डं, कथं वा प्रामाण्यमास्ते, अस्मिन् विषये प्लेटो ज्ञानस्य प्रामाण्यबोधकविधीनां विशेषतः पार्मेनीडीजमहाशयानां यार्थार्थ्यवादविधिः (बाई करेसपान्डेन्स) इव प्रामाण्यस्य बोधकं विधिं मनुते। इत्थं कदाचित् स वस्तुवादी इव जायते। किञ्च यदि सत्यं शिवं सुन्दरं प्रभृतिप्रत्ययाः बुद्धिनिर्मिताः स्वमिव बाह्ये प्रतिविम्बबोधं नानुभवन्ति, तर्हि ते कथं सत्प्रत्यया इति वक्तुं शक्यन्ते। एतदर्थं स कदाचित् एतान् पूर्वतः सिद्धान् मत्वैव प्रामाण्यम् आकलयति।

रिपब्लिके लम्बरेखया अनुभवजगत्विज्ञानजगतोः स्वरूपमुद्भावयता तेन प्रोक्तम्- लम्बरेखायां चत्वारो बिन्दवः अद, दस, सय, यब, भवन्ति। तत्र अवमध्यान्तवर्तिनी समग्रा भूविज्ञानमिवास्ते। एतस्मिन् अवयोर्मध्ये दविन्दुः उभयोर्जगतोः विभेदं जनयति। दबिन्दुतः अबिन्दुमध्ये वर्तमानं जगत् प्रातिभासिकं (Shadows or image) भवति, सदयोर्मध्ये च वर्तमानं इन्द्रियजगदित्युच्यते (Physical things beliefs) इमावुभावपि व्यावहारिकौ opinion इति भवतः। एतदुपरि विज्ञानजगत् बौद्धिकज्ञानजगत् वा प्राप्यते। तच्च स्वरूपजगदिति वक्तुं शक्यते। बुद्ध्या वा इदं प्रबोध्यम्। एतस्या विवरणं प्रदत्तवत्ता प्लेटोमहाशयस्य रिपब्लिकग्रन्थस्य संपादकेन डेस्मपडेलीमहोदयेन प्रोक्तं यथा[1]—

Broadly speaking, the mental states comprised by the four subdivisions are

A. *Intelligence*. Full understanding, culminating in the vision of ultimate truth. This understanding is reached by philosophy, or as plato often calls it 'dialectic', a term whose modern associations are quite misleading in interpreting the Republic, but which, with that caution, remains a convenient translation.

B. *Reason*. The procedure of mathematics, purely deductive and uncritical of its assumptions.

---

1. रिपब्लिक, पृ० 310-11।

C. *Belief.* Commonsense beliefs on matters both moral and physical, which are a fair practical guide to life but have not been fully thought out. (Later, in the Timaeus, Plato includes the natural sciences in this subsection, as they can never reach ultimate truth, being concerned with a changeable world).

D. *Illusion*. All the various illusions, 'secondhand impressions and opinions, 'of which the minds of ordinary people are full, In this section 'illusion 'merely appears as the perception of shadows and reflections. But the wider interpretation is demanded by the Cave simile, which elaborates in a more graphic form the classification set out in the line.

| | | | |
|---|---|---|---|
| Knowledge (*episteme*) | Intelligence (*noesis*) or Dialectic | A<br>–Forms | Intelligible realm (to *noeton*) |
| | Mathematical reasoning (*dianoia*) | B | |
| Opinion (*doxa*) | Belief (*Pistis*) | C-Physical things | Visible (Physical) vealm (to *boraton*) |
| | Illusion (*eickasia*) | D-Shadows and images | |

इत्थं विज्ञानवादप्रक्रियया बौद्धिकानुशीलनं परममुद्देश्यं भवति प्लेटोमहाशयानाम्। यो हि खलु पारमार्थिकं वस्तु वेत्ति स व्यावहारिके जगति किं कर्तव्यम्, किं च अकर्तव्यमित्यपि वेत्ति। ज्ञानस्य वास्तविकं स्वरूपं ज्ञात्वैव जनः तुलनया (बाई कम्पेरीजन) साम्येन च वस्तूनि बुद्धया बोधयति सौन्दर्यम्, तच्च अनुभवेन ज्ञायते किन्तु सौन्दर्यस्य भावना तु बुद्धिस्था भवति। आदर्शबोधेन एव यथार्थानामनुस्मृतिः (Reminiscence) भवति। आदर्शास्तु सामान्यात्मका भवन्ति। सामान्यानां वस्तुजगति कथं ग्रहणं भवतीति विषये तेन त्रयः सिद्धान्ता उपस्थापिताः, ते च सन्ति—तादात्म्यावबोधकाः (Participation) प्रतिविम्बबोधकाः (copy theory) अभिव्यक्तिमूलकाः (Expression Theory), पृथग्व्रर्तमाना अपि ते भागग्रहणेन परस्परमाबध्यन्ते, इत्थं (participation theory) द्वारा इन्द्रियजगतः वस्तूनि विज्ञानजगतो अंशाः भवन्ति। एतेन विज्ञान-वस्तुजगतोर्मध्ये अन्तर्यामित्वमापद्यते (immanant)। प्रतिविम्बसिद्धान्तेन तु वस्तुजगत् विज्ञानस्य प्रतिविम्बभूतेन पृथक् भवति। तस्मात् न तत् तेन सहभावित्वं कुरुते, अपि तु ततः परत्वमेवाभिधीयते तस्य। इत्थं प्रतिविम्बवादे विज्ञानं (Trancendental) परात्परं जायते। एतस्मिन् प्रंसगे श्रीमता भाण्डारकरमहाशयेन अभिहितम्—

**अज्ञानादुच्यतेऽस्माभिः व्यक्तयः सन्ति केवलम् ।**
**मतयः कल्पनामात्रं सत्ता तासु न विद्यते ॥**

अश्वमात्रं तु पश्यामोऽश्वत्वरूपं न दृश्यते ।
परं प्लेटोऽन्यथा ब्रूते सामान्यं स्यान्न कल्पना ॥

रूपाणि मतयो वापि न विचारात्मिकाः परम् ।
दिव्यद्रव्यात्मिकाः सत्तावत्यः सत्यस्वरूपतः ॥

प्रतिविम्बानि वस्तूनि विम्बानि मतयः पुनः ।
प्रतिच्छायास्तु वस्तूनि मतयो मूलमूर्तयः ॥

मानवा व्यक्तयो वापि मुहुरायान्ति यान्ति च ।
नरत्वं व्यक्तिभावो वा नित्यं सत्तात्मकः परम् ॥

प्रतिविम्बबहुत्वं स्यान्मूर्तिरेकैव केवलम् ।
मूर्त्तिः प्रतिकृतेः पूर्वं स्वर्गे सत्तावती पृथक् ॥

असंख्या मतयो वर्णसम्बन्धगुणकर्मणाम् ।
शिवसुन्दरसत्याल्पमहत्सादृश्यशर्मणाम् ॥

मतयोऽन्योन्यसम्बद्धा न सांकर्यं प्रयुञ्जते ।
क्रमबद्धं दृश्यसृष्टेर्निदानं 'कल्पनाजगत्' ॥

अन्यत्सर्वमतीनां या प्रभवः पुनरुच्यते ।
परसामान्यरूपास्ति महत्तमसतो मतिः ॥

महत्तममतावन्तर्भवन्ति मतयोऽपराः ।
एकतायामनेकत्वे जगदुत्पत्तिकारणम्[1] ॥

इत्थं मतिबोधे ज्ञानस्य वा जाते जगदनुष्ठेयमानवस्तूनां कर्मणां वा सम्यगवबोधो जायते। तत्र अज्ञानादुत्पन्नानि कृत्यानि कर्तुं न स क्षमते यथा कश्चिदज्ञानी करोति। इत्थं बुद्धिवादस्य महत्त्वं भवति नीतिशास्त्रे। तच्च प्लेटोमहाशयेनापि स्वीकृतम्। 'ग्रेट ट्रेडिशन ऑफ एथिक्स' नामके ग्रन्थे अभिहितम् यथा—

Socrates concludes that when it is said that man are overcome by pleasure, it means that they are acting from ignorance. No man volunterily persues evil or that which he thinks to be evil. Thus the man who is governed by reason will not be led astray. The doctrine that 'virtue is knowledge' is expanded by Plato in Republic through integrating it with his faculty of psychology; His ethics rests upon two major points of this psychology (I) the soul of all individuals consists of three basic elements or faculties Reason, Sprit and Appetite (2) an individual's character depends upon the comparative development of three elements and the dominance of one faculty over the others[2].

---

1. पाश्चात्यदर्शने, पृ॰ 17।

1. Great tradition in Ethics by Albut, Denise and Peterfreund, p. "@ 24.

इत्थं सबहुमानं प्लेटोकृतबुद्धिपर्यवसायिनीं नीतिव्यवस्थां विविच्य इदमेवानुमिनोमि यत् प्लेटोनीतिमीमासायां न केवलं सुकरातस्यैवासीत् महान् प्रभावः, अपितु तस्य विश्लेषणविवेचनक्षमता तथा आसीत् यया स दुर्व्यवहारजनितजगतोर्मूलं नाशयितुं सकलामपि दार्शनिकविधां तथा प्रस्थापयति, येन पुनः व्यवहारे अव्यवस्था न समापतेत्।

In the world of knowledge the (idea of the good) appears last at all, it is seen only with an effort, and when seen, is also infered to be the universal author of all things beautiful and right, parent of light and lord of light in this visible world, and the immidiate source of Reason and truth in the intellectual, and this is power upon which he would act rationally either in public or private life must have his eye fixed[1].

## (ङ) आत्मपूर्णतावादः

सुखवादिनां मते इन्द्रियपरो बुद्धिवादिनां मते बुद्धिपर एव आत्मा। परमार्थतस्तु स न केवलमिन्द्रियपरो नापि बुद्धिपरः किन्तु तदुभयमप्यात्मनः स्वरूपभूतम्। उभयोरप्येतयोस्सा-मञ्जस्येनैवात्मनः पूर्णता, इच्छानां वासनानां च बुद्धौ नियन्त्रितायां सत्यामुभयोः सामञ्जस्यं सिद्ध्यति। इत्थमात्मपूर्णतावादे वासनामयी इन्द्रियभोगपरा हीनप्रकृतिः, विवेकमयी बुद्धिप्रधाना च उच्चतरा प्रकृतिः। सामञ्जस्यं कृत्वा निःश्रेयसमधिगच्छति। यदा मनुष्यः बुद्धिप्रयोगेण पाशवप्रवृत्तिं नियमयति सर्वत्र सदृशनेत्रेणावलोकयति तदैव विरोधस्य उपशमे सति आदर्शरूपस्यात्मनः दर्शनं जायते। वैयक्तिकं स्वार्थमयं संकीर्णं स्वरूपं परित्यज्य व्यापकस्यात्मस्वरूपस्यावबोधाय सर्वभूतान् प्रति ऐकात्म्यभावः स्थापनीयो भवति। तद्यथोक्तम्—

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते[2]॥**

इत्थं सर्वात्मस्वरूपबोधे सति आत्मपूर्णातावादः प्रकटितो जायते। अयमेवात्मप्रसादवाद इत्यप्युच्यते। आंगलभाषायां अयं वादः perfectionism edomonism, ethics of realisation. प्रभृतिनामभिरुच्यते।

तदेवं व्यष्टिरूपस्य समष्टिरूपतया यो हि आत्मनो विकासःस आत्मलाभः, आत्मविकास इति वा उच्यते। अस्मिन्नात्मलाभे अपरिमितानां शक्तीनां विकासो भवति। यद्यपि सर्वेषु क्षेत्रेषु एकस्यैव सर्वात्मविकासो न भवति तथापि विशेषं रुचिक्षेत्रमाकलय्य मानवः स्वस्य विकासं करोति। तस्मादेवात्र ब्रैडलेमहाशयेनापि पूर्णात्मवादस्य प्रसङ्गे प्रोक्तम्— मम स्थानं तदनुकूलं कर्त्तव्यम् किमिति प्रत्यभिज्ञाय आत्मशक्तीनां विकासाय प्रयत्नो भावनीयः। यतो हि समेषां कृते समाजे कर्तव्यं स्थानं च निर्धारितमास्ते। तस्य सम्यक् परिपालनेनैवात्मलाभः संभवति। व्यवस्थिते समाजे निर्धारितं कर्तव्यं परिपालनेनैव कश्चिद् आत्मानन्दमनुभवति।

---

1. Great tradition in Ethics by Albut, Denise and Peterfreund, p.13.
2. ईशावास्योपनिषत्।

Then shall we not fairly plead in reply that our true lover of knowledge naturally strives for reality, and will not rest content with each set of particulars which opinion takes for reality, but soars with undimmed and unwearied passion till he grasps the nature of each thing as it is, with the mental faculty fitted to do so that is with the faculty which is akin to reality, and which approaches and unites with it, and begets intelligence and truth as children, and is only released from travail when it has thus attained knowledge and true life and fulfilment[1]?

एवं सत्याधिगतये परिभ्रमन् ज्ञानी तावत् कालं स्वकीयं बौद्धिकं भावनात्मकञ्च विचारजातं परिचालयति यावत्कालपर्यन्तं तस्य वस्तुत्वप्रवृत्तेः स्वरूपबोधो न भवति। अस्मिन् हि पूर्णात्मकतत्त्वाधिगमक्रमे यदा ज्ञानी जीवनस्य सत्यतां प्राप्नोति, अथ च जीवनस्य पूर्णत्वमाप्नोति तदैव सः स्वां यात्रां विरमयति।

आत्मनो हृदयतत्त्वं स्वस्य सम्मानसंरक्षणाय बुद्धिं प्रबाध्य तदनुकूलं व्यापारं करोति। फलतः एवंभूतः आत्मा ईर्ष्यादिप्रकृतिभिः युक्तः जायते। किन्तु यदा आत्मा बुद्धिज्ञानाभ्यां सुखस्य स्वरूपं बोधयति तदा विवेकेन सह वास्तविकत्वं प्राप्नोत्यसौ। एवंभूतो आत्मा सत्यस्वरूपं सर्वोच्चतमं च रूपमधिगच्छति। अयमात्मा न कदापि लोकदोषैः दुष्टः नष्टश्च भवति। अपितु अयं शाश्वतः अमरश्च मन्यते तद्यथोक्तम्[2]—

Then if there's no evil that can destroy it, either its own or another's, it must exist for ever; that is to say it must be immortal'.

It must be'

We can take that, then, as proved 'I said 'And if so, it follows that the same souls have always existed. Their number cannot be decreased, because no soul can die, nor can it increase, any increase in the immortal must be at the expense of mortality, and if that were possible, everything would in the end be immortal.'

प्लेटोदर्शने आत्मस्वरूपस्य द्विविधं रूपमुपलभ्यते। बौद्धिक आत्मा विज्ञानानां साक्षात्कारं कुरुते। अबौद्धिकश्च कुलीनाकुलीनरूपेण विभक्तः सन् कुलीनः साहसेन, आत्मसम्मानेन, उच्चसंवेगेन च युक्तः भवति। अकुलीनश्च भयेन, वासनया, अशौचविचारैश्च समायुक्तः। किञ्च पुनः प्लेटो आत्मन ऊर्ध्वमुखीं यात्रां वर्णयति, यत्र देवात्मानः स्वर्गं गत्वा नित्यविज्ञानानां साक्षात्कारं कुर्वन्ति। मानवात्मानस्तु यदा कदा विज्ञानानां प्रतिविम्बात्मकं ज्ञानं जानन्ति। ते तु क्षीणे पुण्ये मर्त्यलोकं विशन्ति इतिवत् परावर्तन्ते। बद्धात्मानस्तु यदि विज्ञानेन सह साक्षात्कारं वाञ्छन्ति तर्हि तैः सदा इरोसदेवस्य (सौन्दर्यप्रेम्णोश्च) सततं भावना कर्तव्यां, अनया भावनया ते उड्डीयन्ते।

1. रिपब्लिक पृ० 284, 490 बी०।

2. रिपब्लिक 611 ए०।

उत्तमजीवनस्याधिगतये प्लेटोमहाशयेन चत्वारः नैतिकगुणा विश्लेषिताः। एतेषां सम्यग्बोधेन सामञ्जस्यपूर्णं जीवनं जायते। एतेषां समता संगीतवद् भवति। विकसित-सांगीतिके जीवने यथा पूर्णात्मभावः आविर्भवति तथैव बौद्धिकभावनानां भावनात्मकभावनानां च विकसिते समन्विते सति पूर्णात्मभावः प्रकटितो जायते। अयमेवात्मा पूर्णः आत्मकामो भवन् विज्ञानानां दिव्यलोके भासते, यत्र अध्यात्मभावस्तस्य प्रकाशते।

And this concord between them is effected, as we said, by a combination of intellectual and physical training, which tunes up the reason by a training in rational arguments and higher studies, and tones down and soothes the elements of 'Spirit' by harmony and rhythm'.[1]

## (च) मूल्यवादः

रिपब्लिके तु मूल्यानां विश्लेषणं बहुत्र संप्राप्यते। भौतिकवादिनोऽपि मूल्यवादिनो भवन्ति, किं पुनः अध्यात्मवादिनाम्। प्रत्ययवादित्वात् प्लेटो यथाध्यात्मिके जगति मूल्यात्मकस्य आत्मनः स्वरूपं याथार्थ्यं मनुते तथैव इह लोके अनुकरणस्वरूपात्मनः पूर्णतायै मूल्यानि संदधाति। राज्यस्य ज्ञानपूर्वकसम्यक्-चालनाय गुणा नितरामपेक्षन्ते। तेषामनुपालनेन च वर्गव्यवस्था जायते। कस्मिन् वर्गे कानि कर्तव्यानि भविष्यन्तीति सर्वमुद्घोषितं तत्र। ज्ञानम्, संयमः, साहसम्, न्यायश्चैते गुणाः सर्वान् ऐक्ये बध्नन्ति तस्मादेवोक्तम्—

Then it (States) will obiviously have the qualities of wisdom, courage, self-discipline and justice.

स्पार्टायां विद्यमानानां भौतिकगुणानां यथा एकत्रानुमेलनं तत्रस्था जना विहितवन्तस्तथा एथेन्सनगरेऽपि केचन बुद्धिमूलका गुणा अभवन्। तत्र स्पार्टायां भौतिकगुणानामुपरि बलं प्रदीयते स्म। इह तु प्लेटोनामक— अकादम्यां एथेन्सस्पार्टानगरयोः मध्ये उभयगत-गुणानामाकलनं विधाय एकत्र समावेशः विधीयते। तस्मादेव साम्यवादव्यवस्थायां प्लेटो शासकानां व्यक्तिहितमवेक्ष्य तेषां स्वाभाविकप्रवृत्तीनां पूर्णतायै सकलं खलु संसाधनं समनुयोजयति। किन्तु तेषां कृते पृथक् परिवारस्य व्यवस्थां नैव विदधाति। यतो हि व्यक्तिगते परिवारे तु रागद्वेषाकुलो भविष्यति शासकः। तर्हि राज्यस्थितानां लोकानां तथा कल्याणं नैव कर्तुं पारयिष्यति यथा स्वाभाविकप्रवृत्तीनामधिगमनानन्तरं लोकहितमवेक्ष्यते। प्रशासकानां गुणास्तु लोककल्याणाय एव प्रवर्धन्तामिति आसीत्तेषामाशयः। तस्मादेव शासकानां साम्यं स्थापितवान् प्लेटो। तदर्थं च प्रज्ञासम्पत्तिं संमार्जयन् ब्रूते—

So the state founded on natural principles is wise as a whole in virtue of the knowledge inherent in its smallest constituent part of class, which exercises authority over the rest. And it appears further that the naturally smallest class is the one

1. रिपब्लिक, पृ॰ 219,पृ॰ 442 ए॰।

2. रिपब्लिक 427 ई॰।

which is endowed with that form of knowledge which alone of all others deserves the title of wisdom[1].

उपनिषत्स्वपि तपस्विनां चरितानि तथैव वर्णितानि, तस्मादेव तपस्विनः अरण्ये वसन्तः स्वामाकांक्षां परित्यजन्तः शान्ताः खलु अमृतत्वमाप्नुवन्ति। तदुक्तम्—

**तपः श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा[2] ॥**

तस्मात् कर्मकाण्डात् ज्ञानस्य श्रेष्ठत्वं यथोपवर्णितं तथैव स्थूलात्मलोकलालन-परकजीवनात् बौद्धिकं साम्यमूलकं जीवनं श्रेष्ठतरं मत्वा प्लेटो गुणानामतिशयाधानेन लोकस्य आध्यात्मिकीं समतां सम्पादयन् लौकिकीमपि समतां सम्पादयति। एतञ्चैव भूतवादिनोऽपि प्राप्तुं यतन्ते। इत्थं मूल्यात्मकं जीवनमेव श्रेष्ठतरं तच्चोभयं लौकिकमलौकिकञ्चेति मत्वा मूल्यस्य महत्त्वमाद्रियत एव।



1. रिपब्लिक, पृ० 428 इ०, 429 ए०।
2. मुण्डक 1।2।11।

# अथ तृतीयोऽध्यायः

## धर्ममीमांसा

संस्कृतग्रन्थेषु नीतिशब्देन राजनीतिर्गृह्यते। किन्तु कर्तव्याकर्तव्यबोधकशास्त्रं हि इह धर्मशास्त्रमिति निगद्यते[1]। अद्य तु नीतिशब्दे एव कर्तव्याकर्तव्यसदाचाराणामपि आकलनं विधीयते। तस्मादेवात्र धर्माधर्मकर्तव्याकर्तव्यादीनां विवेचनं भवति। धर्मस्य सूक्ष्मा गतिरिति महाभारतीयवचनमनुसृत्य नीतिगतविवेचनपुरःसरं धर्माणां तपो-दान-संयम-साहस-न्याय-ज्ञानादीनां विश्लेषणमत्र प्रस्तूयते। मनुनापि धर्मस्य लक्षणमुक्तवता गुणानामेव तत्र निवेशनं व्यधायि। तद्यथा—

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्[2] ॥**

भारते वर्षे विभिन्नेषु दर्शनेषु धर्मस्यावधारणा भिन्ना भिन्ना कृता वर्तते। यथा कणादेन प्रोक्तम्— यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः[3]। अर्थात् येन जगति अभ्युदयो निःश्रेयसो वाऽवाप्यते स धर्म इत्युच्यते। मीमांसकशिरोमणिना जैमिनिना प्रोक्तम्— चोदनालक्षणोऽर्थो धर्मः[4]। अत्र चोदना इति क्रियायाः प्रवर्तकं वचनमुच्यते। इत्थमाचार्यचोदितं कर्म करोतीति भावस्तत्र दृश्यते। चोदनया भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयमतं बोधयति आचार्यः। इयं हि धर्मप्रकारिका चोदना कदाचित् सत्याग्निहोत्रात् स्वर्गं भावयतीति, कदाचिच्च लौकिकभावनां कुर्वती असत्यमपि बोधयितुं क्षमते, लौकिकं खलु पुरुषबुद्धिप्रभवत्वादप्रमाणम्। वेदोक्तं तु कर्म श्रेयस्करमिति। तस्मात् श्रेयस्करं जिज्ञासितव्यम् इति धर्मप्रवर्तकचोदनाया अर्थः। अयमर्थश्च मीमांसायां यज्ञरूपः। तस्मादत्र धर्मशब्देन यज्ञार्थो वा स्वर्गप्रयोजककृत्यानि वा गृह्यन्ते।

नीतिशास्त्रे यज्ञार्थो धर्मः स्वीक्रियते, आहोस्वित् मूल्यबोधकलोकहितसाधकं वचनं धर्मपदेन स्वीक्रियते, इत्यत्र भवति विवादः। तत्र पाश्चात्त्ये जगति तु धर्म इत्यस्य सम्प्रदायमूलकत्वेनार्थः परिभाव्यते, भारते तु न सर्वदा तथैवार्थः। तस्मादत्रापि कदाचित्

---

1. गीतारहस्य, पृ० 49।
2. मनुस्मृतिः - 6।92।
3. वैशेषिकसूत्रम् - 1।1।2।
4. मीमांसासूत्रम् - 2।

कर्मकाण्डप्रयुक्तवचनानि धर्मबोधकानि भवन्ति, कदाचित्तु निःश्रेयसबोधकशुभकृत्यानि। तस्मादेव वैशेषिकसूत्रे यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इत्युच्यते। मया त्वत्र निबन्धे कर्मकाण्डात्मक- यज्ञविधेः स्वरूपं परित्यज्य मूल्यबोधकतपः-संयम-ज्ञान-शीलादिविचाराणां विश्लेषणमेव विधीयते। यतो हि नीतिबोधकगुणानामुपनिषत्सु, सुत्तनिपाते, रिपब्लिके च बहुधा वर्तते समुपयोगः। तेषामनुपालनेन कथं राज्यहितं, व्यक्तिहितं, समष्टिहितं वा भवतीति विशेषतो विवेचनीयमास्ते। कथं निवृत्तिमुखेन मोक्षावाप्तिः, पूर्णताया वा बोध इत्यपि विशेषेण विश्लेष्यते। प्लेटो भौतिकाध्यात्मजीवनयोर्यादृशमनुयोगं प्रस्थापयति तथा निवृत्त्यैकमूलका बौद्धा न कुर्वन्ति। वैदिकास्तु कदाचित् प्लेटोसदृशमेव विश्लेषणं भावयन्ति। तर्ह्यत्र एतेषां परम्परायां किमैक्यं किं वा वैभिन्यमित्यपि विवेचनाविषयतां प्राप्स्यतीति।

वस्तुतस्तु धर्मविवेचनायां प्रायो दृश्यते यद् मानवः कांश्चन गुणान् स्वस्मिन् विकासयति। तेषु गुणेषु यदि कश्चित् संकीर्णतां प्राप्नोति, तर्हि स असुर इति उच्यते। यदि स व्यापकतां प्राप्नोति, तर्हि स धार्मिकः कथ्यते। यथा ममत्वं मनुष्येषु गृहादुत्पद्यते। इदं हि पूर्वं पित्रोः कटुम्बेषु, ग्रामे, जनपदे, प्रान्ते, राष्ट्रे वा वर्तमानं समग्रां मानवतां व्याप्नोति। यावत् कालमिदं परिमितं भवति, तावत् कालं मोह इत्युच्यते, किन्तु यदा व्यापकतामनुधत्ते तदा प्रेम इति मन्यते। प्रेम्णो विकास एव धर्म इति वक्तुं शक्यते। यथा उक्तं[1] "यो वै भूमा तत्सुखं नाल्पे सुख"मस्ति। तर्हि स्वस्मिन् भूमात्वं विभाव्य कर्मपुरस्सरं लोकहितसाधनाय सदा प्रयत्नोऽनुष्ठेय इति। तस्मादेव ईशोपनिषदि प्रोक्तम्— 'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः[2]।' अर्थात् लोकहितसाधनाय कर्मकुर्वद्भिः स्वस्य स्थानं सर्वैः भवद्भिः शतं वर्षाणि यावत् स्थापनीयम्। किन्तु अनेन कर्मणा स्वस्य हितं यथाऽपेक्षते तावन्मात्रमेव ग्राह्यमिति। तस्मादेवोक्तम्— 'तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्[3]।' त्वं भुङ्क्ष्व, किन्तु तावदेव भुङ्क्ष्व यावत् परिमितमावश्यकञ्च प्रतिभाति, अधिकं न ग्राह्यम्। अनेन लोकसंवर्धक-कर्मणा जीवः धर्मस्य गुणान् विकासयति, अन्यान् न परिभावयति, न च वंचयति। सामूहिकभारस्तस्मिन्नुदेति। अतः समाज एव सर्वात्मरूपो जायते। एवंभूतस्य कस्यचिल्लोकस्य भावदृष्टेरनन्तरं सर्वेषु जीवेषु आत्मभावं विकासयति, स च सर्वमात्मरूपं ज्ञात्वा जीवानां कल्याणाय स्वस्य बलिदानमपि कुरुते।

किञ्च, कदाचिद्, व्यापकभावाधिगमनानन्तरमपि संस्कृतेः सन्दर्भे जनस्तुच्छतामेव प्रकटयति। तद्यथा साम्प्रदायिकभावनया ग्रस्तो मानवोऽन्धश्रद्धया धार्मिकीमतिमेककर्मकाण्डात्मक-बुद्धिमाकलय्य अन्यसम्प्रदायस्य मन्दिराणि ध्वंसीकृत्य स्वधर्मान्धतामुखेन जनानपि हन्तुं प्रेरयति। एतादृशं जनं कः धार्मिकमधिगन्तुमुत्सहेत। यो हि अन्येषां विचाराणां समादरं विना स्वस्यैव विचारस्य समादरं कुरुते, स खलु निश्चयेन नैतिकबलेन चरित्रबलेन वा

---

1. छान्दोग्य - 7-112-118।
2. ईशावास्योपनिषद् - 2।
3. वहीं - 1।

स्वस्मिन् तुच्छतामनुभवेत्। एवंभूतो जनः कदाचिदपि सांस्कृतिको वक्तुं नैव शक्यते। बंगप्रदेशे दुर्भिक्षेण पीडितानां जनानां सेवाभावं विहाय श्रेष्ठिनो यज्ञाय गोधूमं, वस्त्राणि, विविधान्यन्यानि कार्यजातानि एकत्रीकृतवन्तः, एतेन ते कथं धार्मिका वक्तुं शक्यन्ते। यतो हि बुभुक्षितान्, अकालग्रस्तान् जनान् परित्यज्य स्वर्गकामनया वेदचोदनया यज्ञानुष्ठानाय मतमातन्वानां तेषां प्रयासः कथंकारं प्रशस्यतरं वक्तव्यमिति[1], कथं चैते पण्डिताः श्रेष्ठिनश्च सांस्कृतिका वक्तुं शक्यन्ते।

अतोऽत्रेदं विचारणीयं भवति यत् सर्वत्रैव धर्मे विवेकस्य स्थानमवश्यं स्थापयितव्यम्। सामान्येन कर्मकाण्डान्विता जनाः स्वान् धार्मिकान् मन्यमाना अपि समये-समये स्वस्य धर्मस्य विरोधं नैव सहन्ते। ते धर्मस्य परिष्काराय दीयमानानां विचाराणां बुद्ध्यापि विवेचनं न कुर्वन्ति, अतो धर्मो विवेकरहितो जायते। वस्तुतस्तु यो विवेकी भवति, स एव धार्मिको भवितुमर्हति। यतो हि विवेकेनैव गुणानुष्ठानेऽननुष्ठाने च कश्चित् निर्णयमादधाति। अहिंसासत्यास्तेयप्रभृतीनां गुणानां कोऽपि धार्मिको निरादरं नैव कुरुते, तथापि सम्प्रदायविरोधे सति एतान्येव नैतिकमूल्यानि अन्यथा परिगृह्यन्ते, अन्यथा च परिभाव्यन्ते। धर्मे वैचारिक-स्वतन्त्रतायाः सर्वत्रैव स्थानं भवति, किन्तु साम्प्रदायिका एतस्य कृते कदापि स्वीकृतिं नैव ददाति। एतादृशश्च प्रकारः सर्वेषु इस्लाम-ईसाई-हिन्दू-बौद्ध-सिक्खेष्ववलोक्यते। बर्टेन्डर-सेलमहाशयेन धर्मस्य स्वरूपाधिगतये न केवलं बुद्धिस्तत्संप्रयोगो वाधिकृतः, प्रत्युत सहजप्रवृत्तिर्यथापेक्षते तथा आत्मनो भोगोऽपि स्वीकृतः। एतेषां परस्परं सहयोगो दोषाभावेन सह आवश्यकः। यदि एषु कस्मिन्नपि भ्रष्टो जायते, तर्हि अन्यौ द्वौ अपि भ्रष्टतां प्राप्नुतः। सहजा प्रवृत्तिः भोगश्च खलु जीवने पितरौ आबध्नुतः। तौ हि अन्यान् न्यक्कृत्य केवलं स्वपुत्राणामेव हितं भावयतः। तदैव बुद्धिः स्वस्य हितसंरक्षणावेगस्य अन्याय्यं निराकरोति, सहजता समेषां कृते प्रेम्णो भावनां विकासयति। इयं च भावना आत्मबलेन विकासयिष्यते। आत्मा खलु यथा स्वस्य पुत्रं लालयति, तथैव विश्वं प्रति भावदृष्टिं परिवर्धयति। तथा कृते सति असौ सर्वान् प्रति न्यायभावनाम्, सेवायै तत्परताम्, सर्वान् प्रति श्रद्धाम्, स्वार्थत्यागेन सह संकीर्णताया इच्छाशक्तेर्नियन्त्रणं च प्रादुर्भावयति। अस्मिन् तन्त्रे विकसिते आत्मा न केवलं वैराग्यमुत्पादयति, आत्मीयानां हितकरणाय सन्नद्धेऽपि व्यक्तित्वस्य व्यक्तिजीवनस्य वा रक्षणाय शक्तिमादधाति। इयं च शक्तिः बुद्धिसहजप्रवृत्तिभ्यां समागच्छति[2]।

## १—श्रमणब्राह्मणयोः पाश्चात्त्यनीतिधर्मस्य च वैशिष्ट्यम्

ब्राह्मणधर्मानुसारं सृष्टेः रचयिता विद्यते। सर्वेषां रक्षा प्रतिष्ठा वा येन विधिना भवति, तद् ऋतशब्देन ज्ञायते। ऋतमेव आधिदैविको धर्मः। निसर्गस्याङ्गभूतो मानवोऽपि ऋतेन रक्षितव्यः। यथा ऋतेन पारस्परिकसंपोषणं भवति तथा मानवधर्मेण सर्वेषां कल्याणं भावनीयम्। तद्यथोक्तं महाभारते—

1. दर्शन एवं चिन्तन - सुखलाल सिंघवी, पृ० 11।
2. सामाजिक पुनर्निर्माण के सिद्धान्त वर्टेन्डरसेल – राजकमलप्रकाशन, पृ० 185-6।

**धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।**
**एष धर्मो महायोगो दानं भूतदया तथा[1] ॥**

**ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिःक्षमा ।**
**सनातनस्य धर्मस्य मूलमेतत्सनातनम्[2] ॥**

अशोकेनापि धर्मस्य स्वरूपं सर्वजनहिताय कल्पितम्। तदनुसारम्-धर्मः साधुः कियान्धर्म इति। आपाततो बहुकल्याणं दयादानं सत्यं शौचम्[3]। मनुनापि धर्मस्य लक्षणं प्रोक्तवता कथितम्—

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्[4] ॥**

भारतीयेधर्मे मरणानन्तरमपि कर्तव्याकर्तव्यस्य विवेचनं फलाफलविवेको मिलति। किञ्च, महाभारते शब्दव्युत्पत्त्या च धर्मस्य स्वरूपं निगदितम्-ध्रियते लोकोऽनेनेतिं धर्मः, धरति धारयति वा लोकमिति धर्मः। ध्रियते यः स धर्मः, अहिंसा परमो धर्मः[5], नहि सत्यात् परो[6] धर्मः। आचारः परमो धर्मः[7]। किन्तु धर्मस्यास्य अन्यथापि स्वरूपमुपपादितम्। तद्यथा—

Religion is man's faith in a power beyond himself where by he seeks to satisfy emotional needs and gains stablity or life, and which he expresses in act of worship and service[8].

भारतेऽपि एतादृशी परम्परा विद्यते यस्यां न केवलं गुणानाम्, अपि तु परम्परागतस्मृतियुक्तवचनानामनुपालनेन धर्मलाभोऽवाप्यते। तद्यथोक्तम्—

श्रुतिस्मृतिविहितो धर्मः, तदलाभे शिष्टाचारः प्रमाणम्। शिष्टः पुनरकामात्मा[9]। मनुनापि पुनरुक्तम्—

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च[10] ॥**

---

1. महाभारत –कर्ण॰ 49-50।
2. महाभारत –अश्वमे॰ 91-33-34।
3. अशोकस्य द्वितीयस्तम्भलेखात्।
4. मनुस्मृति - 2-12।
5. महा॰अनु॰ 115।1।
6. महा॰वनपर्व 373।76।
7. मनु॰ 1।108।
8. G. Galloway –The philosophy of Religion, p. 184.
9. वसिष्ठधर्मसूत्र - 1।4।6।
10. मनु॰ 2/6।

याज्ञवल्क्यस्मृतौ यथा—

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्[1] ॥**

धर्मस्य स्वातन्त्र्यं विविच्य स्वात्मबलेन कृतकर्मणां धर्मेऽन्तर्भावो भवति यथा—

**यत्कर्म कुर्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।**
**तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्[2] ॥**

धम्मपदे कर्मणां शुभाशुभविवेचने ब्राह्मणवग्गे प्रोक्तम्— नहि कश्चिद् जटाभिः, न च गोत्रैर्न जात्या ब्राह्मणो भवति, अपितु यः सत्यं धर्मञ्च मनुते स एव ब्राह्मणः। तद्यथा—

**न जटाहि न गोत्तेहि न जच्चा होति ब्राह्मणो।**
**यम्हि सच्चञ्च धम्मो च सो सुखी सो च ब्राह्मणो[3]॥**

किञ्च अन्यत्रापि शीलस्य माहात्म्यं प्रतिपादितम्—

**शीले पतिट्ठाय नरो सपञ्ञो चित्तं पञ्ञञ्च भावयन्।**
**आतापी निपको भिक्खु सो इमं विजटये जटं'ति[4] ॥**

जैनग्रन्थेष्वपि धर्मस्य स्वरूपमेवमुक्तम्—

**धम्मो वत्थु सहावो खमादिभावो च दसविहो धम्मो।**
**रमणतयं च धम्मो जीवाणं रक्खणं धम्मो[5]॥**

वस्तुस्वभावो धर्मः, दशविधक्षमादिगुणा धर्माः, रत्नत्रयं धर्मः, जीवानां रक्षणं धर्मः। इत्थमत्र धर्मनैतिकतयोरेकत्र समन्वयः कृतः।

अत्र धर्मनीत्योर्विवेचनप्रसङ्गे बह्व्यो विप्रतिपतयो दृश्यन्ते, तथाप्युभयोः समन्वयो यथा वर्णितस्तत्प्रस्तूयते। शुक्रनीतिशास्त्रे नीतेः स्वरूपमेवं प्रोक्तम्—

**सर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रकम्।**
**धर्मार्थकाममूलं हि स्मृतं मोक्षप्रदं यतः[6] ॥**

---

1. याज्ञवल्क्य 1।7।
2. याज्ञवल्क्य 4।161।
3. धम्मपद 393 ब्राह्मणवग्ग।
4. विसुद्धिभग्गो 3, बौद्धभारती प्रकाशन, वाराणसी।
5. कार्तिकियानुप्रेक्षा 478।
6. शुक्रनीति 1।2।

अर्थात् सर्वेषां शास्त्राणामुपजीवकं लोकस्थितेः स्वरूपावबोधकं धर्मार्थकाममूलकगुणानां प्रदर्शकं नीतिशास्त्रमस्ति। एतेन नीतिशास्त्रस्य व्यापकत्वं दृश्यते। अतो भारते यो हि धर्मः, सोऽपि नीतिमूलक एवेति कथ्यते।

पाश्चात्येऽपि जगति धर्मदर्शनस्य स्वरूपमभिदधता डी.एम.एडवर्डमहाशयेनाभिहितम्-धर्मदर्शनं नाम धार्मिक्या अनुभूतेः स्वरूपं, कार्यं, मूल्यं तद्वारा सत्यावाप्तेः स्वरूपविवेचनम्। पारमार्थिकतत्त्वाधिगमनाय धर्मः कथंकारमुपर्युक्तान् संधारयतीत्यत्र तेनैवोक्तम्—

Philosophy of Religion is response of philosophy to this challenge. It is a philosophical inquiry into the nature, function, value and truth of Religions experience as and expression of nature of ultimate reality[1].

अत्र हि नैतिकताधर्मयोर्भवति घनिष्ठः सम्बन्धः। धर्मे तु रहस्यात्मकानुभूतीनां साक्षात्कारो जायते। नैतिकतायां तु परिधिर्निर्धार्यते। धर्मोऽन्ताराष्ट्रियतां प्राप्नोति, किन्तु तत्र आलोचनबुद्धिस्तथा प्रसृता न भवति, यथा नैतिकतायां दृश्यते। तस्मात् पाश्चात्यमतेनापि धर्मनीत्योरस्ति समन्वयात्मकः सम्बन्धः।

इत्थं संक्षेपतस्तयोः सम्बन्धं विविच्य प्रकृतं प्रस्तूयते। अत्र निबन्धे उपनिषदि, सुत्तनिपाते, रिपब्लिके च या स्थितिर्गुणानां वर्णनस्य तथा च तेषामाध्यात्मिकस्वरूपस्थापनस्य वर्तते, तदेव विवेचनीयं भवति, उपनिषत्सु धर्मनीत्योर्वर्तते यथा समन्वयस्तत् प्रथमं प्रस्तूयते।

## (क) उपनिषत्सु धर्मनीत्योः स्वरूपम्

छान्दोग्योपनिषदि धर्मः कः? इत्यस्य प्रश्नस्योत्तरे प्रोक्तम्—

"त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति। प्रथमस्तप एव द्वितीयो ब्रह्मचर्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यश्लोका भवन्ति ब्रह्मसंस्थोऽमृतत्त्वमेति[2]।" यज्ञेनेह अग्निहोत्रादियज्ञं मन्यते, तच्च तपो वानप्रस्थधर्मस्य प्रेरकमिति। ब्रह्मचर्येण अध्ययनार्थं गुरुकुलवासस्यापि भावो बोध्यते। इत्थं ब्रह्मचर्यवानप्रस्थानन्तरं दानकर्मकव्यापारेण गृहस्थाश्रमस्य बोधः। एतान् सर्वान् व्यापारान् संपादयन् मानवोऽन्तिमे काले ब्रह्मसंस्थः सन् अमृतत्वं प्राप्नोति। तच्च संन्यासेनैव प्राप्तुं शक्यत इति व्याख्यया केचन एतेन धर्मेण स्कन्धेन चतुर्वर्णाश्रमाणां विवेचनं साधु आमनन्ति[3]।

शंकराचार्योऽपि स्वभाष्ये त्रयाणामाश्रमिणां कथनानन्तरं चतुर्थस्य अविशिष्टत्वेनाभिहितिं प्रोक्तवान्। तद्यथा—

1. फिलासफी आफ रिलेशन बाई डी॰एम॰एडवर्ड।
2. छान्दो॰उप॰ 2।23।1।
3. एकादशोपनिषदः –प्रो॰ सत्यव्रतसिद्धान्तालंकार, पृ॰ 239।

सर्व एते त्रयोऽप्याश्रमिणो यथोक्तधर्मैः पुण्यश्लोका भवन्ति। पुण्यो लोको येषां त इमे पुण्यलोका आश्रमिणो भवन्ति। अवशिष्टस्तु अनुक्तः परिव्राट्तुरीयो ब्रह्मसंस्थो ब्रह्मणि सम्यक् स्थितः, सोऽमृतत्वं पुण्यलोकविलक्षणममरणभावमात्यन्तिकमेति नापेक्षिकं देवाद्यमृतत्ववत्, पुण्यलोकात्पृथगमृतत्वस्य विभागकरणात्[1]।

इत्थमेतेन श्रीमच्छंकरभगवत्पादानां व्याख्यानेनापि तुरीयस्य परिव्राजे विवेचनमुपलभ्यत एव। अद्यतनविवेचकेषु याकोबीमहाशयोऽपि तथैव मनुते। किञ्च, ऐतरेयब्राह्मणे—

**किन्नु मलं किमजिनं किमु श्मश्रूणि किं तमः ।**
**पुत्रं ब्राह्मण इच्छध्वं सर्वे लोके वदावदः[2] ॥**

इति श्लोकस्य व्याख्यायां काणेमहाशयेनापि आश्रमचतुष्टयत्वेन मुण्डके च संन्यासयोगे इत्युल्लेखेनापि संन्यासाश्रमस्य सत्त्वं स्वीकृतमित्थं ये आमनन्ति, तेऽपि विचारपथं विशेषतः समायान्त्येव।

डा. गोविन्दचन्द्रपाण्डेमहाशयेनात्र अभिहितम्— उपर्युक्तैरुद्धरणैर्यद्यपि ब्राह्मणानां भिक्षुजीवनापरिचयोऽधिगम्यते, तथापि तदानीं यावत् समाजे आश्रमद्वयमेवासीत्। उत्तरवैदिककाले तु प्रतीकानां रहस्यविद्यानां च आविष्कारेण आरण्यकं जीवनं व्यकसत्। अस्मिन् खलु तृतीय आश्रम उद्भूतः, अत्र पूर्वोक्तौ आश्रमौ सामञ्जस्यमलभताम्। पश्चाच्च आश्रमाणां प्रभावात् उपनिषत्सु कुत्रचित् संन्यासिनां माहात्म्यमथ च स्तुतिः प्राप्यते, इदं च सूत्रकाले एव व्यकसदिति तेषां भावः। अतः सूत्रेषु सर्वसम्मत्या आश्रमव्यवस्था उपलभ्यते[3]। तद्यथा—"चत्वारः आश्रमाः गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति[4]। डॉ. पाण्डेयमहोदयानां कथनं भवतु नाम अवितथम् तथापि पौर्वापर्यभावाभावविरहितः शङ्कराचार्योऽपि यदि 'परिव्राड्' इत्यस्य छान्दोग्ये विवेचनं करोति, तर्हि छान्दोग्यकालं यावदपि संन्यासः नाभवदिति, चिन्त्यमेव तेषां मतमिति।

भवतु नाम पौर्यापर्य्यमाश्रमव्यवस्थायाम्, धर्मव्यवस्थायां तु आश्रमाणामेव भवति याथार्थ्यम्, तस्मादेव तन्त्रवार्तिके प्रोक्तम्— सर्वधर्मसूत्राणां वर्णाश्रमधर्मोपदेशित्वात्[5]। वर्णाश्रमाधारितमेव जीवनधर्मः,तद्गतगुणानां परिपालनं च नीतिरिति।

---

1. छा॰ 2।23।। भाष्य शंकराचार्य।।
2. ऐ॰ ब्राह्मण 33।1।।
3. बौद्धधर्मके विकास का इतिहास पृ॰ 26।
4. आपस्तम्ब 2।9।31-1।
5. भारतीय नीतिशास्त्र पृ. 68।

## (ख) बौद्धेषु धर्मनीत्योः स्वरूपम्

बौद्धधर्मेऽपि धर्मनीत्योरैक्यं वैविध्यं वेति विवेचनीयमत्र। निवृत्तिवादिनो हि बौद्धाश्चारित्र्यस्य परिशुद्धये बहु वदन्ति। यतो हि ते नीतिमन्तो व्यवस्थाहीनाः भवन्ति। अतस्तेषां भारते सामाजिकी व्यवस्था तु वैदिकधर्मानुसारमेवाभवत्। ते च एतदर्थं व्यवस्थाभासरूपेण भिक्खुसंघं निर्माय तत्र जनतान्त्रिकीं धर्मप्रणालीं परिचालयन्ति स्म, किन्तु गृहस्थानां कृते तु तेषां सैव व्यवस्था आसीत्, या खलु वैदिकानामिति। तद्यथोक्तम्—

न चैतेषामागमा वर्णाश्रमाचारव्यवस्थाहेतवः, नो खलु निषेकाद्याः क्रियाः श्मशानान्ताः प्रजानामेते विदधति। न हि प्रमाणीकृतबौद्धागमा अपि लोकयात्रायां श्रुतिस्मृतीतिहासपुराणानिरपेक्षागममनात्रेण प्रवर्तन्ते। अपितु तेऽपि सांवृतमेतदिति ब्रुवाणा लोकयात्रायां श्रुत्यादीन्येवानुसरन्तीति[1]।

धर्मस्तु तेषां मनःप्रत्ययपूर्वकः। धर्मपदस्य भवति तत्र बहुधा प्रयोगः। यो हि तत्र धर्मः स खलु तत्त्वाधिगममूलकः। अत्र सन्दर्भे आचारमूलकधर्मस्यैव विवक्षितत्वात् धम्मपदस्यादिमा कारिका प्रस्तूयते—

**मनोपुब्बङ्गमा धम्मा मनो सेट्ठा मनोमया।**
**मनसा च पदुट्ठेन भासति वा करोति वा ॥**
**ततो तं दुक्खमन्वेति चक्कं' व वहतो पदं[2]॥**

अथवा प्रसन्नमनसो हि जनस्य कर्मविपरीतं जायते।

तदप्युक्तं यथा—

**मनो पुब्बङ्गमा धम्मा मनोसेट्ठा मनोमया ।**
**मनसा च पसन्नेन भासति वा करोति वा ॥**
**ततो तं सुखमन्वेति छाया'व अनपायिनी[3] ॥**

अर्थाद् धर्माणां मनसा यथा प्रसन्नेन प्रदुष्टेन वा भवति सम्पर्कस्तदा ते करणीया धर्माः कदाचित् सुखं प्रददति कदाचिच्च दुःखम्। तस्मात् मनःपूर्वकानुष्ठाने धर्माधर्मौ, पुण्यापुण्ये, कुशलाकुशले भवतः। प्रारम्भिकेऽपि बौद्धधर्मे मनोविश्लेषणात्मक एव नैतिककर्तव्ये बलं प्रदीयते। भिक्षवस्तत्र पुण्यभागीयान् गुणान् संगृह्णन्ति, अपुण्यभागीयान् च परित्यजन्ति। अतोऽत्र धर्मशब्दस्य प्रयोगो मनोवैज्ञानिकदृष्ट्या गुणार्जने भवति।

---

1. न्यायमञ्जरी प्रमाणप्रकरणम् - 8।243 न्यायवार्तिकतात्पर्य टीका 2-1-68।
2. धम्मपद - यमकवग्ग - 1।
3. धम्मपद - 1 कारिका।

यथा पूर्वमस्माभिर्दृष्टं यद् धर्मपदेन धारणाद्धर्ममित्याहुरिति प्रोक्तम्, तथैव यो लोकान् धारयति स धर्म इत्यपि व्युत्पादितम्। वेदे तु धर्मस्य प्रयोग ऋतमित्यर्थे बभूव, पश्चाच्चायं शब्दः समाजस्य शाश्वतनियमानां परिचायकोऽभवत्। अयं स्वभावापरपर्याय एव धर्मरूपेण सांख्ये बौद्धे च जातः। बौद्धेषु स्वलक्षणतत्त्वस्य धारकत्वाद् वस्तूनां धर्मत्वं प्रसिद्धं बभूव। एवं भूतस्य धर्मस्य विभिन्नेषु अनित्यानात्मदुःखलक्षणेषु परिणतिर्भवति। धर्मेषु परस्परं कार्यकारणनियमा भवन्ति। हेतुप्रभवत्वात्ते संस्कृताः कथ्यन्ते। संस्कृतेतरधर्मा असंस्कृता भवन्ति। धर्माणां निरोध एव निर्वाणम्। किमिदं निर्वाणं धर्मस्वरूपमधर्मरूपं वा। अनित्यत्वेन प्रतीत्यसमुत्पादत्वेन विमुक्तमिदं निर्वाणं धर्मतथता शून्यता वा कथ्यते। संक्षेपतः सर्वं खलु जगज्जातं धर्मे समापतति। अयं धर्मः सामान्यरूपेण चित्तात्मकभूतात्मकरूपेण विभक्तुं शक्यते। अतो गुणपरत्वेन वा नैतिकमूल्यात्मकव्याख्यानेन वा धर्मस्य स्वरूपं बाह्यं तथा न भवति, यथा आन्तरिकं जायते। ब्राह्मणधर्मे तु धर्मपदेन भावानां मुख्यतो व्याख्यानं क्रियते। भावाश्च चित्तप्रधाना न तु भूतरूपा इति।

बौद्धेष्वपि भावानां तथा विश्लेषणं क्रियते, यथा तेऽन्ते चित्तमात्रमेव सन्तिष्ठन्ते। तद्यथा प्रोक्तम्—

**चित्तमात्रं भो जिनपुत्राः। यदुत त्रैधातुकमिदमिति[1]।**

इह तु सुत्तनिपाते धर्मस्वरूपव्याख्यानावसरेऽपि बाह्यं भूतभौतिकं रूपं परित्यज्य आन्तरिकश्चित्तचैतसिकधर्म एव गृह्यते।

माघसुत्ते सुत्तनिपाते दानस्य प्रशंसा कुर्वता माघेन प्रोक्तम्— अहं हि भो गौतम, दायको दानपतिः, वदान्यः, याचनायोग्यः, धर्मेण भोगं पर्यवस्यामि, धर्मेण भोगं पर्यवस्य धर्मलब्धेन धनेन धर्माधिगतेन वा एकस्मै ददामि, द्वाभ्यां ददामि बहुभ्यो वा। एवं कृतकर्मणो अहं बहुपुण्यं प्रसवामि। किञ्चाहं खो भो गौतम एवं मे ददतो यजतो बहुपुण्यं लभते न वा। तदा गौतमो ब्रूते। त्वं हि माणव दायकः, दानपतिः, वदान्यो भूत्वा नूनमेव बहुपुण्यं लभत इति[2]। अत्र माघसुत्ते यथा दानकर्मणः माहात्म्यं पुण्यार्जनं वा प्रोक्तम्, तेन चित्तप्रयुक्तकर्मण एव माहात्म्योद्भावनं प्रतिभाति। न तु वस्तुजगतां भूतानां वा धर्मस्वरूपविवेचनस्य। तर्हि मन्ये बौद्धदर्शनेऽपि दानमहिम्ना तदेव धार्मिकं नैतिकं वा कृत्यं गृह्यते, यद्धि खलु वैदिकैः प्रतिपादितम्।

बौद्धास्तु निवृत्तिमुखा वासनानामपनोदाय चित्तप्रयुक्तधर्माणां तथा विश्लेषणं कुर्वन्ति यथा केनापि कर्मणा चित्तसंयोजनं मा भूयादिति। ते खलु चित्तानां[3] ऊननवतिर्वा

1. लंकावथारसूत्रे।
2. माघसुत्त - 3।5 सुत्तनिपात।
3. अभिधम्मत्थसंगहो - प्रथमपरिच्छेदः।

एकविंशत्यधिकैकशतं वा विभागान् कृत्वा तेषु विभिन्नाभिर्भावनाभिः कृतकर्मणां पुण्यापुण्यभावं विश्लेषयन्ति[1]। एतेन धर्मनैतिकतयोर्मध्ये यथा सम्बन्धो ब्राह्मणेषु, तथा बौद्धेष्वपि दृश्यते।

## (ग) रिपब्लिकग्रन्थे धर्मनीत्योः स्वरूपम्

रिपब्लिकेऽपि धर्मोल्लेखो होमर-हिस्यादयोर्ग्रन्थयोः सन्दर्भेण कृतो वर्तते। तत्र धर्मेषु देवतानां यानि चरित्राणि आख्यातानि सन्ति, तेषु यदि किञ्चिदुचितं प्रतिभाति तर्हि तदेव प्लेटो स्वीकरोति। अतो धर्मोल्लिखितप्रतिवस्तूनां पूर्णतया स्वीकरणं तस्मै न रोचते, वक्ति च सः—

We must stop all stories of this kind, and stop mothers being misled by them and scaring their children with harmful myths by telling tales about a host gods that prowl about at night in a strange variety of shapes. So we shall prevent them blespheming the gods and making cowards of their children[1].

किञ्च, नैतिकमूल्यानामन्वाख्याने कदाचित् स धर्मप्रत्ययान् प्रयुङ्क्ते। यतो हि बौद्धिकान्यपि मूल्यानि व्याख्यानावसरे समुचितानि प्रतिबोधक-वाक्याक्षराणि नैव प्राप्नुवन्ति। तद्यथोक्तम्—

यद्यप्यसौ दार्शनिकविचाराणामभिव्यक्तये ग्रीकधर्मशास्त्राणां शब्दावलीनां प्रयोगं विधत्ते, वक्ति च, तथा भाषेयमपि न सत्त्यबोधाय समर्था भवति। रिपब्लिके श्रेयोविद्या नीतिविज्ञानविषये न तथा महत्त्वपूर्णा आस्ते यथा ईश्वरकल्पना नीतिप्रकृत्योः दर्शनप्रसङ्गेऽस्ति। अत्र दर्शनं हि ईश्वरस्य कल्पनयैव स्वं विचारं प्रारभते। रिपब्लिकेऽयं विधिः प्रचलति। अनेन विधिना स ईश्वरं संबोधयति तथा च विधिमपि प्रस्थापयति[2]।

अनेन विश्लेषणेन इदं निश्चीयते यत् श्रेयसः स्वरूपं कदाचिद् गुह्यतामुखेन कदाचिच्च नैतिकप्रत्ययत्वेन प्रज्ञारूपेण वा विभाव्य विश्लेष्यते। किन्त्वत्र श्रेयसः स्वरूपं यथार्थतत्त्वमधिगच्छति। अत्र केचन बाह्यार्थमात्रेण संतोषं नैव धारयन्ति, ते तु यथार्थश्रेयो हि ज्ञातुं प्रवर्तन्ते। सर्व एव विषयेऽस्मिन् कल्पनामेव भावयन्ति, न तु वास्तविकतामङ्गीकुर्वन्ति। सुकरातो हि केनचित् पृष्टः किं भवान् श्रेयोऽधिगच्छति? स उत्तरयति— अहं श्रेयसः प्रत्ययं विस्फोरयामि, न मया इदं प्रत्यक्षीकृतम्, तथाप्येतस्य सन्ततिरनुभूता कदाचित्। अतएव श्रेयःप्रत्ययस्य विश्लेषणप्रसङ्गे प्लेटो अवादीत्-संसारो हि खलु कस्यापि पारमार्थिकसत्तायाः प्रतिच्छायासदृशः, छदिस्तु सूर्यवत् बोधग्राह्याऽतीन्द्रिया च। सत्यस्य श्रेयसो वा यादृग्बोधो जायते, तादृगेव जगदपि ज्ञातुं शक्यते सूर्यप्रतिविम्बितछायावत्। इत्थं जगदिदं सतः प्रतिविम्बं सद् इन्द्रियग्राह्यम्, कदाचिद् गहनत्वाद् गभीरावस्थापनं निःश्रेयससमञ्च।

---

1. रिपब्लिक पृ० 137 ई० 38।
2. प्लेटो के रिपब्लिक का विवेचन पृ. 180 नेटलशीपकृत।

नैतिकताविश्लेषणप्रसङ्गे ईश्वरप्रत्ययानां स्वाभाविकं स्वरूपं विश्लेषयितव्यमेव, किन्त्वतिरेकमतिरिच्य, यथा पूर्वमुक्तम्। इत्थं धर्मनीत्योः सम्बन्धोपरि रिपब्लिकेऽपि सदैव विचारो भवतीति नात्र सदेहः। तस्मादेवोक्तम्—

God must surely always be represented as he really is, whether the poet is writing epic, lyric or tragedy[1].

कथम् ईश्वरशिवयोः सम्बन्धः स्यादित्यस्मिन् प्रसङ्गेऽपि तत्रोक्तम्—

Then god, being good, cannot be responsible for everything, as is commonly said, but smaller part of Human life, for the greater part of which he has no responsibility. For we have a far smaller share of good than of evil and while god must be held to be sole cause of good we must look for some facters other than god as cause of evil[2].

अत्र प्लेटोमहाशयानां रिपब्लिके ये भावा नैतिकतामुखेन धर्ममुखेन वा अभिव्यञ्जिताः, ते नूनं भारतीयधर्मनीतिभ्यां साम्यं बिभ्रति। केचन विद्वांसस्तु अत्र विषये इत्थं स्वीकुर्वन्ति—

डॉ. इग्णे का कथन है कि जीवन के प्रति प्लेटोवादी या रहस्यवादी दृष्टिकोण, जिसमें धर्म एकसाथ ही तत्त्वज्ञान एवं अनुशासन दोनों होता है, सबसे पहले एशिया में अनुभव किया गया, विशेषतः उपनिषदों में और बौद्धधर्म में[3]।

एते विचाराः कथं तत्र संप्राप्ताः, तेषामपि वर्तन्ते आख्यानानि, तानि च मया संपर्कस्थले प्रथमे खण्डे प्रस्थापितान्येव। इदानीं भावगतविचारसरणीषु कथमैक्यं भवतीति तन्मूल्यमुखेन प्रस्तूयते। मूल्यानामनुपालनं सर्वत्र समाजे भवति। तस्य चित्रणमपि रिपब्लिके, सुत्तनिपाते, उपनषित्सु च वर्तते। यद्यपि एतेषु नीतिगतसामान्यमूल्यानां विवेचनं समानमेवास्ते, तथापि संस्कृतिविभेदात् परम्पराभेदाच्च ते कदाचित् भिन्नभिन्नरूपेण विवेच्यन्ते। यतो हि आध्यात्मिका येषां नैतिकमूल्यानामनुपालनं कुर्वन्ति, कदाचित् ते न तथा समाजं राष्ट्रं वा लक्ष्यीकृत्य विवेचयन्ति, यथा भौतिकाः सामाजिका वा। तथापि भौतिकवादिनोऽध्यात्मवादिनो वा भवन्तु समाजकृत्यं तु तयोः समानमेव, मनुष्याणामुभयत्र वर्तमानत्वात्। तस्मादिह प्रत्येकं गुणानां मूल्यानां वा पृथक् पृथक् विवेचनं विधाय त्रिषु कथं उपगतं साम्यमिति प्रस्तूयते।

## २—अध्यात्मवादे गुणव्यवस्थावादः

धर्मनीत्योरन्वीक्षणं पूर्वं कृतम्। इह तु धर्मनीत्योर्गुणानामाकलनं शीलस्य प्रतिष्ठायै विधीयते। शीलं हि मानवसमाजस्य गृहस्य आत्मनो वा परमं तत्त्वम्। तच्च कथमुपलभ्यते?

1. रिपब्लिक - पृ. 133, 379 ए॰।
2. रिपब्लिक - पृ॰ 134, 379 ई॰।
3. प्राच्यधर्म और पाश्चात्य विचार - राधाकृष्णन् पृ॰ 168।

केन प्रकारेण वा तस्य प्रतिष्ठापनेन आत्मनो, गृहस्य, समाजस्य वा मुक्तिः सुखसम्पत्तिर्भवतीति साध्यते। वैदिकाः, बौद्धाः, प्लेटोमहाशयाश्च पूर्णरूपेण आध्यात्मिकाः सन्ति। यतोहि एते खलु संसारव्याधेः प्रशमनाय तात्त्विकमुपदेशम् आचरणविधिं च उपदिशन्ति। सर्वेषां समक्षं तत्तत्काले स्वसामाजिकी परिस्थितिरासीत्। तया प्रभावितास्ते स्वं स्वं विवेकोत्पादकचरित्रं प्रस्थापितवन्तः। गुणानामन्वाख्यानेन तदाध्यात्मिकं स्वरूपमधिगत्य जनाः कथं संयमादिभिः स्वस्य, गृहस्य, समाजस्य वा विनियमनं कुर्वन्तीति पूर्वोक्तेषु त्रिष्वपि ग्रन्थेषु सम्यक् उपवर्णितम्। तत्र प्लेटो तदानीन्तनराज्यव्यवस्थया भीतो विवेकमुखेन सर्वं राज्यं कथं मुक्तिं लभेतेति विचारयति रिपब्लिके। बौद्धास्तु परिवारेणावृत्तानां गृहवासनामेव परमं बन्धनकारणं मन्वाना गृहवासनाया अपनोदनाय विविधान् तर्कान् प्रस्थाप्य गृहंकारकस्यात्मनो स्वरूपं भिन्दन्ति। वैदिकाः खलु जीवहिंसायां संलग्नं जीवं प्रति अचेतनत्व-अप्राणित्व-असमानत्वादिकं भावयन्तो यज्ञान् कुर्वन्ति स्म। अतस्तदपनोदाय आत्मनः स्वरूपं प्रबाध्य पुनश्च तेषु प्रत्येकं प्राणिषु एकरूपतां विभाव्य हिंसाप्रवृत्तिमपाकर्तुं यतितवन्तः। इत्थं त्रयोऽप्येतेऽध्यात्मवन्तः स्वस्वसमस्याप्रकारेण लोकहितकारकगुणानामनुपालनाय प्रचलितवन्तः।

प्लेटोमहाशयेन राज्यस्य ज्ञानपूर्वकं सम्यक्सञ्चालनाय के गुणा नितरामपेक्षन्ते? कथं च तैरेव वर्गव्यवस्था प्रस्थाप्यते? वर्गव्यवस्थायां कैः किं कर्म करिष्यत इति सर्वमुद्धोषितम्। प्लेटोगुणानामिदानीमपि भवति नीतिव्यवस्थापनाय महदुपयोगः। एते च गुणाः सन्ति ज्ञानम्, संयमः, साहसम्, न्यायश्च। एतदर्थं तेन प्रोक्तम्—

Then, It (State) will obviously have the qualities of wisdom, courage, self-discipline and justice[1].

तदा राज्यं नीतियुक्तं व्यवस्थापरिपूर्णं स्यात्। तस्मादेते वर्गाः स्वस्वकर्मणि अभिरताः सन्तो लोकहितं यदि कुर्युस्तदैव राज्ये सुखमृद्धयस्स्युरिति। एतत्समकालमेव गुणानामन्वाख्यानं यथा भारतीयेषु आसीत्तदिह विशेषेण साम्यमुखेन रोचकतामुत्पादयेदिति धिया तेऽपि विविच्यन्ते।

सुत्तनिपाते आळवकसुत्ते आलवकोयक्षो भगवतो ज्ञानं परिभाव्य मानवस्य प्रज्ञालाभाय, धनप्राप्त्यै, कीर्तेश्च लाभादनन्तरं परलोके सुखोपलब्धये प्रश्नान् पृच्छति। हठादागतस्य तथागतस्य प्रयासेन क्षुब्धोऽपि यक्षो मुण्डिनस्तस्य तिरस्कारानन्तरं ज्ञानशीलसम्पन्नं परिभाव्य संसारे वसतोऽस्य सुख-साधन-कीर्त्तिपुरस्सरं परलोकगमनपन्थानं पृच्छति। एते खलु प्रश्ना एकेन पारिवारिकेण यक्षेण उत्थापिताः, एतस्य मन्ये मतं भवेत्, पारिवारिकस्य मुक्तिः कथं स्यादिति। बुद्धोऽपि तादृशस्य आलवकयक्षस्य भावं गृहीत्वा तथैव चतुरो गुणान् उपदिष्टवान्, यथा खलु प्लेटोमहाशयो राज्यस्य कृते उक्तवान्।

1. रिपब्लिक, चतुर्थकाण्ड - 427 ई॰ - पृ॰ 197।

**बुद्धो भाषते–**

**यस्सेते चतुरो धम्मा सद्धस्स घरमेसिनो**
**सच्चं धम्मो धिती चागो स वे पेच्च न सोचति[1]॥**

अत्र 'धम्म' इति पदेन 'पञ्ञा' गृह्यते। उक्तं चैतस्य व्याख्यानमट्ठकथायाम्-यस्सेतेति। तस्सत्थो-यस्स सद्दहानो अरहतं ति एत्थ वुत्ताय सब्बकल्याणधम्मुपादिकाय सद्धाय समन्नागतत्ता सद्धस्स घरमेसिनो घरावासं पञ्च वा कामगुणे एसन्तस्स गवेसन्तस्स कामयोगिनो गहट्ठस्स सच्चेन कित्तिं पप्पोतीति। एत्थ वुत्तप्पकारं सच्च, सुस्सूसं लभते, पञ्ञेति 'एत्थु सुस्सूपपञ्ञानामेन बुत्तो धम्मो धुरवा उट्ठाता' ति एत्थ धुरनामेन उट्ठाननामेन च वुत्ता धीति, ददं मित्तानि गन्थतीति एत्थ वुत्तप्पकारो चागो चाति एते चतुरो धम्मा सन्ति, स वे पेच्च न सोचति ति इधलोका परलोकं गन्त्वा स वे न सोचतीति[2]।

अन्ये च सत्यधृतित्यागानां ज्ञाने सति गृहस्य, स्वस्य, समाजस्य च तथैवोपकारं, कुर्वन्ति यथा प्लेटोगुणाः।

समाजगृहयोर्मुक्त्यनन्तरं मानवस्य निजा मुक्तिः कथं स्यादित्यस्य विवेचने रिपब्लिकसुत्तनिपातयोः सममेव उपनिषद्यपि प्रतिभणितम्—

**सत्येन लभ्यस्तपसा ह्येष आत्मा**
**सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।**
**अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो ।**
**यं पश्यन्ति यतयः क्षीणदोषाः[3] ॥**

अत्र हि गृहान्निर्गतस्य भिक्षोरात्मज्ञानं केन विधिना भवति, तदेव प्रतिपाद्यते। अयमस्यार्थः—

अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि। सत्येन अनृतत्यागेन मृषावाक्त्यागेन लभ्यः प्राप्तव्यः, किञ्च तपसा हीन्द्रियमनसोः एकाग्रतया मनसश्चेन्द्रियाणां च ह्येकाग्र्यं परमं तपः इति स्मरणात्। तद्ध्यनुकूलम् आत्मदर्शनाभि-मुखीभावात्परमं साधनं तपो नेतरचान्द्रायणादीनि। एष आत्मा लभ्य इत्यनुषङ्गः सर्वत्र। सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्येण मैथुनासमाचरणेन। नित्यं सर्वदा नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेन सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्यः। वक्ष्यति च 'न येषु जिह्ममनृतं च माया च इति। क्व असावात्मा च एतैः साधनैर्लभ्य इत्युच्यते। अन्तः शरीरे अन्तर्मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्रः शुद्धो यमात्मानं

1. सुत्तनिपात अट्ठकथा आलवकसुत - 1।108 पृ० 303।
2. सुत्तनिपात अट्ठकथा - आलवकसुत वण्णना - 190 पृ० 303।
3. मुण्डक - उपनिषत् - तृतीयमुण्डकप्रथम खण्ड - 5।

पश्यन्त्युपलभन्ते यतयो यतनशीलाः सत्यादिसाधनैः संन्यासिभिर्लभ्यत इत्यर्थः। न कादाचित्कैः सत्यादिभिर्लभ्यते।[1]

व्यक्तिमुक्तौ यथा क्रियते प्रयासस्तथैव परिवारराज्यमुक्त्योरपि। तस्मात्कथं पूर्वोक्तेषु गुणेष्वेव अन्यकथितगुणानां समन्वयो भवतीति अन्वेषणीयो वर्तते।

## प्लेटोनिर्दिष्टराज्यगुणानां विवेचनम्

यद्यपि प्लेटोनिर्दिष्टगुणा न केवलं राज्यमूल्यानि, अपितु व्यक्तित्वोद्भावकमूल्यान्यपि सन्ति, तथापि प्लेटोकाले प्रचलितेषु राज्यप्रकारेषु मनुष्याणां स्वभाववशात् तत्तन्नामकानि राज्यानि संदूषितान्यभूवन्। तस्मादेव प्लेटो राज्यस्य दूषणान्यपाकर्तुं रिपब्लिकनामपुस्तकं विरच्य तत्र प्रचलितदोषाणां परिष्कारं कृतवान्। प्रथमं स स्पार्टा इत्यत्र प्रचलितसम्मानप्रियराज्यस्य (Timarchy) इत्यस्य विवरणं प्रस्तौति। तत्र जनाः सम्मानप्रियाः स्त्रीपुरुषयोः साम्यम्, क्रीडायां स्वास्थ्यसंपादने चासीत्। तौ समानौ सन्तौ पुत्रोत्पादने बलशालिनामेव परस्परं युगनद्धभावं स्वीकुर्वन्तौ आस्ताम्। इत्थमुत्पाद्यमानाः प्रजाः स्वस्थाः सम्मानप्रिया भवन्ति स्म। ये कापुरुषाः कापुत्राश्च भवन्ति स्म, ते तेषां शासकैर्हन्यन्ते स्म। अस्मिन् शासने महत्त्वमासीत् समानतायाः। सर्वे जना एकत्रैव आवासे भोजने च प्रवृत्ता अभवन्। स्पार्टाक्रिटयोः शासनप्रणाल्या प्लेटो अपि प्रभावित आसीत्। किन्तु तत्र स्वातन्त्र्यस्याभावाद् नैव सा प्रणाली तस्य मनस आवर्जिका बभूव।

द्वितीया राज्यव्यवस्था अल्पतन्त्रात्मिका कुलीनतन्त्रात्मिका (Oligarchy) वा आसीत्। यस्यां कुलीना एव स्वभावतः शासका अभूवन्। अस्मिन् हि तन्त्रे जन्मतो धनशालिनां वैशिष्ट्यमभवत्। प्लेटोमहोदयेभ्य इदं तन्त्रं नैव रोचते स्म। यतो हि अत्र निर्धानानां दोहनं जायते स्म, धनिकानाञ्च महत्त्वं वर्धते स्म। अत्र सर्वाः प्रजा न गुणप्रक्रमानुसारेण स्वेषु कर्मसु संलग्ना भवन्ति स्म। तामिमां बाध्यतामपाकर्तुं स सदैव यतते स्म।

तृतीयं तन्त्रमासीत् प्रजातन्त्रं (Democracy) इदं खलु एथेन्सनगरे प्रचलितं बभूव। अस्मिन् सर्वासां प्रजानां मतं गृहीत्वा शासनं क्रियते स्म। प्रतिनिधीनां चयनं एकत्र नगरे सर्वाः प्रजा आहूय क्रियते स्म। पुनश्च तेषां मतद्वारा प्रशासनं विधीयते स्म। अत्र संवेदनया, पूर्वधारणया च कदाचिद् दुरात्मानः प्रातिनिध्यं प्रापुः। अतः स्वार्थबलेन ते कदाचित् परस्परं शासनाधिकाराय विवदन्ते स्म। अस्यामवस्थायां क्रूरतन्त्रं विकसति स्म। नेतृणां दोषपरिष्काराय कस्यचित् सुशिक्षितस्य सर्वाङ्गपूर्णशासकस्य आवश्यकता भवति। भावनाबलेन प्रातिनिध्यादिविधिना योग्या न भवन्ति शासकाः, अतः कदाचित् परस्परविरोधे कस्यापि क्रूरस्य प्रशासकस्य अस्मिन् तन्त्रे विकासो जायते।

क्रूरतन्त्रं (Tyranny) तु सर्वानतिशेते। अत्र दोषा एव भवन्ति, गुणानां तु का कथा? कदाचित् प्रजातन्त्रात्मके शासने विशीर्णव्यवस्थाभूते सति जना दूयन्ते स्म, तदा

1. वही, शांकरभाष्य - पृ॰ 168।

कश्चित् कुशलः प्रशासकः नेतृत्वं गृहीत्वा सर्वाः प्रजाः स्वस्मिन् शासने एकीकर्तुं क्रूरविधिं स्वीकरोति स्म। तत्र प्रजासु व्यवस्था स्वस्था झटिति प्रभावोत्पादिका जायते। इत्थं क्रूरस्य राज्ञो यदि कश्चित् प्रतिपक्षी जायते, स तस्य संहननं भावयति। अस्मिन् तन्त्रे खलु जघन्योऽपराधो विकसति तदनुयायिनां बलेन। अतः प्लेटो इदमपि अयोग्यं तन्त्रमेवामन्यत।

तस्मात् प्रचलितासु एतासु चतसृषु राज्यव्यवस्थासु काचिदपि सर्वाङ्गपूर्णा नासीदिति विचार्य प्लेटो स्वस्य रिपब्लिकस्य रचनां विधाय एते सर्वे दोषा यस्मिन् तन्त्रे न आगच्छेयुः, तादृशं तन्त्रं स्थापयितुं यतितवान्। प्रजातन्त्रस्य सम्मानप्रियराज्यस्य च गुणान् दार्शनिकराज्यबलेन सर्वाङ्गपूर्णं राज्यं कथं जनेषु विकसेदित्येवासीत् तस्या अकादमीसाधनायाः प्रयासः। अस्मिन्नपि स विविधवर्गाणां गुणबलेन विभागं विधाय यथा तेषु जातिगुणाः वर्णगुणा वा विकसितास्तेऽपि अत्र विवेच्यन्ते।

१. *ज्ञानम् अथवा विवेकः*

विवेकः खलु सर्वेषु दर्शनेषु प्रशस्यतरः विवेकस्यापरं नाम ज्ञानमिति। कस्मिँश्चिदपि वस्तुविशेषे विशेषज्ञा एव ज्ञानिनो भवन्ति। यथा स्थपतिः कामपि रमणीयां मूर्तिं स्वविवेकेन निर्मिणोति, तर्हि स तस्मिन् सन्दर्भे प्रशस्यते। एवं शासनस्य कार्यभारं ये संरक्षका वहन्ति, तेऽपि विशेषेण ज्ञानान्विता भवन्ति। ते प्रशासनविषयकविशेषज्ञतां प्राप्नुवन्ति शिक्षणेन। एवमेव विशेषज्ञः खलु शासनस्य मानवमनसो जनानां हितवाहकोऽपि दार्शनिको ज्ञानी एव प्रजातन्त्रस्य राष्ट्राधिपतिर्भवितुमर्हति। ज्ञानस्य महिमा तु न केवलं प्रजातन्त्रे, अपितु भारतीयदर्शनेषु नीतिशास्त्रेष्वपि बहुत्र वर्णितमास्ते। यथा विदुरनीतावपि मन्त्रज्ञो राजा प्रशस्यते—

**यस्य मन्त्रं न जानन्ति बाह्याभ्यन्तराश्च ये।**
**स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥6॥5॥**

**अधीत्यवेदान् परिसंस्तीर्य चाग्नी-**
**निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।**
**गौब्राह्मणर्थं शस्त्रपूतान्तरात्मा**
**हतः संग्रामे क्षत्रियः स्वर्गमेति[1] ॥8॥26॥**

इत्थं संरक्षका अल्पका अपि लोकहितसाधका भविष्यन्ति ज्ञानबलेन। तस्मादेवोक्तं प्रजातन्त्रे[2] —

So the state founded on natural principles is wise as a whole in virtue of the knowledge inherent in its smallest constituent part or class, which exercises authority over the rest. And it appears further that the naturally smallest class is

1. विदुरनीति - 6।15, 8।26।
2. रिपब्लिक - 428-429, पृ० 198।

the one which is endowed with that form of knowledge which alone of all others deserves the title of wisdom[1].

न केवलमेतदेव, ज्ञानिनः, आत्मज्ञानवन्त आध्यात्मिकास्तत्त्वबुभूत्सवः। तस्मादेते प्रशस्ता राज्यशासने, स्वाधिमुक्तये च। उपनिषत्स्वपि जनकादीनां ज्ञानिनां राज्यकर्मणि प्रशस्ता नीतिः प्रसिद्धा एव। तस्माद् ज्ञानिनो लोके वेदे च सर्वोत्कृष्टा भवन्तीति सिद्धम्।

प्लेटो ज्ञानगुणोत्कर्षेण समन्वितानां जनानाम् एकं वर्गं स्थापयति। स च संरक्षकः कथ्यते। सर्वे संरक्षका ज्ञानवन्तः प्रशासका भवन्ति। एतादृशाश्च अल्पसंख्याका एव भवितुमर्हन्ति। तद्यथोक्तम्—

Would not the gaurdians, in fact, be for fewer in number than any other group with special knowledge and name?

भारते तु ज्ञानिन एव ब्राह्मणाः कथ्यन्ते, ये खलु ब्रह्मविदो भवन्ति।

२. *साहसम्*

साहसं कस्यापि वर्गविशेषस्य गुण इति प्लेटो प्रतिष्ठापयति। साहससमन्विताः पुरुषाः सैनिका भवन्ति। सैनिकेषु राज्यरक्षणाय साहसस्य आवश्यकता भवति। एते राष्ट्रस्य ऐक्यं संरक्षन्ति। शत्रून् पराभवन्ति। जनान् सर्वान् शत्रुभ्यो निर्भयान् विदधति। शत्रुतः संरक्षणस्यायं भावो यत्ते कदापि जनेषु दुःखावेगपतनेभ्यो रक्षां कुर्वन्त्येव। यथा कस्यापि पटस्य संरागाय रङ्गेषु उपयुक्ततराणां रङ्गाणां चयनं विधत्ते कश्चित् रङ्गकर्ता, ततश्च फेनिलेन पटे प्रक्षालितेऽपि तस्य वर्णः नैव परिसमाप्यते, अपितु तद् वस्त्रं सुन्दरमेव भासते। तथैव समाजस्य साहसिकजनेषु मध्ये या एकीभूतभावनाः राष्ट्रसंरक्षणाय भवन्ति, तत्कर्तार एव सैनिका उच्यन्ते। उक्तं चैतद्यथा—

That this was the sort of result we were doing our best to achieve in choosing our soldier-class, and in educating them physically and mentally[3].

And by retaining it in all circumstances I meant retaining it safely, without losing it in pleasure or pain, desire or fear[4].

उपनिषत्सु बृहदारण्यकेऽमर्त्यत्वं कथं प्राप्यत इत्यस्य परिचर्यायां जनकेन सह विवदमानो याज्ञवल्क्यो वक्ति—आत्मनः स्वरूपं तदैव बोध्यते, यदास्य वाचा, प्राणेन, चक्षुषा, श्रोत्रेण, मनसा, हृदयेनैक्यभावः प्राप्यते। अथवा एतेभ्योऽपि पृथक् तस्यास्तित्वं

1. रिपब्लिक 428-429 पे॰ 199।
2. रिपब्लिक - 428 ई॰ पृ॰ 198।
3. रिपब्लिक - 430 ए॰, पेज 200।
4. रिपब्लिक - 429 डी॰।

भवतीति यो जानाति स एव आत्मतत्त्वरहस्यं प्राप्नोति। "स एष नेति नेति आत्मा। अगृह्यो ह्येष आत्मा न गृह्यते, अशीर्यो न हि शीर्यते, असंगो न हि सज्यते। असितो न व्यथते, न रिष्यति। एवंभूतः सन् अभयं वै जनक प्राप्तोऽसीति प्रोवाच याज्ञवल्क्यः[1]।

एवंभूते ज्ञाने जाते सर्व एव भयरागद्वेषवर्जिता जायन्ते। तस्मात्तस्य न कस्मादपि भयं भवति, न द्वेषो, न वा रागः। अस्यात्मनो विज्ञानेन एवं विज्ञातं भवति। किन्त्वियमवस्था अध्यात्मवादिनां भवति, न तु सैनिकानाम्। ते कर्मपथि संस्थिताः, कर्मणि संलग्नाः, स्वकर्मणि रताः कर्मकरणाय सन्नद्धाः सन्तोऽभयत्वं प्राप्नुवन्ति।

३. *संयमः*

प्लेटो निर्दिष्टराज्यगुणेषु संयमस्यापि भवति महत्त्वम्। स च रिपब्लिके विस्तरशो विचारितवान्। संयमेन जना विषयसुखेभ्यो विरम्य स्वस्य नियन्त्रणं विदधति। 'प्रत्येकं जनः स्वयमेव स्वामी' इयमाख्यायिका संयमस्य पाठं पाठयति। किन्तु एतत्कथनस्यायमभिप्रायो भवति यत् मानवःस्वस्य सेवकोऽपि कदाचिद् भवति, यदि सः स्वं स्वामिनं स्वीकरोति। आत्मवशेन जना यदा सुशिक्षां गृहीत्वा स्वात्मभावं विकासयन्ति, तदा सत्यपि परमावश्यके काले परस्य सहयोगे स्वस्य परहितलाभाय सेवकत्वमपि गृह्णन्ति। प्रसिद्धं चैतत् ईश्वरचन्द्र-विद्यासागरस्यैवाख्यानेन। स हि खलु ज्ञानी एकदा कमपि सम्मिलितुं धूमशकटस्थानं अधिजगाम। तत्र कश्चित् जनः स्वस्य वस्त्रपेटिकादीनां भारं नैव वोढुं समर्थोऽभूत्। तदा कुल्ली कुल्लीति अवादीत्। अन्यान् तत्र कुल्लीन् न दृष्ट्वा स ईश्वरचन्द्रविद्यासागरमेवाह्वयति स्म। स आगत्य तस्य भारान् गृहीत्वा धूमशकटस्थानात् बाह्यं यावत् तस्य साहाय्यमनुष्ठितवान्। यदासौ बाह्ये तस्मै भारवहनस्य किमपि मूल्यं दातुमुद्यतस्तदा तेनोक्तम्—यद्येकः स्वस्य सामग्रीणामानयने अशक्तः, अथ च आह्वयति भारवाहकान्, यदा च तेऽलब्धाः स्युस्तदा अपरस्य साहाय्यं विना कथं स पारं गच्छेदिति धिया मया भवतां सहयोगः सेवकरूपेण अनुष्ठितः। अत्र नायं ममोपकारः, न चाहं द्रव्यार्जनाय वा अस्मिन् कर्मणि संलग्न इति। इत्थं ये स्वामिनो भवन्ति ते आत्मसंयमवशात् सेवकत्वमपि धारयन्तीति। इत्थं राज्ये न्यायस्य लोकहितस्य च व्यवस्था विकसति। एतस्य विषये प्लेटो वक्ति—

Self discipline, I said, is surly a kind of order, a control of certain desires and appetites. So people use "being master of one self" (Whatever that means) and similar phrases as indication of it[2].

संयमं ये न विदन्ति ते तु केवलं आत्मगर्वेण पीडिता अन्यान् पराभवन्ति, कदाचिच्च ते परैरवमानिताः स्वस्मिन् हीनभावमवाप्य सेवकत्वं बोधयन्ति। एतदुभयमप्यहितकरं

1. बृहदारण्यक - 4 - 81 पृ० 192, सर्वसेवा प्रकाशन, राजघाट, वाराणसी।
2. रिपब्लिक - 430 ई. पेज 201।

भवति। तस्मात् सुखदुःखापेक्षया पृथक् भूत्वा संयमपुरस्सरं जीवनं यापनीयमिति भवति सामान्यतो भावः संयमस्य। भारते तु एतेन आत्मसंयमरूपज्ञानेन प्रज्ञावन्तो भूत्वा जनाः कर्मक्षेत्रम् अवतेरुः। तद्यथोक्तम्—

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि[1] ॥**

वस्तुतस्तु मनसि सुखदुःखभावयोः पार्थक्यम् कृत्वैव संयमेन जीवनं यापनीयमित्यत्र संदेशो मिलति। ये जना इत्थं न कुर्वन्ति, तेऽज्ञानिनो नीचाः भवन्ति। एतद्विपरीतं तु ये भवन्ति संयमिनस्ते कुलीनाः सुशिक्षिता ज्ञानिनः। अतएव प्लेटो ब्रूते—

While the simple and moderate desires guided by reason and right judgement and reflection, are to be found in a minority who have the best natural gifts and best education[2].

युद्धकाले, विपत्तौ वा राज्यं प्रजा च संयमेन उभयोः उपरि विजयं लभते। तस्मात् संयमः साहसेन ज्ञानेन च भिन्नो वर्गानतिरिच्य सर्वेषु वसति, ऐक्यञ्चानेन संस्थापितं भवति राज्ये। अतो महत्त्वपूर्णोऽयं गुणो लोकमर्यादापुरस्सरं जीवनयापनाय। संयम एव सामञ्जस्यं तच्चास्माभी राज्यस्थापनायां दृष्टमेव।

Because, unlike courage and wisdom, which made our state brave and wise by being present in particular part of it, self-discipline stretches across the whole scale. It produces a harmony between its strongest and weakest and middle elements, whether you mesure by the standard of intelligence, or of strength or of number or money or the like. And so we are quite justified in regarding self-disciple as this unanimity in which there is a natural concordance between higher and lower about which of them is to rule in state and individual[3].

४. *न्यायः*

अतीव साहित्यिकविधया अरण्येषु कस्तूरीमृग इव विलुप्तं न्यायरत्नमन्वेष्टुं प्रयतमानो महाशयः प्लेटो ब्रूते— अयं खलु मृगोऽस्माकं समीपे एव तिष्ठन् विराजते मूर्खत्वेनास्माभिरयं न दृष्टः। अस्माभिः इदानीं सावधानेन भाव्यं, नायं पलायितः स्यात्तथा करणीयः। ग्लोकानः स्वं धैर्यं विनिपातयन् ब्रूते— सुकरात! त्वं शीघ्रं वद इतस्ततः मां तावद् मा परिभ्रामय। अहं खलु अतीव विस्मयान्वितो भूत्वा न्यायस्य पन्थानमवलोकयितुमिच्छामि।

---

1. भगवद्गीता - 2-38।
2. रिपब्लिक - 431 ई॰, पृ॰ 202।
3. रिपब्लिक 432 ए॰, पृ॰ 203।

ततो गुरुः उवाच—प्रारम्भे एव मया उक्तं यत् मानवः खलु तदेव कार्यं कुर्यात् यद्धि तस्य स्वभावानुरूपमास्ते, यतः स्वभावानुसारकर्मणि क्रियमाणे स्वगुणानां सम्यगुपयोगो भवति। अत्रैव कर्मसम्पादने कुत्रचित् न्यायः समवतिष्ठते।

अतः परं पुनः स ब्रूते सदृढम् अन्येषां व्यवसायेषु हस्तक्षेपं मा कार्षीः, अयमेव न्यायः, इदञ्चान्यैरपि प्रोक्तमासीत्।

किन्त्वेतेन नैव परितोषमादधाति चेतः। भवान् तथैव एतमपि विश्लेषयतु यथान्यैः विवेक-संयमसाहसाख्यास्त्रयो गुणा विश्लेषिताः। परन्तु त्रयाणां पृथगस्तित्वे ज्ञातेऽस्य स्वभावबोधः स्वयमेवापततीति चेन्न, तथैव फलत्वात्। तथापि यदि कश्चिदेतस्य निर्णयाय प्रवर्तते, तर्हि तं प्रति एवं ब्रूयात्—श्रेष्ठराज्यसमवाप्तये एषु कः सर्वातिशायी वर्तते। शासकप्रजयोः सामञ्जस्यम्, सैनिकानां नियमानुसारं कर्त्तव्यपालनम्, शासकानां ज्ञानानुसारं कर्तव्यपालनम्, शासकानां ज्ञानानुसारं सावधानता, आहोस्वित् बालकेषु, स्त्रीषु, दासेषु, शिल्पकारेषु, प्रजासु वा स्वाभाविकगुणगणानुसारं कर्तव्यपालनमिति। अत्र ममाभिप्रायस्तु तेनैव गुणेनास्ति यस्य परिपालनं प्रत्येकं जनः स्वभावानुसारं करोति। उक्तं यथा—

Well then, listen, and see if you think I am talking sense, I believe justice is the requirement we laid down at the beginning as of universal application when we founded our state, or else some particular form of it. We laid down, if you remember, and have aften repeated, that in our state one man was to do one job, the job he was naturally most suited for[1].

अस्यां परिस्थितौ यदि कश्चित् चर्मकारः प्रकृत्या तस्मिन्नेव कर्मणि अनुवृत्तः स्यात्तथा च कश्चित्तं सैन्यबले नियोजयितुं प्रेरयति, एवमेव सैनिकः संरक्षकवर्गेषु गन्तुमिच्छेत् तर्हि किं तन्न्याय्यं भवेत्? मन्ये एतदनुभावनं राज्यस्य विनाशाय भविष्यति। तस्मादेतन्निश्चितं यत् प्रत्येकं जनः स्ववर्गे स्थितः स्वकर्म कुर्यात् अन्यस्य कार्यं कुर्वन्, अन्यायं मा कार्षीत्। एतदेव वक्ति गीता—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥**
**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्[2] ॥**

---

1. Republic - 433A ।
2. गीता 18।45,47।

एवमेव रिपब्लिके प्लेटो ब्रूते—

Interference by three classes with each other's jobs, and interechange of jobs between them, therefore, does the greatest harm to our state, and we are entirely justified in calling it the worst of evils[1].

एवमेव जगदुत्पत्तिविषयकप्रश्नानन्तरं वर्णधर्मव्यवस्थापनं कथमभवदिति सन्दर्भे उपनिषत्स्वपि प्रोक्तम्—

सृष्टेः प्रारम्भकाले ब्रह्म एवासीत् तदेकं सत् क्षत्रमसृजत् ततो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानं अजायत। क्षत्रात् पुनर्वैश्य उत्पन्नः, वसु-रुद्र-आदित्य-विश्वेदेवाश्च। पुनः शुश्रूषाकामनया पूषन्नुत्पादितः, स च शूद्रत्वं लेभे पृथिवीयं पोषयति जनान्। तस्मादेते चत्वारो वर्णा धर्माभिमुखेन अजायन्त। ततो लोकसमृद्धिर्जातेति[2]। इत्थं यद्यपि सुस्पष्टरूपेण वर्गविभागः उपनिषत्सु नोपलभ्यते, तथापि परम्पराक्रमरूपेण तु वर्तत एव। इदानीन्तना एतस्य खण्डनं कुर्वन्ति, किन्तु प्लेटो प्राकृतिकवर्णस्वभावानुसारं कर्मकरणाय सर्वानुपदिशति, यश्च एतद्विपरीतं करोति स अन्यायं विधते इति पूर्वमुक्तमेव।

## औपनिषद्गुणानां विवेचनम्

महाभारतीयशीलनिरूपणाध्याये शीलस्य माहात्म्यं प्रतिपादितम्। तत्र धृतराष्ट्रो दुर्योधनं क्लिन्नमानसं दृष्ट्वा पाण्डवसदृशसमृद्ध्यवाप्तये शीलमुपदिदेश। प्रोवाच च—

**शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।**
**नहि किञ्चिदसाध्यं वै लोके शीलवतां भवेत्[3] ।।**

अर्थात् सच्चरित्रतया त्रयो लोका जेतुं शक्यन्ते। अत्र संदेहो न कार्यः, शीलवतां जनानां किमपि कार्यमसाध्यं नैव भवति, तस्मात् हे पुत्र! शीलवान् भव, इति। यत्र शीलं भवति तत्र धनं, कीर्त्तिः, सत्यं, ज्ञानं, बलं, धर्मश्च उत्पद्यन्ते। तद्यथोक्तम्—

**धर्मःसत्यं तथा वृत्तं बलञ्चैव तथाप्यहम् ।**
**शीलमूला महाप्राज्ञ! सदा नास्त्यत्र संशयः[4] ।।**

राज्ये यो हि नरो राजा वा शीलवान् भवति, तस्य कीर्त्तिः, बलं, धर्मश्च प्रवर्धते। उपनिषत्सु राज्यविवरणं तु तथा नोपलभ्यते, किन्तु शीलानां विवरणं प्रसृतमस्ति। यत्र धर्मस्तत्र सत्यम्, तत्रैव न्यायः समाजे प्रचलतीति प्रब्रुवन्नुपनिषदृषिः प्रोवाच—

1. रिपब्लिक - 434सी. पेज 207।
2. बृहदारण्यक॰ 11।1।4।
3. शीलनिरूपमाध्याये - महाभारते -15।
4. शीलनिरूपाध्याये - 62।

"स नैव व्यभवच्छ्रेयोरूपमत्यसृजत् धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयान् समाशंसते धर्मेण यथा राज्ञैवं यो वै स धर्मः, सत्यं वै तस्मात्सत्यं वदन्तमाहुधर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीति एतद्वै तदुभयं भवति[1]।"

सृष्टौ ब्राह्मणक्षत्रियविट्शूद्राणां सत्यामपि संरचनायां प्रत्येकं स्वस्वकार्याणि कुर्यादिति धिया ब्रह्मणा श्रेयोरूपो धर्मः संरक्षितः। स धर्म एव क्षत्रस्य क्षत्रमासीत्। धर्मेणैव निर्बलोऽपि बलवन्तमधिशास्ति, राजापि तं रक्षयति, तथा धर्मवचनमनुसृत्य तदनुसारं करोति च। धर्मः सत्यमनुसरति। सत्यञ्च धर्ममनुसरतीति, तस्मादुभयोर्मध्ये तादात्म्यमिति।

धर्मः खलु समाजं नियन्त्रयति। सत्यस्य पन्थानमाधृत्य असत्ये वर्त्मनि स्थितस्य राज्ञो निरोधको धर्मः। धर्मसत्याभ्यां विना नहि समाजस्य स्थितिः। प्रत्येकं वर्गः स्वस्वकर्मण्यभिरतो भवेत् तदैव धर्मो न्यायश्च संप्रवर्तते। यश्च संक्रामत्यन्यस्मिन् कर्मणि स अन्याय्यमाचरति[2]। एतदेव प्लेटोमहाशयेनाप्यभिहितं रिपब्लिके। तद्यथा—

So that is what justice is. And when each or our three classes (Businessmen, Axiliaries and guardians) does its own job and minds its own business that is justice and makes our state just[3].

उपनिषदस्तत्काले सम्प्रवृत्तस्य कर्मकाण्डदोषस्य निरासाय, अथ च लोभप्रयुक्तराज्ञां तृष्णाबुद्ध्या समाकृष्टवतां ब्राह्मणानां प्रतिरोधे संरचिताः। तद्यथोक्तं मुण्डकोपनिषदि—

**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति[4] ॥**

यज्ञाहुतयः सूर्यरश्मीनवाप्य यजमानान् स्निग्धेन वचसा स्वर्गं परिकर्षन्ति, किन्तु अत्र केचन विप्रतिपद्यन्ते। तत्राङ्गिरा ऋषिर्ब्रूते— एतानि यज्ञानि खलु अदृढानि सन्ति याज्ञिकानि कर्मकाण्डानि खलु अपराविद्यारूपेण अवतिष्ठन्ते। तस्मादेतेषु 18 प्रकारकाणि अवरकर्माणि उक्तानि खलु न श्रेष्ठतां वहन्ति। ये इदं श्रेष्ठं मन्यन्ते, ते पुनर्जरामृत्यू सम्प्राप्नुवन्ति। तस्मादेव आध्यात्मिकं कर्म आचरणं च परिपालनीये। यज्ञकर्म कुर्वन्त आचार्या एतेन कर्मणा अन्यान् पारेप्सून् भावयन्तोऽन्धपरम्परामेव विकासयन्ति।

यज्ञानां यज्ञकर्तॄणाञ्च निन्दां भावयन् सुत्तनिपातोऽपि ब्रूते—

**ब्राह्मणा सेहि धम्मेहि किच्चाकिच्चेषु उस्सुका**
**याव लोके अवतिंसु सुखमेधित्थ'यं पजा ॥**

1. बृहदारण्यक 14।4।1।
2. टिप्पणी - सत्यप्रतसिंद्धान्तालंकार की बृहदा॰ 14।4।1 पर।
3. रिपब्लिक 434 सी॰ पृ॰ 206।
4. मुण्डक 7।2।1।

तेसं आसि विपल्लासो दिस्वानं अणुतो अणुं
राजिनो च वियाकारं नारियो समलंकता ॥

* * * *

गोमण्डलपरिब्बूळ्हं नारीवरगणायुतं
उळारमानुसं भोगंअभिज्झायिंसु ब्राह्मणा ॥

ते तत्थ मन्ते गन्थेत्वा ओक्काकं तदुपागमुं
पहूतधनधञ्ञोऽसि यजस्सु बहु ते धनं ॥

ततो च राजा सञ्ञत्तो ब्राह्मणेहि रथेसभो
अस्समेधं पुरिसमेधं वाजपेय्यं निरग्गलं
एते यागे यजित्वान ब्राह्मणानं अदा धनं॥

* * * *

ततो च देवा पितरो इन्दो असुरक्खसा
अधम्मो इति पकक्न्दुं यं सत्थं निपती गवे ।

तयो रोगा पुरे आसुं इच्छा अनसनं जरा
पसूनं च समारम्भा अट्ठानुंवतिमागमुं[1] ॥

इत्थं सुत्तनिपाते पूर्वोक्तब्राह्मणकर्मणां भूरिशो निन्दा प्रवर्तते, अतः कर्मकाण्डात्मककृत्यानां वारणाय उपनिषदः संरचिताः। यथा च श्रमणानां ब्राह्मणानां च विरोधे समाजे सुस्थिरा गतिरभवत्। विरोधिनः श्रमणास्तु यज्ञस्य कथमुत्पत्तिरिति प्रसङ्गेऽपि भाषितवन्तः, कथञ्च तत्र लोभादिप्रवृत्तीनामुत्पत्त्या व्याधीनां प्रवृत्तिर्जातेत्यपि आलोचितवन्तः। औपनिषदा ब्राह्मणाः क्षत्रियास्तु यज्ञस्य अपर्याप्ततां विभाव्याध्यात्मदर्शनं प्रस्तुतवन्तः। कर्मकाण्डं परित्यज्य गुणानामाचरणस्य तदनुसारसाधनानां परिपालनस्य च विधीन् समुपदिष्टवन्त इति।

या खलु ब्राह्मणधर्मे परम्परा आसीत् तस्यां तु वर्गविभाजने कर्मानुसारमेव कार्याणां माहात्म्यमासीत्। तस्मात् कर्मसु सांकर्येणाधर्मस्योत्पत्तिर्जाता, अथ च गुणानां व्यतिरेकोऽपि उत्पद्यते। फलतो विचारवन्तो ब्राह्मणाः क्षत्रियाश्च यत्र आध्यात्मिकविधिना लोभादीन् दोषान् अपाकर्तुं विधीन् निर्मितवन्तः, ते विधय इदानीं प्रस्तोष्यन्ते— उपनिषत्सु विशेषरूपेण साधनभूताः पञ्चगुणा आख्याताः। एतैरेव ब्रह्मविद्याया बोधोऽपि भवितुमर्हतीति च प्रोक्तम्—

**"उपनिषदं भो ब्रूहीति। उक्ता ते उपनिषद् ब्राह्मीं वाव ते उपनिषदमब्रूमेति।**
**तस्यै तपो दमकर्मेति प्रतिष्ठा। वेदा सर्वाङ्गानि सत्यमायतनम्।**
**यो वा एतामेव वेद। अपहतपाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति[2] ॥**

1. ब्राह्मणधम्मिकसुत सुत्तनिपात - 15-28।
2. केनोपनिषद् चतुर्थः खण्डः पृ. 36।

इह हि उपनिषदः प्राप्त्युपायभूतानि तप आदीनि साधनानि सत्त्वशुद्धेर्ज्ञानमुत्पाद्यन्ते। तद्यथा— ब्रह्मज्ञानस्य प्रतिष्ठा तपो-दम-कर्मसु आधृता। अत्र शारीरिकनियन्त्रणं तपः (फिजिकल कन्ट्रोल), मानसिकनियन्त्रणं च दमः (मेन्टल कन्ट्रोल) इति। इत्थम् अन्यानि यानि ब्रह्मप्रतिपादकानि कर्मभूतानि भवन्ति, तानि प्रतिष्ठात्वेनोक्तानि। एतेषामाधारेण ब्रह्मावाप्नोतीति ब्रह्मबोधरूपप्रासादस्य वेदाः सत्यानि च अङ्गानि भवन्ति।

सकलानि खलूपायभूतानि मूल्यानि उपनिषन्मूलकानि इह पञ्चैव प्राप्यन्ते। पञ्चस्वपि प्रथमे द्वे दमतपसी च संयमनस्य उपायभूते। अन्यानि च त्रीणि कर्म-वेद-सत्य-प्रभृतयो मुख्यगुणा अपि ब्रह्मज्ञानस्य उपाया इति। तस्मादेतेषां विवरणमुखेन उपनिषत्सु प्राप्यमाणानां गुणानामन्तर्भावः प्रदर्श्यते। किञ्चैतेष्वेव पारम्पर्यगुणकथनप्रकारेण प्लेटोकृतरिपब्लिकगुणा-नामप्यन्तर्भावो भवतीति तदर्थं प्रयत्नो विधास्यते। मुण्डके च ये गुणा आत्मस्वरूपाधिगतये चत्वार उक्ताः, तेऽपि एतेष्वेवान्तर्भूताः। तद्यथोक्तम्—

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।**
**अन्तः शरीरे ज्योतिर्मयो हि शुभ्रः यं पश्यन्ति यतयःक्षीणदोषाः[1] ।।**

एतेष्वपि गुणेषु कश्चनैकोऽतीवावश्यकः स्यादिति उपलक्ष्य मुण्डक एव प्रतिभाषितम्—

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः[2] ।।**

तस्मादत्रापि ज्ञानस्यैव मुख्यं माहात्म्यमिति विभाव्य सर्वप्रथमं ज्ञानगुणस्य प्लेटोरिपब्लिकवत्प्राथम्येन विवेचनमुपस्थाप्यते।

## १. ज्ञानम् (Wisdom)

उपनिषदुपदिष्टब्रह्मबोधरूपफलस्य साधनेषु वेदास्तदङ्गानि च पूर्वमुक्तानि। वेदास्तदङ्गानि च खलु विवेचितानि सन्ति शंकरभगवद्पादैः, वेदाश्चत्वारः, सर्वाणि चाङ्गानि, शिक्षादीनि षट्कर्मप्रकाशकत्वाद्वेदानां तद्रक्षणार्थत्वादङ्गानां प्रतिष्ठात्वम्[3] । किञ्च, पूर्वमेव आत्मनोऽवाप्तये सम्यग्ज्ञानस्य माहात्म्यं प्रतिपादितम्। तथा चान्येषां तपः, कर्म-उपासनादीनामप्राधान्यमपि, न चक्षुषा इत्यादिभिः प्रदर्श्य ज्ञानस्यैव प्राधान्यं प्रतिपादितम्। तस्मादिह ज्ञानस्वरूपस्यैव साधनत्वेन प्रथममुपयोगित्वमुपाद्यते।

ज्ञानस्य साधनानि भवन्ति वेदाङ्गानि, तेषु खलु गण्यन्ते शिक्षा-कल्प-व्याकरण-निरुक्त-ज्योतिष-छन्दांसि। एतैः खलु वेदबोधितवाक्यानां सम्यगाकलनं विधीयते, ततश्च

1. मुण्डक 5।1।3।
2. मुण्डक 8।1।3।
3. केन० उप० शांकरभाष्य 8।4।

तैर्ब्रह्मविषयकज्ञानस्य स्वरूपं स्पष्टीक्रियते। तस्मादेतानि षडङ्गानि चतुर्भिर्वेदैः सह आत्मनः स्वरूपमवबोधयन्ति। आत्मा खलु निरञ्जनः पुण्यपापाद्विमुक्तो भवति। स एकाकी प्रथमः। किन्त्वसौ अहमस्मीति यदा व्यावहरत् ततोऽहंनामाभवत्। अयमहंनामक आत्मा एकाकी सन् बिभेति। तस्मादेवोक्तम्—

"सोऽबिभेत्। तस्मादेकाकी बिभेति। स हायम् ईक्षांचक्रे। यन्मदन्यन्नास्ति, कस्मान्नु बिभेमीति। तत एवास्य भयं वीयाय। कस्माद्धि अभेष्यत्। द्वितीयाद् वै भयं भवति। स वै नैव रेमे। तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। स ह एतावानास, यथा स्त्रीपुमांसौ संपरिष्वक्तौ। स इममेव आत्मानं द्वेधा अपातयत्। ततश्च पतिश्च पत्नी च अभवताम्। तस्मादिदं अर्धवृंगलमिव स्वः[1]।"

इत्थं सृष्टिक्रम उपस्थापित उपनिषत्सु। सृष्टिक्रमे पुन आत्मा नामरूपाभ्यां व्याक्रियते। तत्र प्राणन्नयं प्राणः, वदन् वाक्, पश्यन् चक्षुः, शृण्वन् श्रोत्रम्, मन्वानो मनः जायते। यस्तु खलु एतेषु नामरूपेषु एकमासृत्य आत्मानम् उपासते, स न एनं वेद। यतो हि अयं सर्वस्य आत्मा, तस्मात्, अयं सर्वरूपात्मको वेदितव्यः। अयमेवात्मा ब्रह्म अपि भवति। तस्मादयं जीवो ब्रह्म एव। एतच्च महावाक्येन अहं ब्रह्मास्मि इत्यनेन बोध्यते।

अहं रूपात्मकस्य आत्मनो जगति यथा विवर्तरूपस्वरूपं भवति, तस्मिन् सर्वं खलु ज्ञातृज्ञेयरूपं जगत् प्रतिभासते। तस्मिन् प्रतिभासरूपे जगति व्यावहारिकसत्तामुपगम्य आत्मा ब्रह्म-क्षत्र-विट्-शूद्ररूपतां बिभर्ति। एतेषु अन्तर्भूतदेवाश्च प्रादुरभूवन् यथा— इन्द्रः, वरुणः, सोमः, पर्जन्यो, यमः, ईशान इति। वसवो, आदित्या, विश्वेदेवा, मरुत इति। पूषा इयं यथा सर्वं पुष्यति तस्मादिति पूषा। इत्थं प्लेटोकृतपुरस्वरूपोपपादनमिव आत्मनो जगदुत्पादकप्रयासोऽत्र दरीदृश्यते।

Society originates, then said I, so for as I can see, because the individual is not self sufficient, but has many needs which he can not supply himself, or can you suggest any other origin for it.

No, I cannot, he said

And when we have got hold or enough people to satisfy our many varied needs, we have assembled quite a large number of partners and helpers togather to live in one place; and we give the resultant settlement the name of community or state[2].

प्लेटोकृतराज्योत्पादकप्रयास इव जगदुपादकब्रह्मस्वरूपं मूर्तं सदपि अमूर्तमिव लक्ष्यते, आध्यात्मिकसृष्टिस्वरूपस्य विवेचनात्। तस्मादेव आत्मनो लौकिकतां संरचयन् अवादीत् ऋषिः—

---

1. बृहदारण्यक - पृ. 647 मोतीलाल प्रकाशन।
2. रिपब्लिक - 369 बी॰ एवं सी॰, पृ॰ 117।

अयमात्मा सर्वेषां भूतानां लोकः। स यज्जुहोति यद्यजते तेन देवानां लोकः। अथ यदनुब्रूते तेन ऋषीणाम्। अथ यन्मनुष्यान् वासयते, पदेभ्योऽशनं ददाति, तेन मनुष्याणाम्। अथ यत् पशुभ्यस्तृणोदकं विन्दति, तेन पशूनाम्। पदस्य गृहेषु श्वापदा वयांसि अपि पिपीलिकाभ्य उपजीवन्ति, तेन तेषां लोकः[1]।

इत्थमनेनात्मना सर्वं जायत इति सिद्धम्। परञ्च अस्यात्मनः सृष्टिप्रक्रियास्वरूपस्य विबोधस्तु कर्तव्य एव। एतद्ज्ञात्वा न कोऽपि विमुच्यते। अतो ज्ञानस्य सर्वप्राथम्यमुपलभ्यते उपनिषत्सु। वेदान्ते अयमात्मा कथं बुद्धः स्यादित्यस्य कृतेऽध्यारोपापवादाभ्यां पदार्थविवेचनमुपक्रम्यते। तज्ज्ञानाय साधनचतुष्टयसम्पन्नता अपि अनिवार्या। उपसन्नस्य खलु गुरुरध्यात्मविद्यां वदति—

**तस्मै स विद्वान् उपसन्नाय सम्यक् प्रशान्तचित्ताय समन्विताय।**
**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्[2] ॥**

अथ ब्रह्मबोधाय कृतव्रत ओंकाररूपं धनुर्गृहीत्वा आत्मशरेण ब्रह्मलक्ष्यमाविध्यति। ततश्च स ब्रह्मण्यस्मिन् सर्वमोतप्रोतं मत्वा आत्मनश्च तत्स्वरूपं विभाव्य स्वयमपि आत्मक्रीड इव जायते। एतदधिगतये नैतिकगुणानां परिपालनं करणीयमास्ते। एतस्य कृते सत्यं वक्तव्यं भवति। सत्ये परिपालिते सति मनुष्याणां जागतिकदोषाणामपवारणं जायते। सत्ये उक्ते जीवने विविधा आपत्तयः संपतन्ति। अतस्तत्सत्यानुष्ठानं तप इति मत्वा करोति। सत्यस्यात्मनोऽवबोधस्तदैव स्यात् यदाऽस्य ज्ञानेनापि सत्यता प्रतिपादिता भवेत्।

तस्मात् ज्ञानपुरस्सरमस्य बोध इति संतिष्ठतेऽध्यात्ममार्गे। एतत्स्वरूपाधिगतये प्रमातुर्हृदये दृढता भावनीया स्यात्। तस्मादेवोक्तम्— 'नायमात्मा बलहीनेन लभ्य इति[3]। दृढतया, उत्साहेन, ज्ञानेन खलु साधकः श्रेयोरूपं ब्रह्म बोधितुं प्रवर्तते। स सर्वान् प्रेयोरूपकान् तथैव परित्यजति यथा नचिकेता स्वर्गस्थकामप्रवरान्, रथान्, तुरगान्, स्त्रीः च परित्यजति। अयं खलु श्रेयसि ब्रह्मणि स्वं लक्ष्यं विधाय दृढः सन् उत्तिष्ठति जागर्ति। तत इन्द्रियाणि वशीकृत्य विषयेभ्यः प्रतिनिवृत्य मनसः परं बुद्धिमाकृष्य तत आत्मनः स्वरूपं बुद्ध्या तृप्यति। एवं भूतस्य दृढव्रतस्य ज्ञानेन मृत्युमुखगमनस्य अवरोध एव जायते। तच्चोक्तम्—

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्[4]।**
**अनाद्यनन्तं महतः परं ध्रुवं निच्चाय्य तन्मृत्युमुखात्प्रमुच्यते॥**

---

1. अष्टादशी पृ॰ 166 सर्वसेवासंघ प्रकाशन, वाराणसी।
2. मुण्डक 1।2।11।
3. मुण्डक 3।2।3।
4. कठोपनिषद् 1।3।11।

एतच्चैव तत्त्वं श्वेतकेतवे आरुणिः प्रोवाच। यथा एकां शाखां जीवो जहाति, अथ सा शुष्यति। द्वितीयां जहाति सापि शुष्यति। तृतीयां जहाति अथ सा शुष्यति। सर्वं जहाति सर्वाः शुष्यन्ति। जीवापेतं वाव किल इदं म्रियते, न जीवो म्रियत इति। तथैव न्यग्रोधफलस्य सूक्ष्मे बीजेऽपि यत्सुसूक्ष्मं तत्त्वं दृश्यते तदेव महत्फलस्य वृक्षस्य जनकः। स एषोऽणिमा ऐतदात्म्यमिदं सर्वम्। तत् सत्यम्। स चात्मा। तत्त्वमसि श्वेतकेतो इति।

एवमेव लवणमुदके उत्क्षिप्तं तस्मिन् निमज्जति। विलीनमिदं न उपरि पृथग्ज्ञायते जलात् न मध्ये न वान्ते। तस्मात् सर्वत्र ओतप्रोतमिव अयमात्मापि व्याप्तः[1]। तस्मात् तत्त्वमसि श्वेतकेतो।

एवमेव ऐतरेयोपनिषदि ब्रह्मणः स्वरूपं प्रज्ञानरूपेण प्रोक्तम्—

येन वा पश्यति, येन वा शृणोति, येन वा गन्धान् सा जिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु च अस्वादु च विजानाति। यदेतद् हृदयं मनश्च एतत्। संज्ञानं, आज्ञानं, विज्ञानं, प्रज्ञानं, मेधा, दृष्टिः, धृतिः, मतिः, मनीषा, जूतिः, स्मृतिः, संकल्पः, क्रतुरसुः, कामो, वश इति सर्वाणि एव एतानि प्रज्ञानस्य नामधेयानि भवन्ति[2]।

## २. कर्म (साहसम् Courage)

ब्रह्मणो ज्ञानाधिगमाय कर्मणां योगोऽपेक्षितः। कर्मसु बहूनि नैतिकमूल्यानि समागच्छन्ति, किन्तु तेषामेव कर्मणां भवति वैशिष्ट्यं येषामनुयोगेन तत्त्वाधिगमो जायतेऽध्यात्मवादे। वीर्यकर्मणः संप्रयोगे कस्यापि माहात्म्यमधिगम्यते। एतदेव कर्म साहसेऽन्तर्भवति। यथा प्लेटो रिपब्लिके साहसस्य माहात्म्येन सैनिकानां वर्गं स्थापयति, तथैव वीर्यस्य माहात्म्येन कस्यापि महत्त्वं ख्याप्यते। केनोपनिषदि ब्रह्मणो विजयमभिलक्ष्य चर्चा वर्तते। तत्र ब्रह्मणो विजयेन महिमा भवति देवानाम्, देवाश्च परस्परं वीर्यवन्तं भावयन्तोऽन्यानपेक्षया एव स्वान् बलशालिनः मन्यन्ते। किन्तु बलस्य परीक्षायां ते पराजिता मौनमालम्बन्ते। अग्नेर्ज्वलनपराक्रमस्य, वायोरानयनपराक्रमस्य, सम्यक् परीक्षा विहिता। ते अशक्ताः सन्तोऽब्रुवन् न वयं शक्नुमस्तं यक्षं वेदितुम्। तत एका अतिदिव्या स्त्री तत्र आजगाम, या खलु इमं यक्षं वीर्यवन्तं ब्रह्म इति प्रोवाच। तेन इन्द्रः सन्तुष्टः सन् ब्रह्मस्वरूपमवागच्छत्। साहसं वीर्यं वा कर्म ब्रह्मावाप्तेः कारणमिति, आध्यात्मिकं ब्रह्म आभ्यां कर्मभ्यां ज्ञायते। ब्रह्मण आदेशेनैव विद्युत् प्रकाशते, मनो स्मरति संकल्पयति वा। तस्मात् वीर्यवता सता यज्ञस्य माहात्म्यं ज्ञातव्यम्[3]।

एकत्र वीर्यवान् यथा भवति यक्ष इति, तथैव अपरत्र बलवान् भवति विज्ञानवतोऽपि श्रेष्ठ इति। एतच्च छान्दोग्ये नारदं सनत्कुमारः प्रोक्तवान्। उपासनाक्रमे कस्य उपासना

1. छान्दोग्ये षष्ठे अध्याये खण्डेषु 11,12,13।
2. ऐतरेय - 5 पञ्चमः खण्डः।
3. केनोपनिषत् 3।4 खण्डः।

कर्तव्या इति प्रश्ने नारदः प्रोवाच-नाहं आत्मविद् अपि तु मन्त्रविदिति। इदं च श्रूयते यत् आत्मवित् शोकं तरति, तर्हि मां भगवान् शोकस्य पारं तारयतु। ततः सनत्कुमारः संसारस्य स्वरूपं दर्शयन् उपदिदेश—'यत्खलु उपासनायां त्वं जानासि तन्नाम एव, नाम्नः वाक् श्रेष्ठा, वाचो मनः श्रेष्ठम्, मनसः संकल्पः, संकल्पात् चित्तम्, चित्तात् ध्यानम्, ध्यानात् विज्ञानम्, विज्ञानात् बलं श्रेष्ठमिति। यतो हि शतं विज्ञानवतां एको बलवान् आकम्पयते। स यदा बली भवति, अथ उत्थाता भवति, उत्तिष्ठत् स परिचरिता भवति, उपसत्ता भवति। उपसीदन् द्रष्टा, श्रोता, मन्ता, बोद्धा, कर्ता, विज्ञाता वा भवति। बलेन वै पृथिवी तिष्ठति, बलेन अन्तरिक्षम्, द्यौः पर्वताः, देवमनुष्याः, पशवः, वयांसि, वनस्पतयः, श्वापदानि आकीटपतंग-पिपीलकम्। तस्मात् बलमुपास्स्वेति[1]।'

इत्थं बलवताम् एव सकलं कर्म भवति। यो हि बलवान् स खलु गुरुमुपसेवते, ज्ञानं च लभते। ततो ब्रह्मज्ञ आत्मज्ञो जायते। राष्ट्रं नियमयति। बलवान् एव आत्मानमपि जानाति। तदुक्तम्—

**नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाप्यलिंगात्।**
**एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम[2]॥**

अतो बलस्य महन्महत्त्वमुपनिषत्सु प्रदर्शितम्। आत्मज्ञानं खलु बलमहिम्ना जायते, वीर्येण यथा बोधो जायते सो हि ब्रह्म एव। याज्ञवल्क्यजनकयोः संवादेऽपि याज्ञवल्क्यः जनकं पृष्टवान्-यत्किमपि भवान् तत्त्वबुभुत्सायाम् अन्यत् श्रुतवान् तन्मे निवेदयतु। ततो जनकेन शैलिनो वाग्रूपा प्रज्ञोपासना, उदकस्य प्राणरूपा प्रेम्ण उपासना, वार्ष्णस्य चक्षुरूपा सत्योपासना, गर्दभीविपीतस्य श्रोत्ररूपा अनन्तोपासना, सत्यकामजाबालस्य मनोरूपा आनन्दोपासना, विदग्धशाकल्यस्य हृदयस्यास्थितोपासना ब्रह्मरूपात्मिका इति उक्ता। ताः सर्वाः निरस्य नेति नेति वचनेन आत्मनो अग्राह्यत्वम्, अशीर्यत्वम्, असंगत्वम्, वा प्रत्यपादयत् याज्ञवल्क्यः। ततो जनकोऽवदत् एतादृग्ब्रह्मबोधे त्वम् अभयत्वं प्राप्तवानिति अभयरूपात्मकाय ब्रह्मज्ञानवते भवते नमः। अयं विदेहः खलु तव भवतु। ज्ञानिने इदं राष्ट्रं समर्प्यते[3]।

अत्र यद्यपि साहसेन ज्ञानावाप्तिरिति न परिलोक्यते रिपब्लिके, तथापि बलेन, वीर्येण, अभयत्वेन तदेव तत्त्वमधिगम्यते यत्खलु ज्ञानेनेति ब्रुवन्नुपनिषदृषिः साहसप्रयुक्तसद्गुणानां एकस्मिन् ब्रह्मण्येव समवयोगं भावयति। तस्मादुपनिषत्सु ज्ञानमार्गस्य सत्यपि महत्त्वं वीर्यस्यापि महत्त्वमापाद्यते। रिपब्लिके साहसिको यथा राष्ट्रं रक्षति, तथैव उपनिषत्सु बलवान् अन्यो वा राष्ट्रसंरक्षणाय उद्युक्तोऽपि ज्ञानी भवति। तस्मात् भवत्यस्य ततोऽपि वैशिष्ट्यमिति।

---

1. छान्दोग्य - 2।8।7।
2. मुण्डक 3।2।3।
3. बृहदारण्यक - 4।2।4।

प्लेटोमहाशयेनापि अभिहितम् यद् दार्शनिकेषु साहसं, बौद्धिकोदारता, झटिति बोधः, स्मृतिश्चेत्यावश्यका गुणाः—

You will remember we found that they also included courage, greatness of mind, quickness to learn and a good memory (in philosopher Ruler)[1].

इत्थं रिपब्लिकोपनिषदोः साहसमभयत्वं वात्र विवेचितम्। सुत्तनिपातेऽपि कृतकर्मक्षयो भिक्षुः एकाकी विहरति सिंहवत्, तद्यथा[2]—

**"सीहो यथा दाठाबली पसह्य राजा मिगानं अभिभुय्यचारी।**
**सेवेथ पन्तानि सेनासनानि एको चरे खग्गविसाणकप्पो ॥"**

इत्थमध्यात्मक्षेत्रेऽयमभययोगो रिपब्लिकस्य व्यावहारिकाध्यात्मक्षेत्रेऽपि तदेव स्वरूपं धारयति। बृहदारण्यके तु कर्मणः सक्तासक्तत्वेन विभागं कृत्वा जीवने तदनुरूपं कार्यं कुर्वतां जनानां स्वरूपं तत्कालानुसन्धायकं वचनं कर्मफलव्यवस्थां च उद्भाव्य अकामयतस्य ब्रह्मावाप्तिरित्युक्तम्। तद्यथोक्तम्[3] —

**तदेव सक्तः सह कर्मणेति लिङ्गं मनो यत्र निषक्तमस्य।**
**प्राप्यान्तं कर्मणस्तस्य यत् किंचेह करोत्ययम्।**
**तस्माल्लोकात् पुनरैति अस्मै लोकाय कर्मणे इति तु कामयमानः।**

अथ कामयमानः। योऽकामो निष्काम आप्तकामः आत्मकामः। न तस्य प्राणा उत्क्रमन्ति ब्रह्मैव सन् ब्रह्माप्येति[4]।

अस्यामवस्थायां समत्वं प्राप्नोति सः तत्र पक्षपातविहीनतां प्रादुर्भवति। तस्य स्वजनपरजनभावः, उच्चनीचभावः, पुण्यपापभावो निगलितो भवति। उक्तं च— अस्यैतद् अतिच्छंदा अपहतपाप्मा अभयं रूपम् इति। अस्य रूपस्यास्य ब्रह्मणोऽध्यात्मसंप्रतिष्ठायाम् अजरत्वममरत्वमनुगम्यते। तदेव वक्ति श्रुतिः—

स वा एष महानज आत्मा अजरः, अमरः, अमृतः, अभयः, ब्रह्म। अभयं वै ब्रह्म। अभयं हि वै ब्रह्म भवति। य एवं वेद[5]।

इत्थं कर्माणि बहुषु भावप्रत्ययेषु सत्सु अभयत्वस्य वीर्यत्वस्य बलत्वस्य च तत्र योगात् कर्मसु एव साहसस्यान्तर्भावो रिपब्लिकदिशा भवितुमर्हतीति, तस्मादेवैतस्य मीमांसा भवति।

---

1. रिपब्लिक - 6 - 490 डी, पृ॰ 285।
2. सुत्तनिपात - खग्गविसाणसुत्त - 38।
3. बृहदारण्यक 97 - अष्टादशी - विनोबा।
4. बृहदारण्यक 98 - अष्टादशी - विनोबा।
5. वही 112 - अष्टादशी - विनोबा।

## ३. तपो दमः संयमश्च

भारतीयजीवने तपसो भवति महन्माहात्म्यम्। अत्र ये तपस्विनः, संयमिनः, सन्ति, ते समाजे पूज्यन्ते अर्च्यन्ते। वेदकालादारभ्य तपश्चरणयुक्तेषु श्रमणा ब्राह्मणाश्च उभावपि स्तः। किञ्च, कर्मकाण्डप्रधानानां ब्राह्मणानां यज्ञाचरणप्रवृत्त्या खिन्नास्तपस्विनो ज्ञानप्रधानं कर्म कुर्वन्ति स्म। केनोपनिषदि तपोदमकर्मेति प्रतिष्ठा ब्रुवाणो मुनयस्तपोदमयोः महत्त्वं प्रत्यपादयन्। तस्य व्याख्यायां श्रीमच्छङ्कराचार्येण अभिहितम्— तपः कर्मेन्द्रियमनसां समाधानम्। दमः उपशमः[1]। किन्तु एतस्य सत्यव्रतसिद्धान्तालंकारेण शारीरिकनियन्त्रणं मानसिकनियन्त्रणं वार्थः कृतः[2]। इत्थमिदमनुमीयते यत् तपसा दमेन वा बाह्याध्यात्मिकविचाराणां कर्मणां संयमःक्रियते। मनुष्यो हि उभाभ्यामेव विचाराभ्यां प्रभावितो भवति, तस्मात् उभयोरुपरि संयमः करणीयः। संयमेनैव मानवः श्रेयस्त्वं प्राप्नोति, विद्यां गृह्णाति, समाजे सभ्यो नागरिकः, शिष्टश्च जनः कथ्यते। अतएव एतस्य प्रशंसा रिपब्लिकेऽपि बहुधा कृता।

भारते तु बाह्यसंसारादध्यात्मजगतो महत्त्वमधिकं दीयते। तस्मात् बाह्याचारापेक्षया अन्तराचरणेन जनाः प्रतिष्ठां लभन्ते। यो हि आन्तरे विशुद्धसत्त्वः स परमं निश्रेयसमधिगच्छति। अतस्तपसो हि अत्र माहात्म्यं भवति ब्रह्मस्वरूपोन्मीलनाय। यथोक्तं मुण्डके—

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।**
**अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्[3] ॥**

अर्थात् ब्रह्मणा तपो विहितम्। ततस्तेन तपसा तद्वृद्धिमाप्नुवत् विकसच्च अन्नं प्राणः मनः सत्यं लोकः कर्म उत्पद्यन्ते। तस्य तपसा ज्ञानं प्रादुरभवत्। ततो व्यापकत्वात् तस्माद् ब्रह्मणो नामरूपात्मकं जगज्जायते। तत्र तपसः प्रकारद्वयमुपगतम्। एकेन कर्मकाण्डात्मकेन तपसा सुकृतं प्राप्यते, अन्येन च ज्ञानात्मकेन कर्मणा श्रद्धया च स्वमलमपकुरुते जनः। स खलु शुद्धो भूत्वा सूर्यद्वारेणाऽमृतत्वमव्ययं वा पदं ब्रह्म भजते[4]। किञ्च तपसो यत्स्वरूपं पूर्वं यज्ञसम्पादनपरमासीत्तद् हि पश्चात् दानसम्पादनपरमेव जातम्। तस्मादेव तत्रैव मुण्डके सत्येन लभ्यस्तपसा ह्येष आत्मा इत्युच्यते। तत्र तपसोऽर्थो भवति— मनसश्चेन्द्रियाणां च ह्येकाग्र्यं परमं तप इति। तस्माद् आत्मदर्शनाभिमुखीभावस्य परमं साधनं तपो नेतरत् चान्द्रायणादिः[5]। तस्मादेव चान्द्रायणादिव्रतानां कर्मकाण्डविहितानामत्र हीनत्वमुद्घोषितम्। तस्मादेव च तैत्तिरीये तपसः स्वाध्यायप्रवचनाभ्यां सह भावो विहितः। उक्तं च—

---

1. केन-भाष्य-शंकर-पृ. 36 (ईशादिदशोपनिषदः)।
2. केन-व्याख्या - सत्यव्रत॰ पृ. 20 (एकादशोपनिषत्)।
3. मुण्डक - 1।8।
4. मुण्डक 11।1।
5. मुण्डक - 5।1।3 शांकरभाष्य पृ. 168।

**"तपश्च स्वाध्यायप्रवचने च, दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च[1]।"**

विद्यार्थिजीवने स्वाध्यायप्रवचनयोरधिकं भवति मूल्यम्, तस्मात् तदेव परमं तप इति उच्यते, विद्यार्थिनामध्ययनमेव तपः इति वचनात्। संयमपूर्वकं वास एव तपः, तस्यैव च भवति अन्तिमं महत्त्वम्। तद्यथा तत्रैव-तप इति तपोनिष्ठः पौरुशिष्टिः इति वचसा एतस्यैव श्रेष्ठत्वमधिकृतम्। किञ्च तपन्तं न निन्देत। तद्व्रतम्[2] इति छान्दोग्यवचसापि तपसो महत्वं प्रतिपादितम्। त्रिषु धर्मस्कन्धेषु तपसः स्थानं वानप्रस्थानां कृते विहितमेव। अत्र हि स्वगृहस्य कार्यं पुत्रेभ्यः समर्प्य संयमपूर्वकजीवनयापनाय संन्यासस्य प्रथमस्थानमिव त्यागपूर्वककर्मणां व्यवस्थापनं तप आचरतां तपस्विनां जीवनम्। उक्तं यथा—

**एवं गृहस्थाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ।**
**वनं वसेत् सुनियतो यथावद्विजितेन्द्रियः ॥**
**देवताभ्यस्तु तद्धृत्वा वन्यमेध्यतरं हविः ।**
**शेषमात्मनि युञ्जीत लक्षणं च स्वयं कृतम्[3] ॥**

अस्मिन् हि तपःपूते आश्रमे गृहं परित्यज्य गन्तुकामो याज्ञवल्क्यो ब्रूते स्वपत्नीम्-अहम् इदानीमस्मादाश्रमात् प्रव्रजिष्यामि। तर्हि तव कात्यायन्या सह अन्तं करवाणीति। किन्तु मैत्रेयी कथितवती, किन्तु भो यदि सर्वा पृथिवी वित्तेन पूर्णा स्यात् किं तेन अहम् अमृता स्यामाहोस्वित् नेति। तदा याज्ञवल्क्यः प्राह— न हि मैत्रेयी, यथा उपकरणवतां जीवनं भवति, तथैव तव अपि जीवनं भविष्यति। अनेन वित्तेन तु अमृतत्वस्य नैव आशास्ति। तदा सा उवाच— यदि वित्तेन अमृतत्वं न उपलभ्यते, तर्हि तत्तत्वं प्रब्रवीतु येनाहमपि अमृता स्यामिति। तदा याज्ञवल्क्यस्तस्यै आत्मतत्त्वम् उपदिदेश, आत्मा वारे द्रष्टव्यः, श्रोतव्यो, मन्तव्यो वा। आत्मनि खलु दृष्टे, श्रुते, मते, सर्वं विदितं भवति[4]।

किञ्च, जीवनस्य व्याधिभिर्जनो न कदापि पीडितो भवेदिति धिया यो व्याधिं तपो मनुते, स परमं धाम गच्छति। यश्च मृतं शरीरम् अग्निना प्रज्वालयिष्यत इति भिया बिभेति, किन्तु तदपेक्षया तत् तपः स्वीकरोति, तर्हि सोऽपि परं लोकं जयति। मरणानन्तरं शरीरस्य अरण्ये संनयनं विधास्यते, अग्निप्रज्वालनाय इति यस्तप इव स्वीकरोति, सोऽपि परमं पदं प्राप्नोति[5]। एवंभूतस्य मनुष्यस्य भीतिरपगता भवति। तथा च सः स्वं जीवनं दमनपूर्वकं

---

1. तैत्तिरीय - शीक्षाध्याय नवमोनुवाकः।
2. छान्दोग्य - 2।14।2।
3. मनु॰ 6।1,12।
4. बृहदारण्यक 6।5।4।
5. बृहदारण्यक 1।11।5।

तप इव परिचालयति। तर्हि स जगतो रहस्यं ज्ञात्वा सुखदुःखाभ्यां विरतो जायते। किञ्च, तपोदममोहयोरेकमेवार्थं बाह्याभ्यन्तरसञ्चयरूपेण उपनिषत्साधनत्वेन वृतः। तत्र दम इत्यस्य महत्त्वं साधयता प्रजापतिना देवा, मनुष्याः, असुराश्च, प्रेरिता उक्ता च द-द-द इति। अत्र देवानां द इत्यस्य भावः दम्यते इति क्रियते। यो हि इन्द्रियाणि दमयति स खलु जगज्जयते। तस्मात् तपोदमयोर्माहात्म्यमस्त्येव[1]।

स्वसंयमस्य महत्त्वं प्लेटोमहाशयेनापि भणितम्, संयमः सम्पूर्णजीवने स्वारस्यं स्थापयति, सामंजस्यं स्थापयति। तस्मादेतस्य व्यक्तौ राज्ये च महत्त्वं वर्तते[2]।

### ४. सत्यम् (न्यायः Justice)

मानवजीवने सत्यस्य भवति महत्त्वम्। सत्येन मानवस्य तत्समाजस्य च भवति समुन्नतिः। सत्यात्परं किमपि न श्रेष्ठम्। उक्तं यथा— "नहि सत्यसमो धर्मो न सत्याद् विद्यते परम्"[3]। सर्वस्य मूलं सत्यम्, सत्यं संवर्धयति लोकम्। असत्येन यथा लोकोऽन्याय्यमाचरति। अतः सत्यस्य संरक्षणं कर्तव्यमित्युद्भावयन् मनुः ब्रूते—

**सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम् ।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः[4] ॥**

अत्र प्रियसत्यस्य उपस्थापनाय प्रेरितेन मनुना लोक इति सत्यस्य रक्षणं कर्तव्यमिति समायातमेव।

सामान्यतो लोकस्य सत्यं प्रियं भवेदिति वर्तते स्मृतिकाराणां मतम्। उपनिषत्सु तु सत्यमायतनमेवोक्तं जीवनस्य। अथ च जीवनमस्माकं चाकचिक्ययुक्तेन हिरण्मयेन पात्रेण पिहितं वर्तते। तद् हे पूषन् देव! त्वं सत्यं यदि बोधयितुमिच्छति तर्हि तत् पिधानपात्रम् अपावृणु, येन सत्यस्य स्वरूपमधिगतं स्यात्। सत्याश्रितं जीवनमेव न्याय्यं जीवनमिति धिया भवत्यस्य महत्त्वम्। श्रीमच्छंकराचार्येण तु सत्यधर्माय इत्यस्य व्याख्यानं विदधता प्रोक्तम्-सत्यधर्माय तव सत्यस्योपासनात्सत्यं धर्मो यस्य मम सोऽहं सत्यधर्मा, तस्मै मह्यम्, अथवा यथाभूतस्य धर्मस्यानुष्ठाने दृष्टये तव सत्यात्मना उपलब्धये[5]। अत्रापि यथाभूतधर्मानुष्ठानाय इत्यस्य न्याय्याचरणाय इत्येव भावो ग्राह्यः। यतो हि यथाभूतमर्थमाश्रित एव लोको धार्मिको न्यायप्रियश्च कथ्यते। तस्मादेव इदं कार्यं न्यायस्य उचितं कार्यमिति यथा प्लेटो वदति—

---

1. बृहदा॰ - 1।1।5।
2. प्रजातन्त्र 143।
3. महाभारत - 74।105।
4. मनु॰ 4।138।
5. ईशावास्यो॰ 15 पृ॰ 11।

Then we must remember that each of us will be just and perform his proper function only if each part of him is performing its proper function[1].

यथाभूतमर्थमाश्रित्य मानवः श्रेयोऽधिगच्छति। प्रियमिच्छतो जनस्य तु हेयत्वमुक्तम्[2]। यतो हि प्रियमिच्छन् जनो योगक्षेमाय सकलं करोति, तस्मात् स सत्याधिगमं नैव करोतीति। नीतिशास्त्रे श्रेयसः परिचर्चा विधीयते, किन्तु श्रेयः खलु सत्याश्रितमेव। अविद्यां परित्यज्य स अवतिष्ठते। तद्यथोक्तं श्रीमच्छङ्करभगवत्पादैः-श्रेयः श्रेयः प्रयोजनकर्तव्यता ताभ्यां बद्ध इत्युच्यते सर्वः पुरुषः। ते यद्यप्येकैकपुरुषार्थसम्बन्धिनी विद्याविद्यारूपत्वाद्विरुद्धे इत्यन्यतरा-परित्यागेन एकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयोर्हित्वा अविद्यारूपं प्रेयः श्रेय एव केवलमाददानस्योपादानं कुर्वतः साधु शोभनं शिवं भवति।

अतः श्रेयो रूपब्रह्माधिगतये प्रमाता अपरं तत्तत्त्वं ज्ञात्वा गुरुमुपसृत्य तत्त्वाधिगम-प्रकारमधिगच्छति तदेव प्रोक्तम्—

"तदेतत् सत्यम्। यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपाः। यथाऽक्षराद्विविधा सोम्यभावाः प्रजायन्ते तत्र चैवापियन्ति[3]।" अर्थात् अस्मात् सत्यात् सुदीप्तपावकात् प्रसूतविस्फुलिंगवत् नामरूपे कृतदेहोपाधिनिमित्तमेव जगज्जायते। तत्त्वमक्षरं तु सदेव।

अयमात्मा अक्षरस्वरूपः सत्यबोधेनैव प्राप्तव्यः। सत्यज्ञानेन एव यथा प्राप्यते तस्मात् सत्यमेव जयते नानृतमिति भारतस्य उद्घोषवाक्यं युक्तं विद्यते। न केवलमेतदेव आचार्योऽन्तेवासिनमधिशास्ति— "सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमद......, सत्यान्न प्रमदितव्यम्, धर्मान्न प्रमदितव्यम्[4], इति। एतेषामुपदेशानामपि सत्येन वर्त्मना जीवनाधि-गमनप्रयासस्य विधेयत्वमधिगम्यते। यश्च खलु सत्याधिगन्ता, स निश्चयेन सत्यरूपात्मकं ब्रह्माधिकरोति। तद्यथोक्तम्—

सत्यं ज्ञानमनन्तं ब्रह्म यो वेदनिहितं गुहायाम्। परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता अर्थात् सत्यस्वरूपात्मकं ब्रह्म खलु हृदयगह्वरे स्थितं ज्ञानस्वरूपञ्च, तदधिगम्यते प्रमात्रा अस्योपासनया। दक्षिणोपासनायामपि सत्यस्याधिग्रहणमास्ते। तद्यथा— "यत् तपो दानमार्जवं अहिंसा सत्यवचनमिति, ता अस्य दक्षिणाः[5]।"

यः सत्येन वर्त्मना चलति स अतिवादीति कथ्यते[6]। साधकः खलु विजानन् सत्यं ब्रूते। मनः जानाति, श्रद्धावान् मननं कुरुते, एवं निष्ठया, कृत्या, जानन् खलु सत्यमधिगच्छति।

---

1. रिपब्लिक - 441 ई०, पृ० 218।
2. कठो० 1।2।1।
3. मुण्डक० - 2।1।1।
4. तैतिरीय० 1।11।1।
5. छान्दोग्य० 3।17।4।
6. छान्दोग्य० 1।23।7।

स सुखं प्राप्नोति। तत्र सत्येन वर्त्मना तत्त्वस्य भूमात्वमधिगम्यते। ततो तस्मिन् सुखमपि प्राप्यते। भूमात्वं परमेश्वरस्य सत्यं रूपम्। तस्मादखिलमस्मिन् समायुक्तमास्ते।

सत्यसंकल्पस्तु खलु सत्यमधिगच्छति। असत्संकल्पस्तु खलु यथा कामयते तद्रूपमनृतं कामं प्राप्नोति, भूत्वा पुनः तानेव कामान् प्राप्नोति, यानिहावचितान् मन्यते स्म। तस्मात्पुरुषैः सर्वदा सावधानेन चयनं विधातव्यम्। यदि ब्रह्मलोकं कश्चित् अनुविन्दति तर्हि ब्रह्मलोकं प्राप्नोति। तत्रात्मनो रूपं लभते। एवंभूतो जनो धर्मसत्ययोस्तादात्म्यमनुजानाति। तस्मादेवोक्तम्—

यो वै स धर्मः, सत्यं वैतत् तस्मात् सत्यं वदन्तम् आहुः धर्मं वदतीति। धर्मं वदन्तं सत्यं वदतीति एतद्ध्येव एतदुभयं भवति[1]।

नैतिकधर्माणां पूर्वोक्तानां सर्वेषां कथं जीवनेन सामञ्जस्यं भवतीति, तदपि कुत्रचिदाख्यानेषु समुपलभ्यते। तद्यथा— सत्यकामो जाबालो हारिद्रुमतं गौतमम् उपेत्य तत्राध्ययनाय प्रार्थितवान्। प्रार्थिते सति एतस्य गोत्रं किमिति पृष्टवान्। ततः स अवोचत्—

"नाहमेतद् वेद, भो, यद्गोत्रोऽमहस्मि। अपृच्छं मातरम्। सा मां प्रत्यब्रवीत्-बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साहमेतत् न वेद, यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि। सत्यकामो नामकस्त्वमसि इति। सोऽहं सत्यकामो जाबालोऽस्मि भो इति[2]।"

अत्र झटिति पृष्टस्य सहजभावेनोत्तरे लब्धेऽनुमिनोति आचार्यः—साधुरयं प्रतिवदति। इत्थमिदमसाधारणं वचो ब्राह्मणमृते नान्यो वक्तुं शक्नोति, तस्मादयं ब्राह्मण इति। भवतु नात्र अनेन कस्यापि गोत्रत्वं जातित्वं वा, परन्तु सत्यस्वरूपाधिगतेरयमेव नैतिकः प्रभासत इति वक्तुं शक्यत एव। तस्मात् उपनिषत्सु साधनानां ज्ञानानां नैतिकाचाराणां तथा च श्रेयसः स्वरूपस्य विवेचनं दृश्यते, यद्धि व्यवहारे रिपब्लिकवत्साम्यं विधत्ते। अध्यात्मवादे तु ततोऽप्यधिकतरं प्रशस्यते।

## सुत्तनिपातस्थसद्गुणानां विवेचनम्

सुत्तनिपाते रिपब्लिकवत् गुणा विवेच्यन्ते। किन्तु एते सर्वे गुणा भवन्ति मानवस्य वासनाभिर्मुक्तये, न तु राज्यस्य व्यवस्थायै। यद्यपि यो हि मुक्तो भवति स संयमादिना राज्यव्यवस्थायां सहकारी अपि जायते। तथा भगवान् बुद्ध आमिनोति स्म, यल्लोकोऽयं तृष्णया आबद्धः, तृष्णायाः क्षयस्तु प्रज्ञया भवति, तर्हि प्रज्ञाप्राप्त्यर्थं शीलादीन् गुणान् आचरेदिति। ततो ध्यानस्थेन मनसा लोकः प्रज्ञामवाप्य वासनां परित्यजति। बुद्धोऽपि पूर्वं राजपुत्र आसीत्। अतः पारिवारिकत्वात् स परिवारवासनया एव मोचयितुं प्रयत्नान् विहितवान्। सुत्तनिपातेऽपि तदर्थं आळवकयक्षस्य उपदेशबलेन निर्दिशति-यस्य खलु पारिवारिकस्य

1. बृहदारण्यक॰ 1।4।14।
2. छान्दोग्य॰ 4।4।2।

पार्श्वे चत्वारो धर्मा आचरणरूपेण सम्मिलन्ति, स खलु इह लोकात् निर्वृत्य न शोचति। तद्यथा—

**यस्सेते चतुरो धम्मा सद्धस्स धरमेसिनो ।**
**सत्यं धम्मो धिती चागो स वे पेच्च न सोचति[1] ॥**

अत्र धर्मस्य 'सूस्सूसं लभते पञ्ञ'मिति अट्ठकथाबलेन प्रज्ञात्वं प्रसाधितम्। प्रथमं तावत् तदेव विमृश्यते। तत्राधिमोक्षचर्चायामपि प्रज्ञायाः प्राधान्यात्तत्स्वरूपं प्रथममेवागच्छति।

किन्तु सर्वेषां खलु आचरणगतधर्माणां मूलं भवति प्रज्ञा, तस्याश्च विवेचनं रिपब्लिकगुणानां विवेचनप्रसङ्गे कृतमेव, तथापि आध्यात्मिकचिन्तनप्रणाल्यां तु बाह्यस्य जगतोऽसत्त्वं संसाध्य आन्तरिकस्य ज्ञानस्य वास्तविकत्वं प्रतिपाद्यते। एतस्य सकलेऽपि बौद्धदर्शने व्याख्यानं कृतं वर्तत एव। सुत्तनिपातस्तु यद्यपि स्थविरवादस्य ग्रन्थः, तथापि अत्र बहुषु प्रकरणेषु विज्ञानवादप्रवृत्तीनां शून्यवादप्रवृत्तीनां च विवेचनमुपलभ्यते। अस्माभिरत्र नैतिकाचरणयुक्तविचाराणामेव विश्लेषणं क्रियते। अतः पूर्वोक्तेषु चतुर्षु प्रत्ययेषु धर्मस्य प्रज्ञास्वरूपमुद्भाव्य विश्लेष्यते।

### १. प्रज्ञायाः स्वरूपम् (धर्मः) Wisdom

चतुर्षु नैतिकप्रत्ययेषु धर्मविश्लेषणप्रसङ्गे 'सूस्सूसूं लभते पञ्ञ'मिति अट्ठकथावचनेन धर्मस्य प्रज्ञात्वं सिद्ध्यतीति सा प्रज्ञा किंस्वरूपा इत्यस्मिन् प्रसङ्गे पृष्टस्तथागत आह—

**स वे विद्धा स वेदगू, ञत्वा धम्मं अनिस्सितो।**
**सम्मा सो लोके इरियानो न पिहेतीध कस्सचि॥**
**यो'ध कामे अच्चतरि संगं लोके दुरच्चयं ।**
**न सो सोचति नाज्झेति छिन्नसोतो अबन्धनो[2] ॥**

अर्थात् स एव ज्ञानी प्रज्ञावान् भवति, यो धर्मस्वरूपं ज्ञात्वा अनासक्तो जायते, कस्मैचिदपि न स्पृहते, केवलं सम्यग्रूपेण लोके विचरति। यो हि प्रज्ञावान् कामान् परित्यज्य आसक्तीश्छिनत्ति, वासनाबन्धनविहीनः, स न कदापि शोचति।

अत्रापि प्रज्ञायाः स्वरूपविवेचने वस्तुजगतां स्वरूपबोधः प्रथमो जायते, ततः स्वरूपाधिगमनान्तरं वस्तुत्वं प्रति या हि वासनाबुद्धिरुदेति, सा अपगता भवति। एतस्य अधिगतये प्रज्ञा उत्पादनीयेति।

---

1. सुत्तनिपात आळवक सुत्त 1।10।8।
2. अत्तदण्डसुत्त 13,14, अट्ठकवग्ग –सुत्तनिपात।

पुनश्च पारायणवग्गे अजितेन पृष्टस्तथागतः प्रोवाच—

**कामेसु नाभिगच्छेय्य मनसा नाविलो सिया[1] ।**
**कुसलो सब्बधम्मानं सतो भिक्खु परिब्बजे'ति ॥**

अर्थात् कामभोगे मा लिप्तो भव, मनांसि निर्मलानि भावय, सर्वधर्मान् प्रति कुशली भव, स्मृत्या सह हे भिक्षो विचर। इत्थमत्रापि अनाशक्तेः स्वरूपमेवोद्घोषयति भगवान्। इदञ्चैवाधिगतं भवति प्रज्ञया। पुनश्चोक्तं तत्र, यदि कश्चन इह संसारे तृष्णां भावयति स इह वारं वारं जन्म लभते। अतो दुःखस्य कारणं तृष्णेति मत्वा तृष्णां परित्यजेत्।

**''उपधीनिदाना पभवन्ति दुःखा ये केचि लोकस्मिं अनेकरूपा ।**
**यो वे अविद्धा उपधिं करोति पुनप्पुनं दुक्खस्स जातिप्पभवानुपस्सी[2] ॥**

एवं ज्ञानी नरः पुनर्जन्मचक्रस्य वासनां परित्यज्य तृष्णारहितो वृद्धतां प्राप्तां जन्मपरम्परां च पारयति। प्रोक्तं यथा—

**विद्धा च सो वेदगू नरो इध भवाभवे संगमिमं विसज्ज[3] ।**
**सो वीततण्हो अनिघो निरासो अतारि सो जातिजरं'ति ब्रूमि ॥**

अत्र ज्ञानिनोऽवस्था न तथा वर्तते, यस्मिन् राज्यस्य कल्याणाय प्रयत्नो विधातव्यः स्यात्। अत्र तु व्यक्तेः स्वरूपं प्रज्ञाय तन्निष्ठवासनादीनां कथं नाशः स्यादेतदेव प्रज्ञायाः फलम्। प्लेटोनिर्दिष्टसंरक्षकज्ञानिनामिवात्र न सन्ति ज्ञानिनो लोकोपकाराय, अपि तु येऽत्र ज्ञानिनो भवन्ति, तेऽपि स्वरूपस्यैवाधिमुक्तिं भावयन्ति, ते अर्हत्स्वरूपा भवन्ति स्वभवबन्धनं छित्वा। प्लेटो तु राज्यस्य भवबन्धनं छेत्तुं यतते। तद्यथा—[4]

So the state founded on natural principles is wise as a whole in virtue of the knowledge inherent in its smallest constituent part or class, which exercises authority over the rest.

उपनिषत्सु यद्यपि व्यक्तेः स्वरूपाख्यानाय तद्बोधाय च प्रयत्नः कृतो वर्तते, तथापि कदाचिल्लोकस्य स्वरूपमपि तत्र प्रतिभाति तद्यथा—

**स वेदैतत् परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् ।**
**उपासते पुरुषं ये हि अकामाः ते शुक्रमेतद् अतिवर्तन्ति धीराः[5] ॥**

1. अजितमाणवपुच्छा 5।2।8, पारायणवग्ग –सुत्तनिपात।
2. मेतगूमाणवपरिपुच्छा 2,3 पारायणवग्ग सुत्तनिपात।
3. तत्रैव 12।
4. रिपब्लिक, 428 ई०, पृ० 198।
5. मुण्डक - 3।2।1।

किन्तु, प्लेटोवत्तत्र सकलं प्रतिष्ठितं यथा प्रतिभाति, तथैव आत्मज्ञो विद्वान् पुण्यपापे विधूय परमं निरञ्जनस्वरूपं प्राप्य साम्यं भजते सर्वैः सह। तद्यथोक्तम्[1]—

**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।**
**तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति ॥**

ये खलु विविधां दृष्टिं परित्यज्य वसन्ति, तेषां कृते न विवादो भवति, दृष्टेः परिहाणात्। किञ्च ये स्वां दृष्टिं परिगृह्य विवदन्ते, ते तु परपक्षमपि आमनन्ति, किन्तु वस्तुगत्या तु तथाभावात् पुनरपि नैव विवाद इति। तद्यथोक्तम्—

**ये दिट्ठिमुग्गय्ह विवादियन्ति इदमेव सच्चन्ति च वादियन्ति।**
**ते त्वं वदस्सु न हि ते'ध अत्थि वादम्हि जाते परिसेनिकत्ता ॥**
**विसेनि कत्वा पन ये चरन्ति दिट्ठीहि दिट्ठिं अविरुज्झमाना ।**
**तेसू त्वं किं लभेत पसूर येसीध नत्थि परमुग्गहीतं[2] ॥**

तस्माज्ज्ञानिनां यत्स्वरूपं सुत्तनिपाते उपनिषत्सु वा दत्तं वर्तते, तदेव स्वरूपं प्लेटो कृतरिपब्लिके नास्ति। यद्यपि दार्शनिकस्य राज्ञः स्वरूपं ज्ञानिनामिव भवति, तथापि स राज्यव्यवस्थामवलोकयति। सर्वं च तदखिलं स सम्पादयति, यस्मिन् तस्य रागो न भवति। अतः स न्यायं करोति, तथापि तस्य क्षेत्रं भिन्नमेव। धर्मज्ञः खलु ज्ञानी भवति। बौद्धेषु चतुर्षु गुणेषु धर्मस्यैतदेव व्याख्यानं विधायाधुना विरम्यते। बौद्धानां धर्मबुद्धिर्यदि विवेचनपद्धत्याऽवलोक्येत, तदा तस्यां सर्वपदार्था एव धर्मेषु आगच्छेयुः। अत्र यद्यपि स्थविरवादप्रसङ्गे ज्ञानिनां स्वाधिमुक्तये एव भवति सकलः समारम्भः, तथापि महायाननये सकलस्य प्राणिजातस्य उद्धारानन्तरं लोकहितोत्पादनमेवास्ति बोधिसत्त्वस्य कर्तव्यमिति। स तावत्पर्यन्तं भावयति, यावत् सकलोऽयं लोकः संसारपारं न गच्छेदिति। इत्थमत्र बोधिसत्त्वो न कदापि दार्शनिक- राजतो न्यूनः। न्यूनत्वं यदि वर्तते, तर्हि राज्यकृतसुविधानां अभावस्यैव।

## २. वीर्यम् (धृतिः Courage) साहसम्

भगवता बुद्धेन वीर्यस्य षट्पारमितासु अन्तर्भावं विभाव्य तस्या अतिशयसाहस-संप्रयुक्तकर्मत्वं निर्धारितम्। तस्मादेव वीर्यनिर्धारणप्रसंगे उक्तम्— "कायिको वा चैतसिको वा वीरियारम्भो'ति आदिना नयेन वुत्तप्रधानं[3]।" तस्माद् वीर्येण खलु युक्तो बलीवर्दः कृषिः इव जनान् निर्वाणाभिमुखं भावयतीति। अत्र वीर्यं साहसमभिप्रेयते। यथा खग्गविसाणसुत्ते "आरद्धविरियो" इत्यस्य व्याख्याप्रसङ्गे उक्तम्— खुद्दको खलु राजा महत्परिमाणबलकायः

1. मुण्डक० 3।1।3।
2. पसूरसुत्त 9,10 - अट्ठकवग्ग - सुत्तनिपात - 4।8।9,10।
3. कसिभारद्वाजसुत्तवण्णना - 4- अट्ठकथा 79 पृ. 179।

सकलजम्बूद्वीपं वशीकर्तुम् अन्यस्य राज्ञः पार्श्वे दूतं प्रेषितवान्। ततः स स्वममात्यम् आहूय उक्तवान्-मया तुम्हे अनापुच्छा येव साहसं कतं, अमुकस्स रज्जो एवं पहितं, किं कातब्बं ति' महाराज यदि स दूतः परावर्तते तर्हि मन्ये तत्र स गतो न वेति संशयः। यदि च तत्र अन्येन राज्ञा मारितः, तर्हि वयमपि तथैव करिष्यामः स्वात्मजीवनं त्यजाम इति। तदा राजा खिन्नः सन् अमात्यम् उक्तवान्— किं त्वं वदसि अहं राजा अस्मि। अहं खलु सेनां परिगृह्य साहसेन अन्यान् पराजित्य तान् स्ववशे कारयामि इति। इत्थं कृते स राजा क्षुद्रको ज्ञानसम्पन्नेन सह सकलं जम्बूद्वीपस्य राज्ञां पराजयं विभाव्य तेषाम् ईश्वरो जातः। अतः अनेन खलु ज्ञानेन स विरागे सति लोकोत्तरधर्मम् अन्विष्यति तथा आरब्धवीर्यः स क्षुद्रक इमां गाथाम् अवोचत्—

**आरद्धविरियो परमत्थपत्तिया अलीनचित्तो अकुसीतवुत्ति ।**
**दळहनिक्कमो थामबलूपपन्नो एको चरे खग्गविसाणकप्पो[1] ॥**

एवमपि वीर्ये साहसमथ च दृढपराक्रमभावः सन्निपतति। यो हि वीर्यवान् भवति स खलु सकलं दुःखं तरति। तद्यथोक्तम्— "विरियेन दुक्खं अच्चेति पञ्ञाय परिसुज्झति[2]।" अर्थात् मनुष्यो वीर्यद्वारा दुःखं समापयति, प्रज्ञया च परिशुद्ध्यति। तस्मात् वीर्यस्य वर्णनं बहुत्र पराक्रमप्रसंगे दृश्यते, यद्धि रिपब्लिकस्य साहसमिव प्रतिभाति। किञ्च, प्रव्रज्यासुत्ते भगवन्तं परिभ्रमन्तमवलोक्य राजा विम्बिसार रूपवर्णयौवनं विचार्य उक्तवान्-भवान् क्षत्रिय इव प्रतिभाति। भवद्म्योऽहं धनधान्यं भोगं च प्रयच्छामि, तदिदानीं भुङ्क्ष्वेति। तदा भगवान् स्वपरिचयं प्रददद् उवाच्-अहं खलु हिमवतो राज्यस्य शाक्यवंशस्य दहरो युवा अस्मि। धनवीर्याभ्यां[3] च सम्पन्नः, आदित्यवंशीयः शाक्यः, इदानीमहं कामेषु अनभिरतिं विभाव्य प्रव्रजितः पुनर्गृहस्थाश्रमं नैव प्रविशामि। अत्र वीर्येण युक्तः, किञ्च भोगलोकेऽपि वीर्यसम्पन्नत्वात् पुनस्तपसि संलग्नतां भावयति तथागतः। सभियसुत्ते खलु भगवान् वीर्यस्य महिमानमुद्भावयन् प्रोवाच- यः खलु पापेभ्यो विरतो दुःखेन नरकेण च रहितः, वीर्यवान्, पराक्रमी, धीरः स एव उच्यते—

**विरतो इध सब्बपापके'हि निरयदुखमतिच्च विरियवा'सो।**
**सो विरियवा प्रधान वा धीरो तादि पवुच्यते तत्तथा[4] ॥**

किञ्च, यो हि वीर्यवान् स एव धीरः। धृतेश्चापि गुणेषु महत्त्वं प्रकाशितं सुत्तनिपाते। तस्मादेव प्रोक्तम्—

---

1. खग्गविसाणसुत्त वण्णना 68 पृ. 149।
2. आळवकसुत्त 4 - सु॰ नि॰।
3. पव्बज्जासुत्त - 3।19 सु॰नि॰।
4. सभियसुत्त - 3।6।22 सु॰नि॰।

**यस्सेते चतुरो धम्मा सद्धस्स घरमेसिनो ।**

**सत्यं धम्मो धिति चागो स वे पेच्च न सोचधि[1]॥**

तत्र धर्मस्य प्रज्ञात्वेन विवरणं प्रदत्तमिदानीं धृतेः वीर्यत्वेन विवरणं क्रियते। धृतेः अट्ठकथायां स्वरूपमुक्तम्— "धुरवा उट्ठाता" ति एत्थ धुरनामेन उट्ठाननादेन च वुत्ता धीति" गुणस्य आवश्यकतां प्रतिपादयति भगवान् यतो हि गृहस्थेषु धृतेर्भवति आवश्यकता। धृतिमान् स भवति यः खलु तत्त्वदर्शी स्वरूपमापन्नः। तस्मादेव माघसुत्ते माघस्तत्त्वदर्शिनं धृतिमन्तं भगवन्तं प्रोवाच[2]—

**अजानतो मे मुनि ब्रूहि पुट्ठो भगवा हि मे सक्खि ब्रह्मज्ज दिट्ठो ।**

**तुवं हि नो ब्रह्मसमोति सच्चं कथं उप्पज्जति ब्रह्मलोकं ( जुतीमा )॥**

अर्थाद् अज्ञानिनं मां प्रब्रूहि कः शुध्यति, कश्च मुच्यते, कः बध्यते, कश्च ब्रह्मलोक-मुपसर्पति। भगवांस्तु स्वयमेव साक्षाद्ब्रह्म, ब्रह्मसाक्षी च। तस्मात् हे धृतिमन्! ब्रह्मलोकोत्पत्तेः स्वरूपं वद।

इत्थं धृतवीर्यस्य च बहुव्याख्यानं कृतं वर्तते सुत्तनिपाते। धृतेर्वीर्यस्य च आवश्यकता यथा गृहस्थस्य भवति, तथैव विरक्तस्य। तस्मात् साहसेन धैर्येण वा जनो लोकान् जयति। अध्यात्मवादी खलु रागमोहादीन् जयति, किन्तु विरागी योद्धा तु वीर्येण शत्रून् जयति, यथा क्षुद्रकेण जितं सकलं जम्बूद्वीपमिति।

### ३. तपो (त्यागः Self Discipline)

सर्वत्रैव अध्यात्मशास्त्रे त्यागस्य तपसो वा विवरणमुपलभ्यते। भिक्षवः, तपस्विनः, संयमशीलाश्च भवन्ति। किं कर्तव्यं, किं न कर्तव्यमिति उपदेशानां सम्पूर्ण एव त्रिपिटके बुद्धवचनानि उपलभ्यन्ते। ये खलु तपस्विनो व्रतिनो गृहान्निःसृता ज्ञानाप्तये भिक्षुव्रतं स्वीचक्रुस्ते कथं न संयमिनो भवेयुरिति। सुत्तनिपाते संयमिनं चरित्रमुद्भावितम्। तद्यथा—

**सुणाथ मे भिक्खवो सावयामि वो, धम्मं धुतं तं च धराथ सब्बे[3]।**

**इरियापथं पब्बजितानुलोमिकं, सेवेथ नं अत्थदस्सी मुतीमा ॥**

हे भिक्षवः! यूयं धर्मं धुतं च धारयत, यूयं प्रव्रजितान् इव प्रव्रजत, ये खलु ज्ञानिनो बुद्धिमन्तो अर्थदर्शिनस्तैः सार्धमेव विचरत।

'धम्मं हि खलु पूर्वमुक्तं धुतांगं किं तदेवेह प्रस्तूयते। अस्मिन् हि धुतांगप्रस्थापने भिक्षवस्तपः संयमादीनां परिपालनं कुर्वन्ति। त्रयोदशधुतांगानि भवन्ति। एतानि खलु कष्टेन

1. आळवकसुत्त सु॰ नि॰ 1।10।8।
2. माघसुत्त - 3।5।22 सु॰ नि॰।
3. धम्मिकसुत्त 2।10 - सुत्तनिपात।

परिपालनीयानि। एतेषामुपसेवनेन चित्तमलानि विधूयन्ते। 'धुतंगसेवना हि दुक्खा पटिपदा चैव सल्लेखविहारो च' भवति। तस्मादेव दुःखविहारेण रागा अपवार्यन्ते। तद्यथोक्तम्— 'दुक्खा पटिपदं च निस्साय रागो वूपसम्मति। सल्लेखं निस्साय अप्पमत्तस्स मोहो पहीयति[1]'। इत्थं धुतंगं भावयतो भिक्षूनभिलक्ष्य भगवान् भाषितवान्-विकालभोजनं मा कुरुत, अकालचारी मा भवत। एकान्ते निषीदत, चित्तं बाह्यं मा कुरुत, एकाग्रतां भावयत। पिशुनतां मा कुरुत। स्वं चित्तं तथैवानुपलिप्तं भावयथ, यथा कमलपत्रे जलमुपतिष्ठते। एवमेव गृहस्थान् प्रत्युवाच तथागतः-प्राणिहिंसां मा कुरुत। अन्येषां वस्तूनि मा हरत। ब्रह्मचर्यं परिपालयत, मद्यं मासं वर्जयत, मृषा मा वदत। अप्रमत्ताः सन्तो मातापितरौ पोषयत पूजयत च। एतत्सकलं गृहस्थानां भिक्षूणाञ्च कर्तव्यमिति। तस्मादेते लोकहितकारका व्यक्तिहितकारका गुणा नैतिकादेशाश्च भवन्ति। ये हि एतान् परिपूरयन्ति, ते खलु संयमिनो भवन्ति तपस्विनश्च। अत्र सर्वेषां त्यागकर्मणामुपदेशाः भवन्ति। त्यागेन सर्वाणि मित्राणि भवन्ति। एतच्च त्यागस्य वर्णनप्रसंगे व्याख्याप्रसंगे च प्रोक्तं अट्ठकथायाम्— 'ददं मितानि गन्थति'[2]। भगवता त्यागस्य महिमानं स्वीकुर्वता व्याघ्रीप्रसूतस्य सुतस्य रक्षायै यत्कृतं तत्सकललोकस्य त्यागगुणप्रतिष्ठायै निकषभूतमिव। तद्यथा—

**एवं स निश्चित्य परार्थसिद्ध्यै प्राणात्ययेऽप्यापतितप्रमोदः ।**
**मनांसि धीराण्यपि देवतानां विस्मापयन् स्वां तनुमुत्ससर्ज[3] ॥**

सा व्याघ्री तेन बोधिसत्त्वस्य शरीरनिपातशब्देन पुनः समुत्थापितकौतूहलामर्षा विरम्य स्वतनयवैशसोद्यमात् ततो नयने विचिक्षेप। एवं भूतत्यागस्य केन प्रशंसा कर्तव्या तपस्विनां संयमिनां बुद्धानाम्।

दानपारमितायां त्याग एव विधीयते। अनया प्रतिष्ठया रागबुद्धिरपगता भवति। मैत्रीबुद्धिश्च प्रवर्धेत। परेरामहाशयेन त्यागस्य दानस्य वा विषये प्रोक्तवता भणितम्— कस्मिन्नपि दानकर्मणि यदि तेन किमपि अपेक्षितं भवति, तर्हि तत्कर्म न त्यागो, न च तपः। अपि तु तदेव कर्म दाने संन्निविशते, यस्मिन् प्रत्यवेक्षाः न भवन्ति[4]।

बुद्धधर्मे दानस्य त्यागस्य वा भावस्तथा विकसितो यथा नान्यत्र दृश्यते। एकस्मै अपि भिक्षवे दत्तं दानं संघाय भवति। तेन दानेन सर्वे प्रसन्नतामधिगच्छन्ति। तद्यथा प्रोक्तम्[5]—

---

1. विशुद्धिमार्ग पृ० 54-55।
2. सुत्तनिपात आळवकसुत्त - अट्ठकथा पृ० 303।
3. व्याघ्रीजातक - पृ० 5 जातकमाला।
4. द नेमस ऑफ यूनिवर्सल माडर्न सोसाइटी डिपिक्टेड वाई लार्ड बुद्धा इन सुत्तनिपात, पृ० 11 वाई बोराले।
5. माघसुत्त 20 सु० नि०।

**यजस्सु यजमानो ( माघोति भगवा ), सब्बत्थं च विप्पसादेहि चित्तं[1]।**
**आरम्भणं यजमानस्स यञ्ञं, एत्थं पतिट्ठाय जहाति दोसं ॥**

अर्थात् दाने कृते सर्वान् प्रति प्रसन्नतां विकासयेत्। स्वमनोऽपि प्रसन्नं भावयेत्। दाने प्रतिष्ठिते सति दातुर्मनसि द्वेषाभावो जायते, मैत्री लोकेषु विकसति। एवंभूतो दानकर्ता रागद्वेषाभ्याम-परिवृतोऽपरिमितां मैत्रीं विकासयति। अयं दानकर्मकोऽनुयोगस्तपोमूलक एव। यतो ह्यस्मिन् अन्येषां सुखोत्पादनाय स्वयं तप आचरणीयमास्ते। एष संयमः, यश्च खलु प्लेटो- कृतरिपब्लिके राज्यस्य हिताय विवेचितः। अत्र तु शरीरहिताय संयमोऽयं त्यागरूपेण तपसा वावचीयते। तस्मादेतेनाप्यध्यात्मराज्यमवाप्यते, ऐक्ये च भावना उद्भाविता भवतीति।

## ४. सत्यम् (तथ्यात्मकमूल्यम्)

'सच्चेन कित्तिं पप्पोति' इति अट्ठकथाबलेन सत्योत्पादकगुणकृत्यानां विवरणमिह न्यायमुखेन प्रस्तोष्यते। सत्यं हि पारमितासु एकम्, यस्मिन् खलु यद्धि कृत्यं यथा भवति तस्य वस्तुतथतानुसारं विवेचनं क्रियते। सुत्तनिपाते सत्यस्वरूपावबोधाय विविधदृष्टीनामा-कलनपुरस्सरं सत्यस्वरूपं विश्लेष्यते। तस्मादेव सत्यस्वरूपाख्याने प्रश्नानुसारं एकस्य सत्यस्य स्वरूपं बोधयितुं वक्ति—

**एकं हि सच्चं न दुतियमत्थि, यस्मिं पजानो विवदे पजानं[2]।**
**नाना ते सच्चानि सयं थुनन्ति तस्मा न एकं समणा वदन्ति ॥**

अर्थात् सत्यमेकमेव, नान्यदिति। एकस्यैव सत्यस्य व्युत्पादनाय पृथक् पृथग् व्यक्तयो विवदन्ते। ते नानाविधानां दृष्टीनाम् आकलनानन्तरं प्रशंसां कुर्वन्ति। तस्मादेव श्रमणाः सत्यस्यैकरूपं न वदन्ति। संसारे या याः संज्ञा उपलभ्यन्ते, नहि तदृते अन्यत् अस्ति सत्यम्। केवलं दृष्टिबलेन कदाचित् एकं सत्यमन्यच्च असत्यमिति भाष्यते। श्रुतिदृष्टिशीलव्रतादिभिः जनाः अन्येषामनादरं भावयन्ति। येन कारणेन बालक इति कथ्यते, तेनैव कारणेन अन्यस्तं पण्डितं मन्यते। अस्मिन् प्रसङ्गे बोधकः स्वस्या दृष्टेः पूर्णतामङ्गीकरोति, तेन गर्वितोऽभिमानी चापि जायते। यदा हि कश्चिद्गर्वितो भवति, स असत्यस्य पन्थानमलंकरोति। अन्यायमाचरति। लोके असत्यस्य पन्थानमाधृत्यैव विविधा, कलहा, विवादाश्च प्रारभन्ते। अतः सत्यकामेन न कदापि कलहः कर्तव्यः, प्रज्ञया तत्पन्थानमनुसृत्य सत्यबोधाय यत्नो विधातव्यः।

उपनिषत्सु सत्यस्य बहुव्याख्यानानि सन्ति। तत्र धर्मसत्ययोर्मध्ये नैव भेदः। तद्यथोक्तम्—

'यो वै स धर्मः सत्यं वै तत्। तस्मात् सत्यं वदन्तम् आहुः धर्मं वदतीति। धर्मं वदन्तं, सत्यं वदतीति। एतद्ध्येव तदुभयं भवति[3]।।

1. माघसुत्त 3।5।20 सुत्तनिपात।
2. चूलवियूह सुत्त - 4।12।7 सुत्तनिपात।
3. बृहदारण्यक 1।4।1।

धर्मः खलु समाजं नियन्त्रयति। सत्यस्य पन्थानमाधृत्य असत्ये वर्त्मनि स्थितस्तु राजा अन्यायं कुरुते। तस्मात् यो धर्मं करोति, स सत्यमाचरति। यश्च सत्यम् आचरति, स धर्ममपि आचरत्येव। अत एतयोर्मध्ये ऐक्यं भवति। एताभ्यां विना नहि समाजस्थितिः, न्यायव्यवस्था, न वा राज्यस्थितिः। यथा प्रजापतिना लोका उत्पादिताः, तथा तद्व्यवस्थापनायै वर्गा उत्पादिता ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चेति। एतमभिलक्ष्यैव सत्यव्रतसिद्धान्तालंकारेणाप्यभिहितं यत् धर्म एव सत्यमाश्रित्य लोकं नियमयति, न तु चतुर्वर्गः[1]।

एतच्च प्लेटोमहाशयेनापि राज्यस्य न्यायव्यवस्थायां प्रतिपादितम्—

So that is what justice is. And conversely, when each of our three classes (businessmen, Auxiliaries and Guardians) does its own job and minds its own business, by contrast, that is justice and makes our state just[2].

सत्यं हि खलु जीवनस्य परमं तत्त्वं भवति। धम्मपदे सत्यस्य महिमा एवं ख्यापितः[3]—

**अकोधेन जिने कोधं असाधुं साधुना जिने।**
**'जिने कदर्यं दानेन सच्चेनालिकवादिनं ॥**

सत्येनैव धर्मावाप्तिः, सत्येनैव गुणावाप्तिः, सत्यं समेषां गुणानामागारभूतम्। सत्यवर्त्मना यो गच्छति स न्याय्यमाचरति। सत्यस्य विषये विविधाः धारणाः भवन्ति। तस्मात् केचन यत् परमं सत्यं वदन्ति, तदेव अन्ये हीनमिति वदन्ति। तर्हि एतयोर्मध्ये किं सत्यं, यतो हि उभावपि स्वकीयं सत्यं सत्यमिति अन्येषां च हीनमिति कथयतः। तद्यथा—

**यमाहु धम्मं परमं'ति एके**
**तमेव हीनं'ति पनाहु अञ्ञे ।**
**सच्चो नु वादो कतमो इमे सं**
**सब्बे'व हीमे कुसला वदाना[4] ॥**

मुनीनां चरित्रं सत्यमाश्रयते। स उद्दण्डतां नैव करोति, संयमेन जीवनं धारयति। क्रोधं परिवर्जयति। इत्थं सत्याचरणस्य माहात्म्यं प्रतिपादितं वर्तते अत्तदण्डसुत्ते[5]। पिंगियब्राह्मणेन बुद्धस्य महिमा वर्णितः, कथितश्च स बुद्धः तमोऽपनुदः, समन्तचक्षुः, लोकान्तज्ञः, सर्वभवाधिपत्यः, अनास्रवः, सर्वदुःखप्रहीणः, सत्यरूपो मया उपासितः इत्थं बुद्धस्य सर्वं ज्ञानं सत्याश्रितमिति वचसा इदमेव ज्ञायते यत् सत्यस्य पन्थाः सर्वैरेव आश्रयणीय इति।

---

1. टिप्पणी - प्रो॰ सत्यव्रतिसिद्धान्तालंकार की - बृहदा॰ 14।4।1।
2. रिपब्लिक - 434 ई॰ पृ॰ 206।
3. धम्मपद।
4. महावियूहसुत्त - 4।13।9 सु॰ नि॰।
5. अत्तदण्डसुत्त - 7 सु॰ नि॰।

## ३—धर्मे गुरोः आचार्यादीनां च महत्त्वम्

यद्यपि जनाः धर्मेण सम्प्रदायनीतिमाकलयन्ति तथापि धर्मस्य क्षेत्रं महद्वर्तते। कदाचिदयं श्रुतिमूलकः, स्मृतिमूलकः, कदाचिच्च आचारमूलकः। तस्मादेवोक्तम्—

**श्रुतिस्मृतिसदाचारः स्वस्य च प्रियमात्मनः ।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्[1] ॥**

इत्थं श्रुतिः खलु धर्मस्य मूलं भवति। इयं हि श्रुतिः वैदिकपरम्परानुयायिनां कृते प्रामाण्यं बिभर्ति, नान्येषां कृते। यतो हि श्रुतिपदेनोक्तम्—

**श्रुतिस्तु वेदो विज्ञेयः स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च[2] ॥**

अत्र श्रुतिसंवर्धितज्ञानं आचारव्यवहारस्य नियामकमिति वैदिकाः समामनन्तोऽपि साधूनामाचारस्य अनुकरणातिप्रशस्तं मेनिरे। अथ च येन कर्मणा आत्मनः सन्तुष्टिः जायते तत्कर्म साधुरित्युच्यते।

इत्थमेव प्रतीच्येऽपि न्याय्याचारस्य निर्णये सुकरातेन उक्तम्—

अन्तःकरणशक्त्या हि खलु न्याय्यान्याय्यादिकं धार्यते। एवं च भवति खलु दिव्यशक्तिनिगदितो व्यापारः। अस्मिन् हि सूक्ष्मज्ञानात्मके व्यापारे आत्मनः विश्वासः श्रद्धा च जायते। यदिदं कर्तव्यमिदञ्चाकर्तव्यमिति। तस्मादेवोक्तम्—

**एवमव्याप्त्यतिव्याप्तिरहितं वस्तुलक्षणम् ।**
**कर्तुं प्रवर्तयामास लोकानभिनवाध्वना ॥**
**परं न तेन विहितं यत्किञ्चिद्वस्तुलक्षणम् ।**
**आदिष्टोऽस्मि तथाकर्तुं दिव्यशक्त्येति सोऽब्रवीत्[3] ॥**

तस्मादेतेनापि दिव्यशक्तेः सकाशादेव धर्माधर्मयोः आचरणस्य ज्ञानं भवतीति प्रोक्तवान्। बुद्धस्तु न तथा ब्रूते, स तु बुद्धिप्रयुक्तज्ञानस्य विवेचनं तथैव करोति, सम्मानयति च येन स्वकर्मणि अनुष्ठिते कश्चिदपि संदेहो न समागच्छेत्। न च मर्यादया कश्चिदन्यस्य वाक्यं स्वीकुर्यादिति। तस्मादेवोक्तम्—

---

1. मनु॰ 2।6।
2. याज्ञवल्क्यस्मृति - 1।7।
3. पाश्चात्यदर्शनम् - पृ॰ 12।

**तापाच्छेदाच्च निकषात्सुवर्णमिव पण्डितैः ।**
**परीक्ष्य मद्वचो ग्राह्यं भिक्षवो न तु गौरवात्[1] ।।**

इत्थमेतासां परम्परागतधर्माचरणविषयकसंस्कृतीनां परिबोधे परम्परागतज्ञानानुयायिनां निर्देशे सत्यपि महत्त्वे प्रथमम् अपौरुषेयत्वप्रतिष्ठापनेन धर्माचरणं, द्वितीयं अन्तःकरणेन सह दिव्यशक्त्योद्भावितेन धर्माचरणं, तृतीयं च स्वात्मबुद्ध्या निर्णीतमाचरणमुचितमिति अमन्यत। एतासु परम्परासु सतीष्वपि ज्ञानस्य बोधात्मकरूपे प्रतिष्ठिते तत्प्रवर्तकानां गुरुभूतानां पश्चान्महत्त्वं जातमिति कस्यायमविषय इति।

गुरूणां कथं भवति परम्परासु सम्मान एतद्विषये तेषामाचारविचाराणां परस्परतुलनया एव किञ्चिद् वक्तुं शक्यते। अत्र विषये उद्दालकारुणिः ग्रीकसंस्कृतेः सुकरात इव मन्यते, तथैव याज्ञवल्क्यः प्लेटो इव वा। सुकरातस्तु आसीत् गुरुः प्लेटोमहाशयानाम्[2] । किन्त्वेतौ द्वावपि महान्तौ दार्शनिकौ आस्तां स्वसंस्कृतौ। तथैव सुत्तनिपातेऽपि भगवतो बुद्धस्य अग्रश्रावकौ सारिपुत्रमौद्गल्यायनौ च गण्येते। तत्र एतौ ज्ञानवन्तौ प्रज्ञाशालिनौ शुची न आस्तामिति। तत्र एतेषां निन्दामधिकुर्वन् कौकालिको भिक्षुः नरकमधिजगाम। एवञ्चोक्तं सुत्तनिपाते। तद्यथा—

**कोकालिको, भन्ते, भिक्खु कालकतो, कालकतो च, भन्ते, कोकालिको भिक्खु पदुमनिरयं उपपन्नो सारिपुत्तमोग्गल्लानेसु चित्तं आघातेत्वा'ति। इदं अवोच ब्रह्मा सहम्पति, इदं वत्वा भगवन्तं अभिवादेत्वा पदक्खिणं कत्वा तत्थेवन्तरधायि[3] ।**

इत्थं स्वयं भगवानेव एतयोः अदुष्टत्वं वरेण्यत्वं च प्रतिपादितवान्। तस्मात् शिष्योपरि अनुरागः गुणवैशिष्ट्ये स्वत एव आगत इति न तिरोहितं विद्वत्सु।

उपनिषत्सु आचार्याणां शिक्षादानस्य स्वरूपमुल्लिखितमास्ते। ते खलु आचार्याः अनूचानः, पारदृश्वानः शिष्यान् शिक्षयन्ति, न खलु कनिष्ठेनाचार्येण ज्ञानं धर्मो वा ग्रहीतव्यः। यथा कठोपनिषदि प्रोक्तवान् यमः[4] —

**न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः।**
**अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ।।**

यो हि गुरुःस्वविषयेषु प्रवीणः शिष्यास्याध्याशयं विजानाति, स एव उपदेष्टा नान्यः। न केवलं कठोपनिषदि बृहदारण्यकेऽपि जनकः याज्ञवल्क्याय किञ्चिद्दातुमुत्सहते तदा याज्ञवल्क्यः वक्ति—

---

1. तत्त्वसंग्रह 3587 श्लो०।
2. दर्शनदिग्दर्शन - राहुल प०. 393।
3. सुत्तनिपात - कोकालिकसुत्त पृ० 174।
4. कठोपनिषद् 1।2।8।

हस्त्यृषभं सहस्रं ददामीति, होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नानुशिष्य हरेदिति[1]।

न केवलमेतावान् एव गुरुशिष्ययोः सम्बन्धः स्नेहाधारितः तस्मादेव तैत्तिरेयोपनिषदि तयोः स्वरूपं प्रोक्तम्—

**आचार्यः पूर्वरूपम्। अन्तेवासी उत्तररूपम्।**
**विद्यासन्धिः। प्रवचनं सन्धानम्। इत्यधिविद्यम्[2] ॥**

इत्थं स्नेहाधारितभावेनोपदेशाय समागताय शिष्याय गुरुः अध्यात्मविद्याम् उपदिशति—

**तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।**
**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्[3] ॥**

अर्थात् विनीतभावेन समागताय शिष्याय प्रशान्तमनसा गुरुरुपदिशति। स कदापि स्वगौरवं न वितनुते। स तु यत्किमपि जानाति तदेव तस्मै प्रयच्छति। किन्तु स तं साधनाभ्यासाय प्रेरयति, स्वसमीपे च ब्रह्मचर्यावासे वासयितुं प्रयत्नमकार्षीति। पिप्पलादः तपसानन्तरं पुनः तेषां जिज्ञासायाः शान्तये उत्तरितवान् यथोक्तम्[4]—

ॐ सुकेशा ह भारद्वाजः शैव्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्लादमुपसन्नाः।।1।।

"तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति।।2।।

इत्थमुपनिषद्—ऋषयः शिष्याणामध्याशयं व्रतं च ज्ञात्वा तानुद्धर्तुं तथैव धर्मान् ज्ञानानि च उपदिष्टवन्त इति। गुरूणां तत्र भवति महत्त्वमिति सुत्तनिपातेऽपि गुरूपदेशविषये उक्तम्[5]— एकदा बावरीनामको ब्राह्मणः दक्षिणापथे स्वशिष्यैःसह निवसन् आसीत्। तत्र कश्चिदन्यः ब्राह्मणः समागत्य महायज्ञानुष्ठानेन वीतद्रव्यं बावरीं विलोक्य पञ्चशतानि कार्षापणानि अयाचत। बावरी खलु तमभिनन्द्य आसने उपवेश्य स्वरूपस्य वर्णनं कृतवान्। याचितद्रव्यस्य अभिरपूरणार्थं क्षम्यतामिति प्रोवाच। किन्तु क्रुद्धो ब्राह्मणस्तं शशापाथ सप्तमे दिवसे ते मूर्धा पतिष्यति।

---

1. बृहदारण्यक - 4।1।2।
2. तैत्तिरीय॰ 1।3।4।
3. मुण्डकोपनिषद् - 1।2।13।
4. प्रश्नोपनिषद् 1।1,2।
5. पारायणवग्ग - सुत्तनिपात।

अवशः त्यागी जितेन्द्रयो ब्राह्मणः तस्य शापं श्रुत्वा प्रतिकारविद्यामधिगन्तुं तत्र स्थितान् देवान् प्रतिजगाम। एतस्य प्रतिकाराय प्रोवाच देवास्तु तदानीं यावत् उत्तरापथे उदीयमानं सूर्यमिव बुद्धस्य ज्ञानसूर्यस्य चर्चां नैकवारं शुश्रुवुः। अतस्ते सप्तधा मूर्धापातरूपस्य शापोपशान्तये विद्याबोधको बुद्ध इत्येवं ऊचुः। सः तेषां मुखेन चक्षुष्मन्तं बुद्धं लोकल्याणकारकं श्रुत्वा स्वशङ्कापनोदाय स्वशिष्यान् प्रेषयामास वार्धक्यवशात् स्वयमवशः। तदुक्तं यथा—

स चे याचमानस्स भवं नानूपदस्सति ।
सत्तमे दिवसे तुम्हं मुद्धा फलतु सत्तधा ॥
अहम्पेतं न जानामिञाणं मे'त्थ न विज्जति ।
मुद्धं मुद्धातिपातो च जिनानं हेत दस्सनं ॥
सम्बुद्धो'ति वचो सुत्वा उदग्गो बावरी अहु ।
सोकस्स तनुका आसि पीतिं च विपुलं लभि ॥
ततो आमन्तयी सिस्से ब्राह्मणे मन्तपारगे ।
एस माणव अक्खिस्सं सुणोथ वचनं मम ॥
यस्सेसो दुल्लभो लोके पातुभावो अभिण्हसो ।
स्वज्ज लोकम्हि उप्पन्नो सम्बुद्धो इति विस्सुतो ।
खिप्पं गन्त्वान सावत्थिं पस्सव्हो दिपदुत्तमं ॥
जातिं गोत्रं च लक्खणं मन्ते सिस्से पुनापरे ।
मुद्धं मुद्धातिपातं च मनसा येव पुच्छथ ॥

पुनश्चैते शिष्या ज्ञानार्जनाभिलाषेण गुरुशापापनयनोपायज्ञानाय च श्रावस्तिनगरे समाययुः। बुद्धाज्ज्ञानं लब्ध्वा पुनश्च स्वगुरोः शङ्कां परितः प्रकथ्य तेभ्यः तस्य निदानं याचितवन्तः। बुद्धश्च तान् उवाच—

अविज्जामुद्धा'ति जानाहि विज्जा मुद्धाधिपातिनी ।
सद्धासतिसमाधीहि छन्दविरियेन संयुता ॥
सुखितो बावरी होतु सह सिस्सेहि ब्राह्मणो ।
त्वं चापि सुखितो होहि चिरं जीवाहि माणव[1] ॥

इत्थं बुद्धसकाशात् मूर्धाभिपातस्य ज्ञानं निशम्य शिष्याः प्रसन्नाःहृष्टमनाश्च बुद्धानां शरणं ययुः।

1. वत्थुगाथा पारायणवग्ग - 8,14,19,23,51,54 सुत्तनिपात।

एवमेव सुत्तनिपाते बुद्धानां भगवतां माहात्म्यं ज्ञात्वा शैलो ब्राह्मणः अङ्गुत्तरापाने[1] त्रिंशत् शिष्यैः सह, सभियः राजगृहे[2], धनियः महीनद्यास्तीरे[3], वाशिष्ठभारद्वाजः इच्छानांगले[4], माघो राजगृहे[5] च प्रवज्यां लब्धवन्तः। धर्मानुश्रवणानन्तरं उपजातशान्तभावास्ते शिष्यतामधिजग्मुरिति मन्ये अध्यात्मविद्यायाः प्रसाद एव एषः।

धर्मे गुरोः माहात्म्यविषये सुत्तनिपाते नावासुत्ते बहुभाषितम्। यस्मात् खलु नरः धर्मं जानीयात्तमवश्यं पूजयेदसौ। धर्माचरणं गुरुमुखोक्तवचनेन ज्ञात्वा, जनेभ्यः सम्मानं वितनुते। यश्च गुरुं विना ईर्ष्यावशात् स्वयमेव धर्माधिकुरुते तस्यौचित्यानौचित्यं च नैव जानीते, स मृत्युमधिगच्छति। गुरुमुखात् धर्मज्ञानं विना, शब्दानुशीलनं विना वा अन्यान् कथं निःशङ्कान् करिष्यति। यथा नाविकः नौर्यानमारुह्य सागरं तरति तथैव गुरुसकाशात् ज्ञानं लब्ध्वा भवसागरस्य पारं याति। यथोक्तम्—

**यथापि नावं दळहमारुहित्वा, पियेन रित्तेन समङ्गिभूतो।**
**सो तारये तत्थ बहूनि अञ्ञे, तत्रूपयञ्ञू कुसलो मुतीमा॥**
**एवम्पि यो वेदगु भावितत्तो, बहुस्सुतो होति अवेधधम्मो।**
**सो खो परे निज्झपथे पजानं, सोतावधानूपनिसूपपन्नो॥**
**तस्मा हवे सप्पुरिसं भजेथ, मेधाविनं चैव बहुस्सुतं च।**
**अञ्ञाय अत्थं परिपज्जमानो, विञ्ञातधम्मो सो सुखं लभेथा'ति[6]॥**

सकलं खलु बुद्धधर्मस्य प्रसरणं बुद्धस्य व्यक्तिगतस्य मानवरुजापहरणस्य प्रयोगविधिना सम्पन्नमिति, के न जानन्ति। तस्य ज्ञानावाप्तये पूर्ववर्तिनां गुरूणामधिगमनं, ततश्च तेभ्यः अलब्धज्ञानलवप्रकर्षः स्वयमेव समाधिना गृहीत-ज्ञानावबोधः, स सकलं जगत् भासितवान्। एतच्चोक्तम्[7]— बोधिसत्त्व ने राजा को वचन दे, क्रमशः विचरण करते हुए आलारकलामु'द्दकरामपुत्र के पास पहुँच समाधि सीखी। (फिर) यह ज्ञान का रास्ता नहीं है ऐसा सोच उस समाधि भावना को अपर्याप्त समझ, देवताओं सहित सभी लोकों को अपना बलवीर्य दिखाने के लिए परमतत्त्व की प्राप्ति के लिए उरुवेला में पहुँच— यह प्रदेश रमणीय है सोच वहाँ ठहर महान् तप आरम्भ किया।

---

1. सेलसुत्त, सुत्तनिपात।
2. सभियसुत्त, सुत्तनिपात।
3. धनियसुत्त, सुत्तनिपात।
4. वासेट्ठसुत्त, सुत्तनिपात।
5. माघसुत्त, सुत्तनिपात।
6. नावासुत्त - 2।8।6,7,8 सुत्तनिपात।
7. बुद्धचर्या, पृ० 13।

यथा बुद्धस्य प्रवचनानां सकलेषु पिटकेषु अस्ति संकलनं तथा सुकरातीयप्रवचनानां प्लेटोमहाशयकृतसंवादेषु अस्ति संकलनम्। सः कदाचित् सुकरातस्य संगतौ समागच्छत्, कदाचिच्च तस्य मित्रमासीदिति कथ्यते, किन्तु आर्यसुकरातमहोदयानां कृते तस्य महती श्रद्धा आसीत्। तस्मादेव स राजनीतौ प्रेर्यमाणोऽपि सुकरातमहाशयानाम् उपरि तदानीन्तनराजनीतिक-प्रकोपस्य स्वरूपं वीक्ष्य ततः स्वीयं मनः पृथगकरोत्। सुकरातस्तु तस्य गुरुरेवासीत्। गुरोः माहात्म्यमपि तस्मिन् आसीत्। तस्य व्यक्तित्वेन बुद्धिमाहात्म्येनापि स प्रभावितोऽभवत्। एतस्य विषये उक्तं स्टेसमहाशयेन—

For the last eight years of the life of Socrates, Plato was his friend and his faithful disciple. The teaching and personality of the master constituated the supreme intellectual impulse of his life, and the inspiration of his entire thought[1].

एतेनोक्तोद्धरणेन ज्ञायते यत् प्लेटो सुकरातमहोदयानां योग्यतमः शिष्यः आसीत्। गुरोः प्रभावः तस्योपरि कथमभवदिति तु तस्य तदानीन्तनराज्ये वर्तमानानां पितृव्यचरणानां परामर्शेन ज्ञायते। ते राज्यस्य विशिष्टपदं प्लेटोमहोदयाय दातुमैच्छन्, किन्तु प्लेटो राज्यद्वारा सुकरातस्य बधेन अतीव दुःखितोऽभूत्। तस्मादेव तत्रस्थितराज्यस्य दोषमाविष्कृतवान्, प्रजातन्त्रे परामर्शं च त्यक्तवान् इति। तत एव टेलरमहाशयेन प्लेटोकृतपेरिविलयनपालिटिक्सस्य कृते तस्य अश्रद्धा प्रकटीकृता[2]। किञ्च तस्य अश्रद्धा तदा ततोऽपि प्रभूततराभवत्, यदा आर्यसुकरातस्य हठात् बलिः प्रदत्ता तदानीन्तनराज्याधिपैः। तस्मादेव अरस्तुमहोदयेनापि एतदभाणि—

All we can be sure of down to Plato's twenty sixth year, is that the influence of friendship of Socrates must have been the most potent face in moulding of his mind[3].

किञ्च एतस्मादपि परं 'बोध्यते प्लेटोमहाशयस्य कृतीनां संकलनं विधातुं ग्रन्थरत्ने यदसौ इच्छन्नपि राज्यकार्यात् ततो विमना जातः, यदा निष्कलुषाणामार्याणां दण्डविधानेन प्राणत्यागस्यादेशं श्रुतवान्—

He was horrified to find that they soon showed signs of lawless, violence, and finally disgusted when they attempted to make his 'Elderly friend Socrates' the best man of his time, an accomplice in the illegal arrest and excution of a fellow citizen whose property they intended to confiscate... This Plato says, put an end to his own political aspirations[4].

---

1. ए क्रिटिकर हिस्ट्री ऑफ ग्रीक फिलासफी - डब्लू॰ टी॰ स्टेट पृ॰ 166।
2. प्लेटो द मैन एण्ड हिज वर्क्स पृ॰ 2।
3. अरस्तू का मैटाफि॰ 987ए 32।
4. प्लेटो द मैन एण्डहिज वर्क्स पृ॰ 4 ए॰ ई॰ टेलर।

आर्यसुकरातः स्वस्मात्पुरोत्पन्नानां जनानां कृते अतीव श्रद्धावान् आसीत्। प्रजातन्त्रस्य प्रारम्भे उत्सवदर्शनप्रसंगेन प्राप्तस्य बृद्धस्य सेफलुसस्य वार्तायामवगम्यते यत् स न्याय्याधिगमाय सर्वैः सह संलपन् तेषामनुभवैः न्यायस्य पन्थानमधिजगाम।

सेफलुंसः सुकरातस्य आगमनं कौतुहलेन प्रतीक्षते वक्ति च, भवान् मम गृहे आगच्छतु, अहं वृद्धत्वात् भवतां सविधे आगन्तुमक्षमः, किन्तु इदानीं राज्यधनसुखयोः अपेक्षया संलापसुखमतिशेते। अतः भवद्भिः सह संलपितुमिच्छामि। सोऽपि तद्वृतान्तमाकर्ण्य संलापाय सन्नद्धो अभूत्। ततः वृद्धावस्था का? कथञ्च तत्र चित्तवृत्तिः संजायते इति सर्वं पृच्छति। सेफलुसः परामृशति, यो हि जनः अन्याय्येन धनमुपार्जयति, तस्य वृद्धावस्था पापाचरणवशात् कटुतरा भविष्यति। किञ्च यः धर्मेण धनार्जनं करोति, स तथा न पीडितो जायते। तथापि यथा यथा प्रवर्धते जरा तथा तथा स्वनाशकृताशङ्काभयेन शोकः समुपजायते। एवमेव सज्जनोऽपि निर्धनो भवन् वृद्धावस्थायां पीड्यते। तस्मात् न्याय्येन धनोपार्जनं कर्तव्यम्, यस्य किञ्चिद् गृहीतं तत्समर्पणमेव न्याय्यम्। इत्थं बहुशः जराजन्मानुभूतीनामाकलनं विधत्ते सुकरातः। यद्यप्यत्र सेफलुससुकरातयोः मध्ये नास्ति गुरुशिष्यभावः तथापि तयोः संवादेन ज्ञानिनामाचरणविधेः स्वरूपमवलोक्यत एव[1]।

भारते यथा गुरुशिष्यपरम्परा अवलोक्यते तथैव यूनानेऽपि प्राचीनकाले आसीदिति सुकरात-प्लेटो-अरस्तूनां परम्परया बोद्धुं शक्यते। प्लेटोऽकादम्यां शिक्षितः अरिस्तुतिलः तस्यां प्राधान्यं नालभत। ततः खिन्नमनाऽसौ क्वचिद् दूरे गत्वा प्लेटोपरम्परां विकासयितुं प्रायतत। इदमपि केचन ब्रुवन्ति यत् स प्लेटोमहाशयेन सह न सर्वथा सम्मतः आसीत्, तस्मादेव अकादम्या; सर्वोत्तमशिष्यत्वेनापि अधिकारं नैव लब्धवान्। किन्तु उभयोः जीवनदृष्ट्योः मध्ये आसीत् महान् भेदः, अतएव सर्वत्र क्षेत्रे सिद्धान्तभेदोऽपि अवलोक्यते तेषु। तथापि प्लेटो अकादम्यामधिवसतः तस्य मित्रस्य खेदास्पदं कारागारत्वं वधं च विलोक्य, पुनः एतस्माद् नगरात् परावृत्तः लेस्वासनगरमाजगाम। पुनश्च राज्ञः फिलिपस्य निमन्त्रणमधिगत्य स मकदुनियानगरे गत्वा मित्रस्य हरमियसस्य कथानकं तस्मै श्रावितवान्, सिकन्दरं च अध्यापितवान्। मकदुनियायां तस्य मनो नैव सुखं लेभे। ततः सः पुनः एथेन्सनगरमुपसृत्य लीकियमनामिकामेकां अन्यामेकेडमीं संस्थापितवान्, तत्रैव च प्लेटोपरम्परायामध्यनाध्यापनं च व्यधात्। इत्थं गुरुशिष्यपरम्परायाः प्ररोहः यूरोपेऽपि जात इति के न जानन्ति? एतासु उपनिषद्— सौगत-यूनान-गुरुशिष्यपरम्परासु इदं विस्पष्टमिव आभासते, यत् तेषां न केवलं सैद्धान्तिकं प्रत्युत आचारगतसाम्यमपि आसीदेव। धर्मसम्प्रदाययोः मध्ये एष क्रमः प्राचीनकालतः समागच्छति। तस्मादेव पश्चात् क्रमेण समागतेन कालेनापि इयं परम्परा विकसिता सती लोकहिताय यतते। वैशिष्ट्यञ्चात्र इमासु केवलमध्यात्मजनितगुणानामेवास्तीति अभिव्यज्यते[2]।

●

1. प्रजातन्त्र - 1 प्रथमकाण्ड।
2. अरस्तू पृ० 6 शिवानन्दशर्मा।

# अथ चतुर्थोऽध्यायः

## मनसः स्वरूपम्

बौद्धेषु चित्तमनसोः ऐक्यम् उल्लिखितम्। तद्यथा 'चितं मनोऽथ विज्ञानमेकार्थं चित्तचैतता[1] इति कोशवाक्येन एतेषु ऐक्यं संभवतीति निश्चीयते। मनसः स्वरूपस्य महती गवेषणा वेदेषूपनिषत्सु सुत्तनिपाते रिपब्लिके च कृता वर्तते। एतेषु प्राचीनशास्त्रग्रन्थेषु मनसः चर्चाविषये अध्यात्मविद्या, ब्रह्मविद्या, चित्तमात्रवादः, प्रत्ययवादो वा उपलभ्यते। किन्तु एते वादाः मनोविज्ञानात् भिन्नाः। मनोवैज्ञानिका एतेषु वादेषु चित्तस्य कुत्रापि अन्तर्भावं न स्वीकुर्वन्ति। यतो हि अध्यात्मविद्याः खलु बाह्यलौकिकवृत्तिनिरपेक्षा भवन्ति। तदध्ययनप्रणाल्यपि रहस्यगर्भिता प्रयोगशालीयप्रयोगनिबन्धनव्यावृत्ता च भवति। अध्यात्मविद्यायां यद्यपि चैतन्यस्यैव विवेचनं जायते, परन्तु तत्र मनोवृत्तीनां यादृशमध्ययनं भवति, मनोविज्ञाने तादृशं तु न भवति। ब्रह्मविद्यायाः चैतन्यं तु निरस्तसमस्तविशेषं त्रिगुणातीतमतीन्द्रियम्। लक्ष्यञ्चास्य भवति मोक्षत्वाधिगमनमिति। तद्यथा—

**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते[2] ।।**

अथान्यत्रापि उक्तम्—

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्[3] ।।**

भारतीयास्तु अध्यात्मविद्याया यद्यपि मोक्षत्वाधिगम एव लक्ष्यं निर्धारयन्ति। तथापि चेतनस्य विवेचनायां ते इदं प्राकृतं जडमचेतनं एव मन्यते। सांख्ये तु मनो बुद्धिस्तदुपहितज्ञानानि सर्वाणि अचेतनानि एव भवन्ति। तत्र त्रयोविंशतिसंख्याकाः प्रकृतेरुत्पादाः जडा एव। चेतनं तु पुरुषमात्रम्। मनोऽपि सांख्यशास्त्रे इतरेन्द्रियवत् इन्द्रियमेव। तदनुसारं यत्किञ्चित् मनसः क्रियासु चैतन्यं भवति तत्तु चैतन्यस्य पुरुषस्य उपरागादेव। एवं न्याये, वेदान्ते, च

---

1. अभिधर्मकोश 34।2।
2. केनोपनिषद् 1।5।
3. कठोपनिषद् 2।3।10।

मनसोऽचैतन्यं निरूपितम्। वेदेषु, बौद्धेषु च मनसः चैतन्यमुपपादितम्। बौद्धैस्तु मनसः सर्वप्रवृत्तीनां पूर्वगामित्वमुक्तम्, तस्मात् यदि पुरुषः प्रदुष्टेन मनसा रागद्वेषाभिभूतेन किञ्चित् करोति अथवा ब्रवीति तदा चक्रनेमिक्रमेण दुःखमवश्यं प्राप्नोति[1]। एवमेव यजुर्वेदस्य मन्त्रेष्वपि मनसः चैतन्यमुपपादितम्। इदं मनः खलु तत्र ज्योतिषां ज्योतिः[2], इदं बहिः गच्छति, पुनश्च स्वापकाले आगच्छति। मनः प्रज्ञानं, चेतयतीति चित्तं वा तदपि ज्ञानस्वरूपात्मकमेव। मनः मनुष्यान् प्रेरयति, नियमयति च। केचन तु मनसः आत्मावबोधकार्थमपि घटयन्ति। सामान्येन तु मनस्तदेव यदधिकृत्य मनोविज्ञानं प्रवर्तते। इदं च मनोविज्ञानं सर्वप्रथमं ग्रीकदेशस्य अरस्तुमहाशयेन प्रयुक्तमिति, किन्तु तत्रापि यः प्राथमिकः प्रयोगः आसीत्, सोऽयमध्यात्मविद्यार्थ एव। प्लेटोमहाशयेन तु शरीरमनसोः पार्थक्यमुद्भावितम्। पुनश्च आत्मनः शुद्धस्वरूपमपि प्रकटीकृतम्[3]। इत्थमात्मशरीरयोः पार्थक्यस्योद्भावकः प्लेटो इति कथ्यते।

आधुनिकयुगे चित्तस्य विश्लेषणं मनोविज्ञाने क्रियते, किन्तु इदं खलु विज्ञानं नाध्यात्मशास्त्रम्। यद्यपि महात्मना सुकरातेन आत्मनः सम्बन्धे अध्यात्मवादस्य प्रभूता चर्चा विहिता। स खलु आत्मविषयकचर्चायां ज्ञानस्य सर्वदोषापहारकत्वं बुद्धिपूर्वकविचारकत्वं च विचार्य, आत्मनो नित्यत्वं व्यापकत्वमिव ज्ञानस्यापि नित्यत्वं व्यापकत्वञ्च उद्भावितवान्। तदुक्तं यथा—

**ज्ञानमुच्चतमं सत्यं सदाचारप्रवर्तकम् ।**
**तर्केण केवलं प्राप्यं न चेद्बुद्धिविनिश्चितम्[4] ॥**

एतेन यथाचारे आत्मबोधे च एका निश्चिता विवेचनारीतिर्निर्धारिता तथैव अनिश्चिता खलु सोफिस्टनीतिरपगता। यतो हि ते स्वार्थबलेन सर्वं ज्ञानं मानसं व्यक्तिनिष्ठं च अमन्यन्त। ज्ञानस्य व्यक्त्यधीनत्वात्तस्य प्रामाण्यमपि ज्ञात्र्यधीनमेव स्वीकृतवन्तः। अतः कदाचित् जनः देशस्य हितार्थम् अनृतमपि उक्त्वा मनोवैज्ञानिकेन विधिना राष्ट्रहितं साधयति, तद्यथा सुकरातो ब्रूते—

**यदि सेनापतिर्युद्धे गतोत्साहान् स्वसैनिकान्।**
**पुना रणोन्मुखीकर्तुम् असत्यवचनं वदेत् ॥**
**आत्मघातप्रवृत्तस्य कस्यचिद्वाऽविचारिणः ।**
**मित्रेणापहृतं शस्त्रमन्यायमिति किं भवेत्[5] ॥**

1. धम्मपद यमक-वग्गो - 1।
2. यजुर्वेद अध्याय - 34, 1-6।
3. मनोविज्ञान का इतिहास पृ. 5 जे० डी० शर्मा एवं रूपावत।
4. पाश्चात्य दर्शनम् - त्र्य० आ० भंडारकर पृ० 13।
5. वही - पृ० 12।

अत्रापि मनोभावान् उद्भाव्य स्वदेशस्य प्रेरणया जनेषु प्रेरणां विधाय आत्मरक्षायाः प्रकारः विहितः। अत्रायं प्रकारः मनोविज्ञानात्मक एव। तर्हि मन्ये भावनाबलेन स्वास्तित्वस्य रक्षणाय क्रियमाणानि कृत्यानि मनोविज्ञानमूलकानि। मनोविज्ञानमूलकं कृत्यं हि पूर्वं दर्शनेषु गण्यते स्म। इदानीं तु तद् मनोविज्ञानात्मके प्राकृतिकविज्ञाने एव गण्यते।

भारते तु मनः, चित्तं, विज्ञानं, बुद्धिः, प्रभृतयः योगदर्शनस्य विषयरूपेण गण्यन्ते। अन्येष्वपि दर्शनेषु एतेषां विश्लेषणं भवति। अध्यात्मवादत्वात् भारतीया दार्शनिकाः चित्तस्य विवेचनां विधाय तस्मिन् रागद्वेषलोभादीनां प्रतिष्ठितवासनानामपाकरणं विदधति। चैतन्यं हि व्यक्तिघटितो गुणः। यज्ज्ञानादिकर्म तत्पुरुषविशेषप्रयुक्तमेव। यश्च प्रयत्नादिमनोव्यापारः सोऽपि कस्यचिद् व्यक्तेरेव। चैतन्यस्य यद्रूपमनुभवपदमारोहति तत्तु सर्वथा व्यक्तिविशिष्टमेव भवति। चैतन्यस्वरूपज्ञानमतीव दुष्करम्। तत्र चेतनस्य भावः चैतन्यमिति कथ्यते। चैतन्यमिति चेतनाधातुमपि द्योतयति। स एव चेतनाधातुः जानाति, इच्छति, यतते। तस्यैवापरपर्यायो मन इति। यच्चाधिकृत्य मनोविज्ञानं जायते। इदं चैतन्यमात्मगुणत्वेन नैयायिकाः स्वीकुर्वन्ति। चैतन्यम् आत्मस्वरूपमिति वेदान्तिनो वदन्ति। चैतन्यं तु कदाचित् मनोविज्ञानप्रतिपाद्यं न भवतीति केचन। चैतन्यं तत्त्वं न भवतीत्यपरे। यस्य चैतन्यस्य ज्ञानेच्छाप्रयत्नादीनां व्यवहारज्ञानेनाध्ययनमुपक्रमते तेन तत्सत्त्वनिराकरणमज्ञेयत्वप्रतिपादनं वा कथं संभवति। श्रुतिरपि इममेवाध्याशयमनुवदति यथा 'यत्साक्षादपरोक्षात् ब्रह्म' इति। यदि परमं विश्वस्तं ज्ञानं कस्यापि पदार्थस्यास्माकं विद्यते, तत्तु स्वविषये, स्वचैतन्यविषये, स्वमनोविज्ञानविषये निःसंदिग्धं भवति। चैतन्यविषयेऽस्माकं ज्ञानं जाग्रदवस्थायां ज्ञानेच्छासंवेगप्रयत्नादिभिरेवोत्पद्यते। न ह्यन्यथा तज्ज्ञानं जायते। केचन तु जाग्रच्चैतन्यमेव चैतन्यमामनन्ति, न तु स्वप्नसुषुप्ति-अवस्थयोश्चैतन्यमिति। किन्त्वत्र स्मरणज्ञानं तदेवोपलभ्यते यदि स्वप्नसुषुत्योश्चैतन्यस्याङ्गीकरणं स्वीकुर्यात्। जाग्रत्चैतन्यव्यतिरिक्तमपि चैतन्यतत्त्वमस्तीति स्वीकरणीयमेव।

चैतन्यस्य स्वरूपविषये चार्वाकाः मन्यन्ते देहाकारेण परिणतानि चत्वारि भूतान्येव चैतन्यकारणानि। क्षणिकविज्ञानरूपमिति सौगताः। देहेन्द्रियातिरिक्तं देहपरिमाणमिति दिगम्बराः। कर्ता भोक्ता जडो विभुरात्मेति नैयायिकाः प्राभाकराश्च। जडो बोधात्मक आत्मा इति कुमारिलभट्टानुयायिनः। भोक्तैव केवलबोधात्मकनित्यबुद्धशुद्धस्वभावानासक्तमुक्तः पुरुषचैतन्यात्मकः इति सांख्याः, पातञ्जलाश्च। अविद्यया कर्तृत्वादिभाक्परमार्थतो निर्धर्मकः परमानन्दबोधरूपक एव औपनिषदाः शङ्कराद्वैतवादिनः। आधुनिका मनोवैज्ञानिकास्तु चैतन्यस्य जडभूततत्त्वविलक्षणं स्वरूपमङ्गीकुर्वन्ति, तथापि तदसङ्गं कामक्रोधहर्षविमुक्तमकर्तृकं नैव मन्यन्ते। चैतन्यं मन इति आङ्गलमनोविज्ञाने स्वीक्रियते। जडभूतविलक्षणं सदपि तेन सहास्य संप्रयोगो जायते, नाडीतन्त्रे सपरिकरमस्तुलुङ्गाख्ये। नहि मनः संज्ञकं चैतन्यतत्त्वं असंगं कर्तृत्वव्यतिरिक्तं वा प्रत्युत कामक्रोधहर्षवेगादिषु निमग्नं तत्प्रयोजकं तद्रूपमिति वा। संशयेच्छासंवेगप्रयत्नादयः मनस एव वृत्तयः। नहि निर्धर्मकं मनसो रूपमस्ति विचारास्पदं मनोवैज्ञानिकानाम्। यत्तु व्यवह्रियते बाह्यव्यवहारेषु यच्च आन्तरिकवृत्तिषु व्याप्नोति तच्चैतन्यं

मनःसंज्ञकमद्यतनैः मनोवैज्ञानिकैराद्रियते। अतएव ते चैतन्यक्रियाणां व्यापाराणामेव विश्लेषणं कुर्वन्तीति सामान्येन तदनुसारमेव उपनिषत्सुत्तनिपातयोरपि चैतन्यस्य स्वरूपमुपस्थाप्यते।

## १. उपनिषत्सु चैतन्यम्

उपनिषत्सु खलु चैतन्यस्य मनसो वा विविधं स्वरूपमुपलभ्यते। कदाचिदिदं भौतिकं कदाचिच्च अभौतिकं कथ्यते। यद्यपि आधिभौतिकरूपस्य मनसो रूपम् अल्पीयसा प्रकारेण उपलभ्यते, तथापि तस्य सर्वथा अभावो नास्ति। मनसः निर्माणं अन्नप्राशनद्वारा भवतीति यथा प्रोक्तम्— अन्नमयं हि सोम्य मनः[1]। यथा भक्षितमन्नं विष्ठः, पुरीषं भवति, मध्यमस्तु मांसं, अणिमस्तन्मनः। इत्थं मनसः स्वरूपं भौतिकेनैव विधिना जायत इति प्रतिपादितमुपनिषद्भिः। यथा वा दधिमन्थने तस्य सूक्ष्मं तत्सर्पिः ऊर्ध्वमुद्गच्छति तथैव अशितस्यान्नस्य सूक्ष्मं मनो भवति।

किञ्चान्यत्र इदं मनः सर्वं प्रत्यक्षात्मकं, संकल्पात्मकं, संदेहसमन्वितं च कृत्यमपि प्रतितिष्ठति। तस्मादेवेदं कथ्यते— मनसा ह्येव पश्यति, मनसा शृणोति, कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव[2]। मनसः आरभ्य नामरूपे यावत् संकल्पस्यैव कार्यं भवति। संकल्प एव आत्मा भवति। सर्वं खलु ब्रह्माण्डं संकल्पे एव निवसति। द्यावापृथिव्योश्च संकल्प एव आधारः। संकल्पादपि चित्तं प्रधानमस्ति। यदा हि कस्यापि विषयस्य चेतना भवति तदैव संकल्पः उद्भवति। तस्मात् संकल्पेन मनः, कर्म, वाणी, नामरूपे, मन्त्रं च प्रादुर्भवन्ति। तद्यथोक्तम्—

चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथसंकल्पयतेऽथ मनस्यति अथ वाचमीरयति तासु नाम्नीरयति, नाम्नि मन्त्राः एकं भवन्ति, मन्त्रेषु कर्माणि[3]। इत्थमुभयरूपात्मकं चित्तमुपलभ्यते भौतिकमभौतिकञ्च।

## चैतन्यस्य चतुर्धा स्वरूपम्

एतस्य चैतन्यस्य आधुनिकमनोविज्ञाने विभागत्रयं वर्तते—चैतन्यम् (Consciousness) अवचैतन्यम् (Sub-consciousness) अचैतन्यमिति (Unconciousness)। पूर्वम् उपनिषत्सु व्याख्यातचैतन्यस्य मूलकारणमन्वीक्ष्य भौतिकं चैतन्यं ततो भिन्नं चैतन्यम् (mind) इति दत्तम्। तस्माद् अपि उभयविधयोः (Consciousness and unconsciousness) भौतिका-भौतिकयोः स्वरूपमुल्लिखितम्। सामान्यरूपेण चैतन्यस्यार्थो भवति जाग्रदवस्थामूलकं चैतन्यम्। अवचैतन्यमित्यस्य तु ज्ञानं वर्तमानकाले न भवति तथापि तस्य प्रत्युद्बोधन-

---

1. छान्दो 6।5।4।
2. मैत्रा० 6।30।
3. छान्दो० 7।5।1।

प्रत्यभिज्ञानाख्यसरलमानसक्रियाभ्यां प्रत्यक्षं कर्तुं शक्यते। अज्ञातचैतन्यं तु न केवलं वर्तमानकाल एव ज्ञायमानं नावतिष्ठते, प्रत्युत तस्य साधारणसाधनैर्ज्ञानं न कर्तुं शक्यते।

चैतन्ये खलु संकल्पविकल्पस्मृतिकल्पनादिकमन्तर्भाव्यते। अज्ञातचैतन्यस्य तु चैतन्यापेक्षया व्यापकं क्षेत्रमस्ति। यत्र अज्ञातकालादागताश्चिरसंचिता वासनानैसर्गिकप्रवृत्तयश्च तिरोभवन्ति। अत्र स्वप्नकाले जाग्रत्काले वा असामान्यमनोविकारेषून्मादादिष्वात्मानमभि-व्यञ्जयति। आधुनिकमनोविज्ञाने विशेषतः फ्रायडमते तु अज्ञातचैतन्यं निराधारम्, अशान्तिकारकं च भवति। किन्तु भारते तु अज्ञातचैतन्ये प्राज्ञसंज्ञकचैतन्यस्य शान्त्यानन्दमयरूपता भवति। इदं खलु सुषुप्तिरूपतां तद्वच्चैतन्यरूपतां च प्रकटयति। अर्धचैतन्यस्य तु तैजसाख्यं चैतन्यं स्वप्नावस्थान्तर्गतं चैतन्यं तदभिमानिचैतन्यम् वा भवति स्वरूपम्, तस्य क्षेत्रं सूक्ष्मशरीराख्यमिति। भारते तु एतेषु त्रिषु व्यतिरिक्तेष्वपि एकं चैतन्यं भवति, यत्र हि मन एव दृश्यते, तच्च तुरीयमिति कथ्यते। एतच्च परमं सत्यस्वरूपमिति। सकलमेतत् उपनिषत्सु उपनिबद्धं वर्तते। उक्तम् यथा—

**जागरितस्थानो बहिः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक्वैश्वानरः प्रथमःपादः। स्वप्नस्थानो अन्तः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तिभुक् तैजसो द्वितीयः पादः। यत्र सुप्तं न कञ्चन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञः तृतीयः पादः। नान्तःप्रज्ञं, न बहिःप्रज्ञं, नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म-प्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते, स आत्मा, स विज्ञेयः[1]।**

इत्थमेतच्चतुर्विधस्वरूपोपपन्नात्मा एव यदि सर्वात्मना बोधगम्यो भवति, तर्हि स तत्त्वज्ञानावबोधयुक्तः सन् शाम्यति, उपरमते, जगदनलज्वालातः। किन्तु यदि स आत्मा स्वस्वरूपमज्ञात्वैव वासनाविलासादिभिः कार्यं करोति तत् स मनोवैज्ञामिकेषु भावेषु भावनासु च विपर्यस्तो जायते। अस्यामवस्थायां व्यक्तेर्विविधभावानाम् आनुकूल्येन सामञ्जस्यस्थापनं आवश्यकं भवति। आदर्शसिद्धान्तानुकूल्यं प्राप्य विविधा भावाः सम्मिलिताः संघटिताश्च जायन्ते। अतः सर्वत्र एवं कृताः जनाः सत्यं शिवमद्वैतरूपं सामाजिकस्वरूपोपलब्धिं च प्राप्नुवन्ति। एतच्च न केवलं प्राच्ये, प्रतीच्येऽपि व्युत्पादितम्।

प्लेटोनामकः विश्वविश्रुतो दार्शनिकवरेण्यो यो हि रिपब्लिकस्य कर्ता सोऽपि मस्तुलुंगायतनस्वरूपमात्मानं प्रतिपादितवान्। तन्मते आत्मनो व्यापारत्रयं भवति, एकः

---

1. माण्डूक्योपनिषत् - 3,4,5,7 पृ० 20।

भरणपोषणात्मकोव्यापारः (Vegitative function) द्वितीयः अनुभवात्मकः (Sensitive) तृतीयश्च (Rational) बुद्धिव्यवहारात्मकः। तत्र एषु बुद्धिमद्व्यवहारस्तु मनुष्याणाम्, उद्भिज्जानां भरणपोषणात्मको धर्मः। पशूनां भरणपोषणात्मकव्यापारव्यतिरिक्तो अनुभूतिविशेषात्मको दृश्यते व्यवहारः। अतः गुणानामतिशयितत्वात् मनुष्याणामुच्चतमत्वमिति भावः। एवं विविधव्यवहारसंकलनकलाप्रवीणः खलु प्रमाता जाग्रत्-स्वप्न-प्रसुप्तिषु आत्मनः स्वरूपमुद्भाव्य उद्भित्स्थावरजंगममनुष्येषु च बौद्धां वृत्तिं संसाध्य स्वस्मिन्नैक्यं प्रस्थापयति तथा चात्मनो विशिष्टं स्वरूपमुन्निमेषयति। स सकलं जगत् स्वस्मिन् वदति, जगति च स्वं विलोकयति, तस्मात्पूर्णात्मकं व्यक्तित्वं खलु भवति आत्मनः।

एतत्सकलं खलु अन्तर्मुखीभूतं व्यक्तित्वं कस्यचित् दार्शनिकस्य कथ्यते। भूतवादैकवादिनां कृते तु एतस्मात् पृथक् शिक्षानुभववंशायत्तगुणसापेक्षत्वात् शारीरिकमानसिकगुणानां क्रमशः विकास एव व्यक्तित्वस्य विकासः कथ्यते। व्यक्तित्वं खलु बुद्धिविकासापेक्षं भवति। सत्यां च बुद्धौ सत्यावगतौ नेता सहजं स्वातन्त्र्यं भणति यथा गांधी प्रोवाच— नहि परतन्त्राणां कोऽपि धर्मः, अयं खलु नेता सकलमेव भारतसमाजमेकीकृत्य स्वातन्त्र्यावाप्तये प्रयत्नमकार्षीत्। तस्य बाह्यमुखी भवति प्रवृत्तिः। किन्तु लोकहितकारिणी अपि जायतेऽस्याबुद्धिः। एतादृशी संघटनक्षमता आन्तरिकक्षमतायुक्ता च विशिष्टा दार्शनिकव्यक्तिः भवति प्लेटो महाशयः तद्यथा[1] —

So the philosopher whose dealings are with the divine order himself aquires the characterstics of order and divinity so for as a man may; though as always he will have his detractors.

अस्मिन् हि आन्तरिकं बाह्यं च व्यक्तित्वमैक्यं लभते। महात्मबुद्धस्यापि व्यक्तित्वं तथैव आसीत्। तस्मादेव अंगुलिमालसदृशक्रूरतमचौरस्यापि तस्य समक्षमात्मसमर्पणं जातमिति। तथा चासौ प्रोक्तवान् 'अच्छरियं, भन्ते, अब्भुतं, भन्ते! यावञ्चिदं, भन्ते भगवा अदन्तानं दमेता, असन्तानं समेता, अपरिनिब्बुतानं परिनिब्बापेता। यं हि मयं, भन्ते नासक्खिम्हा दण्डेन पि सत्थेन पि दमेतुं सो (अंगुलिमालो), भगवता अदण्डेन असत्थेनेव दन्तो। हन्द च दानि मयं भन्ते, गच्छाम, बहुकिच्चा मयं बहुकरणीयाति[2]।

इत्थं प्राच्यप्रतीच्याः दार्शनिकराजानो अध्यात्मप्रवणाश्च नेतारः स्वस्य व्यक्तित्वस्य तथाविधं पूर्णतामानयन्ति येन तेषां व्यक्तित्वेन समाकर्षिता जना भवेयुः। किञ्चैतदधिगमनं तु न सर्वैरेव क्रियते, तस्मात् पूर्णव्यक्तित्वावाप्तिपूर्वं कथं जनेषु भावनानां विचाराणां वा प्ररोहक्रमः जायते, तदिह संक्षेपेण विचार्यते।

---

1. रिपब्लिक - 500 डी॰, पृ॰ 297।
2. मज्झिमनिकाय - अंगुलिमालसुत्त पृ॰ 348।

## अनुभूतीनां विचाराः

मानसविश्लेषणे विविधविचाराणां कथं जनेषु अनुभूतिरुत्पद्यत इति भवति प्राथम्येन विचारविषयः। जनाः प्रत्यक्षं वस्तु अवलोक्य ततः तद्बलेन पूर्वदृष्टवस्तूनां स्मरणं कुर्वन्ति, तर्हि पूर्वदृष्टवस्तूनां स्मरणकारणं वर्तमानानुभूतय एव। साम्येनापि कस्यचिद् वस्तुनोऽवबोधो जायते, साम्यं च अनुभूतिमुखेनैव उपस्थाप्यते। यथा ब्रह्मबोधप्रकारे याज्ञवल्क्यः प्रोवाच जनकम्— यथा राजानः यदा गच्छन्ति तदा तेषां सहयायिनः आरक्षिणः, ग्रामीणाः, न्यायविदश्च पथि तान् प्रतीक्षन्ते, कथयन्ति च—अयमायाति अयमागच्छतीति राजा। तथैव आत्मा यदा सर्वान् विहाय गच्छति तदा सर्वाणि भूतानि प्रतिकल्पन्ते, इदं ब्रह्म आयाति इदमागच्छतीति[1]। एतेन साम्यमूलकोपमानकर्मणा वस्तुबोधसारल्यं जायते। अयं च मानसिकबोधप्रकारः। तदपि उक्तम्— यदा मानवः अध्यात्मबोधस्य प्रथमप्रभाते आसीत्। न केवलमेतदेव स्वप्ने जायमानानामनुभूतीनां कारणं वर्तमानानुभूतय एव तदपि आलोचितं उपनिषत्सु।

## स्वप्नः

जनकोऽब्रवीत्— स्वप्नावस्थायामयमात्मा खलु शरीरं परित्यज्य बाह्यदेशे विहरति, तस्मात् प्रसुप्तं पुरुषं नैव झटिति प्रबोधय इति। अत्र याज्ञवल्क्य उवाच— स्वप्ने खलु यदपि पश्यति आत्मा तन्निखिलमेव जाग्रति तेन दृष्टम्। अनन्तरं तत्र केवलं तदेव भवति यत् जाग्रति यत्स्वरूपं स सूर्यचन्द्र— अग्निवाण्यादिज्योतिर्भिः पश्यति, तत्स्वरूपं स स्वप्ने स्वयं ज्योतिषा पश्यति। अत्रेदमपि विचारणीयमास्ते यत् प्रत्यक्षप्रक्रियायां ये खलु न्यायादयः प्रत्यक्षलक्षणमुपस्थापयन्ति। तत्र तेषां लक्षणगर्भे— 'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षत्वेन[2] आगच्छति। किन्तु अत्र तु सुस्पष्टरूपेणैव उच्यते— यत् जाग्रति ज्ञानं खलु आदित्येन, चन्द्रमसा, अग्निना, वाण्या वा उत्पाद्यते; स्वप्ने तु स्वयंज्योतिर्भवति तत्कारणम्[3]। इत्थं प्रत्यक्षमीमांसायां यो हि पन्था उपनिषत्सु स्वीकृतः। स खलु मनोवैज्ञानिकप्रत्यक्षमीमांसायां सदृश एवास्ति। तार्किकप्रत्यक्षमीमांसायां तु तस्य नामग्राह एव क्रियते। तस्मात् प्रत्यक्षस्य स्वप्ने प्रभावः। अथ च स्वयंज्योतिरूपस्य ज्ञानस्य स्वप्नावबोधे कारणमिति ब्रुवता उपनिषदृषिणा वर्तमानज्ञानस्य प्रबोधस्य वा रीतिरुद्भाविता इति। एतच्च बोरिंगप्रभृतिभिरपि स्वीकृतमिति। तस्मात् उपनिषदां प्रत्यक्षमीमांसा, स्वप्नमीमांसा च आधुनिकमनोविज्ञानानुकूलेति वक्तुं शक्यते[4]। फ्रायडमहाशयेनाप्यत्राभिहितम् यद् अवदमनविषयीभूताः पदार्थाः काममूलकास्ते सन्ततमात्मानं बहिः प्रकाशमिच्छन्ति। तेषां

1. बृहदा॰ 4।3।36-37।
2. तर्कसंग्रहः।
3. बृहदारण्यक 4।3।2,3,14।
4. फोडन्डेशनस ऑफ साइकोलाजी, पृ॰ 2।6-17।

भावग्रन्थिप्रभावाय तावदन्तःपदार्थानामाकलनम् इदमित्थन्तया रोगिणः स्वप्नविमर्शमुखेन कर्तुं शक्यत इति[1]। किञ्च प्रत्यक्षे भ्रमः कथमुत्पद्यते, कथञ्च तेषां विवेचनमाधुनिकैः पुरातनैश्च क्रियते, इति सकलमेव इहापि विवेच्यते।

**भ्रमः**

भ्रमस्य यद्रूपं भवति तत्तु 'परत्र पूर्वदृष्टावभासः' इति वेदान्तवाक्यप्रयोगेणैव ज्ञायते। परत्र शुक्तौ पूर्वदृष्टस्य अवभासः एव भ्रम इत्यभिधीयते। अध्यासस्तु खलु अतस्मिंस्तद्बुद्धिः इति। भ्रमे सत्यानृते मिथुनीभूते उपलभ्येते। अर्वाचीनानां मनोवैज्ञानिकानामप्यभिमतमेवेदम्। भ्रमनिरूपणप्रसङ्गे प्रत्यक्षे न केवलमालोचनं ज्ञानमेव विद्यते, अपि तु केचन विशेषा अपि भावा उपलभ्यन्ते। यथा पृष्ठभूम्यामाकृतिविशेषः, संयोजनं, संघटनं, मानसिकसंलग्नता, अनुमितिश्च। एतेषु विशेषेषु सत्स्वेव प्रत्यक्षजनकसामग्रीविशेषो विकृतो जायते, तदा भ्रमो जन्यते। भ्रमः विभ्रमादतिरिक्तो भवति, तच्च भारतीयवाङ्मये नोपलभ्यते। भ्रमे प्रत्यक्षगोचरं वस्तु विद्यते, विभ्रमे तु प्रत्यक्षगोचरं वस्तु न विद्यमानं भवति। यथा अधिष्ठानं विना (रज्जुं विना) भ्रमस्य (सर्पभ्रमस्य) उत्पत्तिर्न जायते तथा नास्त्यपेक्षा वस्तुसद्भूतस्य अधिष्ठानस्य विभ्रमे।

उपनिषत्सु कथं भ्रमाधारभूतमनृतकामस्य विवेचनमुपलभ्यते इति तु कदाचित् विश्लेषणेनैव ज्ञातुं शक्यते। यथोक्तं छान्दोग्ये यत् तृष्णानाम् अनृतावरणेन आवृतं खलु सत्यं न स्वरूपेऽवगम्यते, तस्मात् अनृतावरणमपवार्य सत्यं गृह्णीयान्मनुष्यः। ये हि अनृतापिधानाः कामाः तान् अपवार्य सत्यरूपात्मका एव ज्ञातव्याः[2]।

एवमेव बृहदारण्यके दध्यङ्ङृषिः अश्विनिकुमारौ उपदिशति। आत्मा खलु येन रूपेण स्वं योजयति तदेव रूपं गृह्णाति, यद्यपि अस्य स्वं रूपं तस्मादन्यत् वर्तते। आत्मा यदा स्वमसाधारणस्वरूपम् अनुभवति, तदा अयं मायया अपरिगृहीतो जायते। यदा मायया संपरिष्वक्तस्तदा तु विविधं रूपमेवालंकुरुते। उक्तं चैतद्यथा—

'इन्द्रो मायाभिः पुरुरूप इयते युक्ता ह्यस्य हरयः शता दशेति। अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि च अनन्तानि तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्'[3]।

इत्थमविद्यया आव्रियमाणं ब्रह्मज्ञानेन अनावृत्तं सत् भ्रमस्य विदूरीकरणं कुरुते, ततो अज्ञानी आत्मा वञ्चनरूपकर्मतो निश्चिन्तो भूत्वा लोकहितं भावयति।

---

1. अर्वाचीनमनोविज्ञानम् पृ० 384।
2. छान्दोग्य 8।3।1-3।
3. बृहदा० 2।5।19।

**प्रत्यक्षम्**

पुनश्च भ्रमात्मकज्ञानस्य प्रत्यक्षं कथं भवतीति तत् प्रजापतेः इन्द्रविरोचनयोः उपदेशे अवलोक्यते प्रजापतिः तौ उपदिशति— 'साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा उदशरावेऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ भूत्त्वोदशरावेऽवेक्षां चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति'[1]। अत्र हि प्रत्यक्षस्य कथं ज्ञानं भवतीति ज्ञानं प्रददाति प्रजापतिः।

**ध्यानम्**

तथा च ध्यानस्यापि विवरणमत्र उपनिषत्सु उपलभ्यते यथा— ओंकारोपासनायां देवान् प्रति ब्रुवता ऋषिणा प्रोक्तम्— व्यानरूपात्मकमुद्गीथं भवति तच्चासीत्। अस्य हि ज्ञानं तदैव भवति यदा कश्चन श्वासप्रश्वासं संरोध्य मध्यस्थं तमुद्गीथरूपं ध्यायति, तदा व्यान इति उच्यते।

अयञ्च व्यानरूपात्मकोद्गीथः एव ध्यानस्वरूपम् अवधानं वा वक्तुं शक्यते, ध्याने अवधानं (Conscentration) अपेक्ष्यते। अतोऽत्रापि तथैवास्ति। तथा च प्रोक्तम्—

'अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत'[2]।

**शिक्षणम्**

उपनिषत्सु शिक्षणव्यवस्थाया अपि वर्तते समवयोगः। तत्र न केवलं मौखिक एवोपदेशो दीयते अपितु विषयवस्त्वनुसारं विज्ञातव्यव्यवस्थायां स्वयमेव साक्षात्कर्तुं तपः आदिश्यते— यथा वदति आचार्य अधीहि भगवो ब्रह्मेति। तत्र ब्रह्मबोधप्रकारस्य अनुगमनाय तपोऽनुष्ठीयते। तपश्च मनसः संयमनेन मुर्हुमुर्हुः बाधकतत्त्वानां दमनेन वा संप्राप्यते। तद्यथा— भृगुः दीर्घकालं यावत् तपोऽतप्यत, ततः अन्नं ब्रह्मेति व्यजानात्। ततः परावृत्तोऽसौ वरुणं समीपमाययौ पुनः पृष्टवान् किं ब्रह्मेति? पुनश्च सः तप आचरितुमुपदिष्टवान्, तत एवं वारत्रये अनुष्ठिते तपसि स शङ्कारहितः सन् ब्रह्मस्वरूपमजानात्[3]।

अत्र भृगोस्तपसःवारत्रयाधिष्ठानस्य स्वरूपेणदमाकल्यते यदयम् आवृत्या ज्ञानस्य पूर्णतामादधाति। आवृत्त्या च अयं निर्दुष्टं लक्ष्यं प्राप्यैव विरराम। तस्मादावृत्तेःयत् शिक्षणव्यवस्थायां महत्त्वं भवति तत्तु उपनिषत्सु अपि वर्तत एव।

विषयसाक्षात्कारः शिक्षणव्यवस्थायां कथं भवति एतदर्थं वैज्ञानिकपद्धतौ निरीक्षणपरीक्षणयोः उदाहरणं दीयते, ततः इदमध्ययनं वैज्ञानिकविधिना सम्पादितमिति

1. छान्दो॰ 8।8।2।
2. छान्दो॰ 1।3।5।
3. तैतिरीय॰ 3 भृगुवल्ली।

व्यविह्रयते। उपनिषत्सु एतास्तिस्रः प्रणाल्यः उपवर्णिताः सन्ति। तद्यथा श्वेतकेतुः पितरमुपसर्प्य पृष्टवान्-भगवन् केन विज्ञातेन सर्वं विज्ञातं भवति। उद्दालकश्च दृष्टान्तद्वारा जगत आविर्भावप्रकारं तस्मै उपदिष्टवान्। प्रथमं च त्रिवृत्करणस्य स्वरूपमुद्घाट्य नामरूपयोः स्वरूपमुवाच। ततः सर्वं कार्यं कारणमूलकं भवतीति निर्धार्य तस्य स्पष्टीकरणाय एकैकस्य व्याख्यां चकार। तद्यथा— सोम्य अन्नस्य स्थूलभागात् पुरीषं, मध्यमात् मांसम्, अणुतस्तु मनो जायते एवं जलस्य स्थूलभागतो मूत्रं, मध्यमात् रुधिरम्, अणुतस्तु मनो जायते तथा च तेजसः स्थूलभागात् अस्थि, मध्यमात् मज्जा, सूक्ष्मात् वाक् संप्रवर्धते।

अत्र पुनराशङ्कते श्वेतकेतुः। कथं भगवन् स्थूलादन्नात् जलात् तेजसो वा सूक्ष्मतत्त्वानामुत्पत्तिरित्याशङ्कायां प्रोवाच पिता—

यथा दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति, एवमेव खलु सोम्य अन्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वं समुदीषति तन्मनो भवति[1]। इत्थमत्र यथा आधुनिकप्रणाल्या कृतनिरीक्षणपरीक्षणयोः (by observation and experiment) ज्ञानं वैज्ञानिकम् उच्यते तथैव उपनिषत्स्वपि प्राप्यते वैज्ञानिकं ज्ञानम्। पुनश्चेदं मनः अन्नस्यैव कार्यमिति संसाधयितुं उद्दालकः तस्मै उपवासाय आदिदेश, तं प्रपूर्य स तस्य सत्यतामधियाचते स्म।

किञ्च शिक्षणस्य ये प्रकारा इदानीमुपलभ्यन्ते ते खलु मनोवैज्ञानिकविधयस्तदानीमपि आसन्निति उपनिषदां विवेचनेनैवावगम्यते। विधिषु खलु पञ्च मुख्या विधयः सन्ति तद्यथा—

1. प्रश्नः तन्निरूपणम्।
2. तत्त्वजिज्ञासा-प्रशमनप्रकारः।
3. तत्त्वबोधस्य साधनानि।
4. आनुमानिकः सिद्धान्तः।
5. तस्य प्रमाणीकरणञ्च।

यथा भृगुः आशङ्कते किं भगवन् ब्रह्मेति? तदा उद्दालको ब्रवीति— अधीहि भगवान् ब्रह्मेति। पुनः ब्रह्मणः स्वरूपमुपदिदेश, किन्तु केवलं तस्य तटस्थलक्षणमेव, येन शिष्यःस्वयमेव तत्साक्षात्करोति। साक्षात्करणे स भृशं तस्य साक्षात्करणाय साधनानां प्रयोगं विदधाति ततोऽनुमानद्वारा स निश्चिनोति, यत् यो हि साधनप्रकारः मया आसादितः, तेन मन्ये तत्त्वस्य किमपि ज्ञानं जायत एव। पुनश्च स्वयं साक्षात्कृतविषयाणां प्रमाणीकरणाय स तस्य ज्ञातारं समीपमुपसृत्य स्वबोधं प्रस्तौति। ततः यदि गुरुः तं तथैवास्तीति बोधयति तर्हि स सफल उत्तीर्णतां च स्वयमेवाधिगच्छति। इदञ्च कार्यं सकलं आधुनिकेऽपि शिक्षणविधौ

---

1. छान्दो॰ 6।6।1-2।

सम्पाद्यते। एवं तर्हि अनेन संक्षेपविश्लेषणेनापि उपनिषत्सु समागतशिक्षणव्यवस्थायाः किमपि निदर्शनं स्फुटमेव भवतीति।

## व्यवहारबोधः

व्यवहारबोधेनापि आत्मबोधो जायते यथा याज्ञवल्क्यः जनकमुपसृत्य आत्मस्वरूपस्य विविध-ऋषिभिः प्रोक्तानां प्रवचनानामुपशमनपूर्वकम् आत्मनो जाग्रतावस्थायां वामदक्षिणनेत्राभ्यां प्रकाशकरत्वमिति विभाव्य इन्ध (Consciousness) इति नामकेन तं बोधयति। स एव स्त्रीपुरुषरूपेणावस्थितस्य आत्मनः मिलनस्थाने संस्ताव (Reviderons) इति कथ्यते। इदं खलु स्वप्नस्थानं बहिर्मुखवृत्तितः शान्तो भूत्वा रमणस्थानं हृदयं भवति। स्वप्नावस्थातोऽप्यग्रे सुषुप्तौ हितनाड्याम् आत्मा सुखेन विरमति, एतच्च देकार्तमहाशयेन (Pineel gland) इत्युक्तम्। इदं सुषुप्तिस्थानं प्राणेन युक्तं जायते। इत्थमक्षि-हृदय-प्राण-रूपस्य आत्मनः परमेकं तुरीयं स्वरूपमपि भवति तस्य, इदं खलु अग्राह्यं-अशीर्णं सुखमिव भवति। इदमेवाभयं पदं कथ्यते। विदेहराजस्तु उवाच भो जनक! येन ज्ञानेन वयमभयत्वमनुप्राप्ताः, तत्पदं त्वमपि प्राप्नुहि। ममैतस्य कृते प्रणामाञ्जलीन् स्वीकुर्वन्तु महात्मानः[1]। एतादृशमेव व्याख्यानमन्यत्र माण्डूक्ये, छान्दोग्ये 8-12 बृहदारण्यके 2-1, 4-3 चोपवर्णितमस्ति। अयं बोधः व्यवहारमात्रेण जायते, तस्मात् चित्तमीमांसाया व्यवहारबोधकत्वेन शास्त्रत्वमित्यपि संगतं भवति। किञ्च एतच्चतुर्विधावस्थाविशेषप्रकारेण प्रबोधितः आत्मा पञ्चकोशैः प्रबोधितो भवति। तच्च उपनिषत्सु[2] वर्णितम्— सूक्ष्मशरीरं कोशत्रयात्मकम्। कर्मेन्द्रियैः सहितः प्राणः प्राणमयकोषः। कर्मेन्द्रियैः सहितं मनः मनोमयकोषः। ज्ञानेन्द्रियैः सहिता बुद्धिः विज्ञानमयकोषः। सुखाकारावृत्तिमदन्तःकरणं भोक्तृत्वोपाधिः तस्य प्रियमेवशिरः मोदो दक्षिणपक्षः इत्यादिश्रुतेः कारणपर्यन्तः आनन्दमयकोषः। केचित्तु अज्ञानमानन्दमयकोषं वदन्ति। इत्थं सूक्ष्मं कारणसंयुतं च स्थूलं शरीरं अन्नमयमिति उच्यते।

## पुनर्जन्मवादः

वेदेषु पुनर्जन्मनः तथ्यम् उपलभ्यते तथैव उपनिषत्स्वपि। कठोपनिषदि वाजश्रवो नचिकेता प्रोवाच यमगृहगमनं नैव किञ्चिदसाधारणम्। बहवः मत्पूर्वमपि तत्रागच्छन्, बहूनां मध्ये मध्यमोऽपि संवृत्तः, तर्हि पूर्वान् परान् च दृष्ट्वा यमः यथा माम् आदिशति तथा करिष्यामि। मनुष्यः सस्यमिव पच्यते सस्यमिवाजायते च[3]। बृहदारण्यकोपनिषदि प्रोक्तम्— यथा राज्ञो निस्सरणवेलायां हस्त्यश्वपदातयः दृश्यन्ते तं रक्षणाय तथा वा ब्रह्मणः परलोकगमनवेलायां सर्वमहाभूता प्राणवायवश्च परितः उपस्थिताः

---

1. बृहदा॰ 4।2, 2।1, माण्डूक्योपनिषद्-छान्दो॰ 8।2।
2. तैतिरीय॰। 2।5।
3. कठो॰ 1।1।5-6।

एनमवतरन्तं परिपश्यन्ति। हृदयस्याग्रभागः तत्र प्रकाशते, अस्मिन् प्रकाशमानो वा आत्मा नेत्रमार्गाभ्यां शिरसो वा बाह्यमागच्छति आत्मनो गते जीवोऽपि बहिर्गच्छति एवं तस्य ज्ञानपूर्वकर्म चानुवृत्तं जायते[1]।

यश्च खलु पापी भवति स अनन्दानामके लोके उपसर्पति। यश्च खलु रुग्णाः गाः परिददाति सोऽपि अनन्दे लोके एव गच्छति, अज्ञानिनः असुराश्चापि तथैव भवन्ति। तद्यथोक्तम्—

**अनन्दा नाम ते लोका अन्धेन तमसावृताः**
**तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः[2]।**
**अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते[3]**
**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः**
**अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत्[4] ॥**

इत्थं कर्मफलयोः व्यवस्थासम्बन्धीनि वचनानि अपि उपनिषत्सु लभ्यन्त एव। तस्मादयं कर्मवादसिद्धान्तः मनोवैज्ञानिकतां विहाय दार्शनिकतामारोहति।

पुनर्जन्मवादस्यैव कल्पनायां देवलोकवादोऽपि प्रतिष्ठितो भवति। श्रद्धासमन्वितो हि यो वने तपति, स मृत्योरनन्तरं तेजोमार्गेण दिवसं, दिवसात् शुक्लपक्षं, शुक्लपक्षात् उत्तरायणं षण्मासं ततः संवत्सरं, सूर्यं, चन्द्रमसः पर्यन्तं गच्छति। ततः ब्रह्माणि देवयानेन गच्छति। ये हि ब्रह्मपर्यन्तं गच्छन्ति, ते न पुनरावर्तन्ते[5]। छान्दोग्योपनिषद्यपि एकः मार्गः परलोकस्य निर्धारितो वर्तते। यत्र पुण्यार्जनशीलाः धूमात् निशायां, निशातः कृष्णपक्षे, कृष्णपक्षात् दक्षिणायने, दक्षिणायनात् पितृलोकं, पितृलोकात् स्वर्गं ततः चन्द्रलोकं च गच्छन्ति[6]। एवमेव कीटपतंगानामपि जन्मप्रसंगाः छान्दोग्ये वर्णिताः सन्ति[7]।

प्लेटो अपि रिपब्लिकस्य दशमकाण्डे अर्मीनियसस्य पुत्रस्य अरस्य एकां कथां प्रस्तौति। यत्र अरनामको योद्धा रणे मृत इति बुध्वा परित्यक्तः, किन्तु दशदिनानन्तरं पुनः तस्य शरीरं तथा शीर्णं नाभवत् यथा अन्येषां जायते। ततस्तं पृथिव्यां पातयितुं यदा स आनीतवान् तदा जीवितोऽपि स पाताललोकस्य सर्वां कथां कथितवान्। यां हि स स्वप्न

1. बृ॰ 4।3।37-38।
2. बृह॰ 4।4।11।
3. ई॰ शा॰ 1-9।
4. कठ - 1।1।3।
5. छान्दो॰ 4।15।5-6।
6. छान्दो॰ 5।10।1-6।
7. छान्दो॰ 5।10।8।

इव स्मृतवान्। पाताले कर्मन्यायाधीशाः पापिनं पुण्यशालिनं च पृथक् पृथक् वर्गे विभजन्ति। पुण्यशालिषु वक्षस्थलेषु न्यायाधीशानां मुद्रा अंकिता भवति। किन्तु अन्यायिनां पृष्ठभागे अपि सा अंकिता भवतीति। ते तत्र स्वर्गात्पतन्तः नृलोकादवतरन्तश्च दृश्यन्ते स्म। ते परस्परमेकया स्थित्या स्वानुभवान् उच्चारयामासुः भूलोकादागतानां जीवानां श्रान्तं शरीरं, धूलधूसरितञ्च आसीत्, किञ्च देवलोकादागतानां जीवानां मनांसि आनन्दयुक्तानि अभूवन्। परस्परमालापं कुर्वन्तस्ते स्वस्वलोकानां कार्याणां न पुनः श्रवणं वा स्मरणं वा अकुर्वन्। ये जीवा दुष्कृतेन परिपूरिता आसन्। तेषां कृते दशगुणाधिको दण्डो दीयते स्म। एवं रूपस्तत्र आर्डीयवुसनामको जीव आसीत्, यः खलु स्वपितरं मातरं च जघान। तत्र क्रूराः नारकीयास्तम् हतवन्तः। विविधनारकीययातनानां स्वरूपमपि तत्र अरनामकेन जीवेन दृष्टम्।

अष्टमे दिवसे स पुनः यात्रामारब्धवान्, चतुर्दिनानन्तरं स तस्मिन् स्थाने जगाम यत्र प्रकाशस्य एकां रेखां अपश्यत्। तत्र रेखया समलंकृता मेखलाः काचिदचला, काचित् सूर्यरूपा, काचिद्चन्द्ररूपा, काचिच्च शनिबुधसदृशा, काचित् शुक्रानुरूपा, अन्या मंगला, इतरा बृहस्पतिरूपा शुभ्रा आसीत्। सम्पूर्णवृत्तं मन्दगत्या परिभ्रमत्, तत्र गायन्त्यः काश्चित् बालाः क्लादो-आट्रोपास-प्रभृतयः अदृश्यन्त। ताः पन्थानं दर्शयन्त्यः नियतिपुत्र्याः वाणीमश्रुवन्। तया भणितम्—विधाता खलु निर्दुष्टो भवति। भवतीनां कर्मानुसारमेवात्र जीवनं परिकल्पितं वर्तते। भवत्यः तत्परिगृह्य गच्छन्तु। एवं कृते स्वस्वभाग्यानुसारं जीवनं स्वीकृत्य यदा सर्वाः स्वस्वस्थानं गतवत्यस्ततदा अहं श्मशानचितायां संपतितमात्मनं दृष्टवान्। इत्थमत्र लोकानां कर्मफलयोश्च विवरणं दृश्यते।

## २—सुत्तनिपातस्य चित्तमीमांसा

उपनिषदः खलु गृहस्थानामपकर्मणामपाकरणाय संशोधनमार्गेण संरचिताः ज्ञाननिधयः भवन्ति। किञ्च सुत्तनिपातस्तु निवृत्तिमार्गस्य निकषैकरूपः भगवतो बुद्धस्य उपदेशानां सार इति। प्रवृत्तिनिवृत्त्योस्तु प्रश्नस्सदैव लोकमानसेषु समुदेति। कश्चितु स्वाभाविकी प्रवृत्तिरिति प्रबोधयन् तत्र मनो विदधाति, अन्यः खलु तं रागपाशादुन्मूलयितुं निवृत्तिमेव तथ्यमिति आमिनोति। प्रतीच्येषु यथा फ्रायडः प्रवृत्तिप्रधानः सकलव्यवहारेष्वनुगतां रागबुद्धिं तथ्यं मनुते, तथैव एडलरमहाशयस्तु सकलव्यवहारेषु जीवनस्योत्प्रेरिका शक्तिः खलु भवति स्वप्रभुत्वस्थापिकेति[2]। युंगमहाशयोऽपि फ्रायडमहाशयानां कामानुबन्धनमूला प्रवृत्तिप्रधाना सकलानुसन्धानात्मिकेति न स्वाशयानुरूपं मनुते। तस्मादेवोक्तम्—

He found the Freudian practice of discussing sex and other unsavory topics with patients both embarrassing and unnecessary[3]

1. रिपब्लिक-दशम काण्ड।
2. मनोविज्ञान का इतिहास - पृ॰ 222 जे॰ डी॰ शर्मा एवं सारस्वत।
3. वही पृ॰ 223।

यद्यपि दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम् इति न्यायेन प्रवृत्तिरेवास्ति 'जगतो मूलम्, तथापि कदाचित् स्वार्थानुभूतिवत् परार्थानुभूतिरपि दृढा दृश्यते। स्वार्थपरायणः यथा स्वार्थसाधने सुखमनुभवति तथा परोपकारपरायणानां परोपकारसाधन एव सुखं जायते। इत्थं आत्मोत्सर्गोऽप्यात्मरक्षणवन्नैसर्गिक एव। तस्मादिह फ्रायड-गौतमबुद्धयोः प्रवृत्तिनिवृत्तिमार्गयोः विवेचनक्रमे उभयत्रैव तथ्यमित्याकलय्य उपनिषदां समन्वयमूलकजीवनधाराक्रमेणेह किञ्चित् विविच्यते।

गार्हस्थश्रमणजीवनयोः तुलनाप्रसङ्गे कसिभारद्वाजसुते एकाकिनं विहरन्तं श्रमणं गौतमं प्रेक्ष्य कृषिकर्मकुर्वन् भारद्वाजः प्रोवाच— अहं खलु गौतमः कर्षामि, वयामि, कर्षित्वा उप्त्वा च भुञ्जे। भुङ्क्ष्व त्वमपि गौतम कर्षस्व, कर्षित्वा उप्त्वा च भुङ्क्ष्व। अत्र भगवान् गौतमो भारद्वाजं प्रति प्राह—

अहमपि भारद्वाजः कृषिकर्म करोमि, तत्रास्माकमपि तथैव बलीवर्दादयः भवन्ति यथा भवतां, तच्छृणु-मम कृषिकर्मणः श्रद्धा बीजं भवति, तपो वृष्टिः, प्रज्ञा च युगनाङ्गले स्तः, लज्जा मे हलीषा, मनस्तु यौवतकं, स्मृतिः खलु वलीवर्दयोः संप्रेरिका। इत्थमहं कायेन, वचसा, आहारव्यवहाराभ्यां संयतो भूत्वा सत्यानुसन्धाने तत्परः सन् अर्हत्वरूपं कृषिफलं कर्तये[1]।

अत्र प्रवृत्तिनिवृत्त्योः मनोरमसंवादे प्रवृत्तितः निवृत्तेः वैशिष्ट्यमुच्चतरं प्रतिपादितम्। तस्मात्पूर्वं यथा आत्मोत्सर्गोऽप्यात्मरक्षणवन्नैसर्गिक इति उक्तं तत्साधु प्रतिभाति। मानवमनसश्चेदं वैशिष्ट्यं, न तु अन्ययोनिजानामिति। इत्थं मनोवैज्ञानिकी प्रवृत्तिरपि द्विधा विभक्तुं शक्यते। एका रागगुणानुगता, अपरा च विरागान्विता। श्रमणगौतमस्य खलु सकला प्रवृत्तिः विरागान्विता। सुत्तनिपातस्य उरगवर्गे एव एकाकिनः सञ्चलनस्य प्राशस्त्यमुद्भावितं यथा— गणेषु वासिनः खलु सामयिकीं विमुक्तिं नैव लभन्ते, तस्मात् गणमुत्सृज्य एकाकी एव विहरेत्। प्राक्तनोऽयं सिद्धान्तः रवीन्द्रनाथटैगोरं ततः महात्मानं गान्धिनं यावदुपगच्छतीति नात्र संदेहः।

**अट्ठान तं संगणिकारतस्स, यं फस्सये सामयिकं विमुत्तिं।**
**आदिच्चबन्धुस्य वचो निसम्म, एको चरे खग्गविसाणकप्पो[2] ॥**

इत्थं समाजात् एकाकी विहारस्य, रागादरागस्य, प्रवृत्तेर्निवृत्तेः, गार्हस्थ्यात् श्रमणस्य, आत्मवादादनात्मवादस्य, ईशवादादनीश्वरवादस्य सिद्धान्तः प्रादुर्भूत इति, सुत्तनिपातस्य वैशिष्ट्यम् उपनिषद्रिपब्लिकाभ्याम्। वैराग्यस्येदं महत्त्वं न केवलं चेतनेषु मानुषेष्वेव अपितु पशुष्वपि संदृश्यते तद्यथा— कुरङ्गमृगजातके कृतसहायस्य कच्छपस्य प्रत्युपकारं विभाव्य कुरङ्गमृगःलुब्धकं समागच्छन्तं दृष्ट्वा कच्छपस्य साहाय्यार्थं स्वं च आलोक्य

1. सुत्तनिपात-कसिभारद्वाजसुत्त।
2. खग्गविसाणसुत्त - 1।3।20 सु॰नि॰।

लुब्धकं दूरं समानयत्। वनाद्वनं नयन्तं तं लुब्धकं दूरगतमिति विभाव्यासौ कुरङ्गमृगः अन्येन प्रवारणमार्गेण वातवेगेन तां भूमिमागत्य स्वशृंगाम्यां प्रशिल्पिकं प्रक्षिप्य उदके तं (कच्छपं) आहरत् प्रोवाच च—'अहं तुम्हें निस्साय जीवितं लभिं, तुम्हेहि पि सहायस्स कातब्बं मह्यं कतं, इदानि लुद्दो आगन्त्वा तुम्हे गण्हेय्य, तस्मा, सम्मं सतपतं अत्तनो पुतके गहेत्वा अज्जत्थ याहि। त्वं हि, सम्म कच्छप उदकं पविसाति' आह—

**कच्छपो पाविसी वारि कुरङ्गो पाविसी वनं ।**
**सतपतो दुमग्गम्हा दूरे पुत्ते अपानयीति[1] ।।**

बोधिसत्त्वस्य कुरङ्गमृगस्यायं खलु भावः प्रत्युपकारसंयुतः पशुजन्मानुशीलन-स्वभावत्वात्। मानुषो बोधिसत्त्वस्तु न हि प्रत्युपकारमवेक्षते। तस्मादेवोक्तं यथा—

**कृते प्रत्युपकुर्वीत् सोऽपि तावद्विशिष्यते ।**
**अव्यापारितसाधुस्तु बोधिसत्त्वः किमुच्यताम्[2] ।।**

पूर्वं भयसंकटव्यसनेषु उपकृतमनेन इत्युपकृते सति यः प्रत्युपकारं करोति सोऽपि तावद्विशिष्टो मन्यते, यः खलु अव्यापारितसाधुः अर्थात् अनभ्यर्हितकल्याणोपनेता बोधिसत्त्वः, स खलु किमुच्यताम् अर्थात् तस्मै किमपरमभिधीयताम्, एतादृशस्य लोकोपकाररतस्य प्रशंसापि कर्तुमशक्येति भावः।

## चित्तस्वरूपम्

सम्पूर्ण एव अभिधम्मपिटकावबोधः चित्तमूलक एव। धम्मम्पदे चित्तवग्गे चित्तस्य स्वरूपविषये उक्तम्— चित्तमिदं खलु चपलं स्पन्दनयुतं दुर्निवार्यं दूरक्ष्यं भवति। इदं खलु मेधावी ऋजुं भावयति यथा इषुकारः बाणं ऋजुं करोति[3]। चित्तं दुःखेन निग्रहणीयं भवति, यतो हि इदं सदैव काममनुसरति। तस्मात् दान्तं चित्तं सुखमप्युत्पादयितुमर्हतीति, अतः इदं सदैव काममोहादिभ्यः रक्षेत् मेधावी[4]। चित्तं यदि दान्तं स्यात् तदा तन्मातृपितृभ्यामपेक्षयापि हितकारकं भवति। तस्मादेतत् प्रणिहितं कुर्यादिति[5]।

"किञ्च व्युत्पत्तिबलेन चिन्तनं चित्तमिति उद्घोष्यते तथा च आरम्भणं चिन्तेतीति चित्तं, विजानातीति अत्थो[6] वा भवति चित्तं"। चित्तं खलु संज्ञया प्रज्ञया च विशिष्टं जायते। तस्मादेतेन आलम्बनविषयकं ज्ञानमुत्पद्यते। अभिधर्मकोशे तु 'चित्तं-मनोऽथ-

---

1. कुरंगमिगजातक-पालि पाठसंग्रहे संगृहीतः पृ. 15।
2. बोधिचर्यावतारः 1।31।
3. धम्मपद - 33 चित्तवग्ग।
4. धम्मपद - 35-36 चित्तवग्ग।
5. धम्मपद - 43।
6. अट्ठसालिनी - पृ. 53।

विज्ञानमिति' शब्देभ्य मनश्चित्तविज्ञानानामेकार्थता उक्ता। तथापि विशेषव्याख्यानेषु एतेषु भवत्येवान्तरं यथा' वस्तूपलब्धिमात्रं हि चित्तं— (अभि. दी. 78) विजानन् लक्षणं वा विज्ञानम् इति (अभि. समु.पृ. 03)। तदालम्बं मनोनाम विज्ञानं मननात्मकमिति मनः स्वरूपमुपपादितम्। पुनश्च अभिधम्मत्थसंग्रहे चित्तस्य व्याख्याबलेन अवान्तरभेदानधिकृत्य एकोननवतिः वा एकविंशत्यधिकशतं वा रूपाणि भवन्ति। तद्यथोक्तम्—

**इत्थमेकूननवुतिप्पभेदं पनमानसं ।**
**एकवीससतं वाथ विभजन्ति विचक्खणा[1] ॥**

एते खलु भेदा ध्यानाङ्गबलेन लोकबलेन आध्यात्मिकमार्गमनुसृत्य क्रियन्ते अभिधर्मेषु।

धनियसुत्ते चित्तस्य स्वरूपमुक्तवता भगवता प्रोक्तम्— हे धनिय! यथा तव प्रिया भार्या पुत्राश्च अलोलाः सन्ति तथैव मम चित्तमपि आश्रवरहितं अलोलं वर्तते। चित्तमिदं दान्तं परिभावितञ्च वर्तते। तस्मादत्र दान्ते चित्ते हे देव, यदि वर्षितुमिच्छसि, तर्हि प्रवर्षय[2]। ये खलु कामाः लौकिकान् जनान् विरूपरूपैः विचालयन्ति, तान् परित्यज्य एकाकी खलु शान्तचित्तः विहरेत्[3]। चित्तानां शान्त्यधिगमनाय पञ्चनीवरणानां (कामच्छन्द-व्यापाद-स्त्यानमिद्ध-औद्धत्य-कौकृत्य-विचिकिच्छानां) समापनमावश्यकं भवति। ततः समाधिः समधिगन्तुं शक्यते। यश्च नीवरणानमपहारयति स एकाकी भूत्वा विहरति[4]। किञ्चैवमेव चित्तस्य मनसश्च विषये तत्र कदाचित् 'मनो चस्य सुपणिहितो' अथोचित्तं अनाविलं 'अज्झत्तचिन्ती न मनो बहिद्धा निच्छारये संगहितत्तभावो[5], मंसेसु खीमयानेसु भिय्यो चित्तं पसीदति, 'मैत्तं चित्तं भावयं अप्पमाणं' अत्मना ते भिक्खू भगवतो भासितं अभिनन्दुं। इमस्मिं खो पन वैय्याकरणस्मिं भज्जमाने सट्ठिमतानं भिक्खूनं अनुपादाय आसवेहि चित्तानि विमुच्चिंसूति'[6] इत्यादिपदैः चित्तस्य अनास्रवत्वस्थापनं तस्मिन्नप्रामाण्यभावात्मिकायाः मैत्र्याः संस्थापनपुरस्सरं कथासंम्मोदेन चित्तस्य आस्रवहानिरजायत इति संस्थापितं सुत्तनिपातस्य बहुषु सुत्तेषु। तस्मादिदमाकल्पते यत् स्वाभाविकास्रवाणां नीवरणादीनाञ्च प्रशमनानन्तरं शान्तं शिवमद्वैतरूपं चित्तं जायते, यद्धि खलु उपनिषत्स्वपि व्याख्यातम्।

## चित्तलोकास्तदधिगमनक्रमप्रकारश्च

बौद्धेषु विशेषतःस्थविरवादिषु चित्तमधिकृत्य कृता खलु लोकविभागाः कामलोकः, रूपलोकः, अरूपलोकः, लोकोत्तरश्चेति चतुर्धा विश्रुताः सन्ति। तत्र कामधातौ अष्टौ

1. अभिधम्म संगहे - 1।31।
2. धनियसुत्त - 6 सु॰ नि॰।
3. खग्गविसाणसुत्त - 16 सु॰ नि॰।
4. उरगसुत्त - 17 सु॰ नि॰।
5. सु॰ नि॰ धम्मिकसुत्त - 2।14।13।
6. सु॰ नि॰ द्वयतानुपस्सनासुत्त - पृ॰ 204।

कुशलचित्तानि, द्वादशाकुशलानि, विपाकानि खलु विंशतिः, अहेतुकानि तु एकादश इत्थं चतुःपञ्चाशत्काम-धातुचित्तानि भवन्ति। अत्र मूलानि खलु त्रीणि चित्तानि-कामद्वेषमोहात्मकानि। एतान्येव कुशलाकुशलविपाकहेतुकप्रभेदकानि चतुःपञ्चाशद् भवन्ति। एतच्चोक्तं अभिधम्मत्थसंग्रहे यथा—

**कामे तेवीस पाकानि पुञ्ञापुञ्ञानि वीसति ।**
**एकादस क्रिया चेति चतुपञ्ञास सब्बथा[1] ।।**

योहि खलु रागद्वेषलोभादिकं त्रयम् अकुशलचित्तमपाकृत्य कुशलभावनया कामधातुमतिक्रामति, स खलु कुशलमूलकध्यानाङ्गानि संगृह्य क्रमशः रूपधातौ प्रविश्य भावयति। तत्र ध्यानाङ्गानि खलु कुशलविपाकक्रियाप्रभेदेन पञ्चदश भवन्ति। तस्मादेवात्र क्रमशः वितर्कविचारप्रीतिसुखैकाग्रताः पञ्चध्यानाङ्गानि आलम्बने रूपधातौ ऐकाग्र्यं लभन्ते। एतेन कुशलक्रियाविपाकाश्च भवन्ति चित्तानि। एतदपि उक्तं तत्रैव यथा—

**पञ्चधा झानभेदेन रूपावचरमानसं[2] ।**
**पुञ्ञपाकक्रियाभेदा ते पञ्चदसधा भवे।।**

रूपावचरलोकस्य ध्यानाङ्गानि परिपूर्य साधकः पुनः अरूपावचरे आलम्बनं परिवर्त्तयति। तत्र चत्वारि आलम्बनानि भवन्ति ध्यानाङ्गस्तूपेक्षैकाग्रता एव। आलम्बनेषु कदाचित् "आकासानञ्चायतन-विञ्ञाणानञ्चायतन-आकिञ्चञ्ञायतन-नैवसंज्ञानासंज्ञायतनानि" खलु भवन्ति। तत्र एतानि ध्यानलाभ-पुरस्सरं परिवर्तितानि खलु लोकोत्तरचित्तस्योत्पादकानि भवन्ति। तत्र अरूपावचरे कुशलविपाकक्रियाभेदैः द्वादशचित्तानि जायन्ते। तद्यथोक्तम्—

**आलम्बनप्पभेदेन चतुधारुप्पमानसं ।**
**पुञ्ञपाकक्रियाभेदा पुन द्वादसधा ठितं[3] ।।**

अरूपावचरानुयायी साधकः ध्यानभावनां प्रकुर्वन् गंगानदीस्रोत इव निर्वाणाभिमुखं लोकोत्तरमनुलभते। अयं खलु लोकोत्तरे क्रमशः अवस्थाः चतस्रः संप्राप्य कदाचिदर्हत्त्वं प्राप्नोति। अत्रागतः साधकः निश्चितमेव परिनिर्वत्स्यतीति। तस्मादत्र मार्गफलभेदाभ्यां स्रोतापत्ति-सकृदागामि-अनागामि-अर्हत्वाधिगमं कुरुते। तत्र प्रत्येकस्यामवस्थायां पञ्चध्यानाङ्गभेदेन योगकरणात् चत्वारिंशत् खलु ध्यानाङ्गानि भवन्ति। तद्यथोक्तम्—

---

1. अभिधम्मत्थ संगहो - 1 परिच्छेद - 17।
2. अभिधम्मत्थसंगहो - 1 परिच्छेद - 21।
3. अभिधमत्थसंगहो - 1-25।

**ज्ञानङ्गयोगभेदेन कत्वेकेकं तु पञ्चधा ।**
**वुच्चतानुत्तरं चित्तं चत्तालीसविधं'ति च[1] ॥**

इत्थं क्रमशः चित्तानां प्रकर्षबलेन लोकानां परं पारं विधाय साधकः अर्हत्त्वं प्राप्नोति। एतासां चतसृणां खलु अवस्थानामस्पष्टं विवरणं सुत्तनिपातेऽपि उपलभ्यते। तद्यथोच्यते क्रमशः—

मुनिसुत्ते मुनेः स्वरूपमुक्तवता प्रोक्तम्— यः खलु सर्वां तृष्णां निरस्य तामपवादयितुं यतते, यश्च कामलोके स्थितानां कामानां कामनां विहाय रागहीनो भवति, स खलु कामलोकात् पारं गच्छति। तद्यथोक्तं अट्ठकथायाम्—

अञ्ञाया ति अनिच्चादिनयेन जनित्वा। सब्बानी ति अनवसेसानि निवेसनानी ति कामभवादिके भवे। निवसन्ति हि तेसु सत्ता तस्मा निवेसनानी ति वुच्चन्ति। अनिकामयं अञ्जतरंपी तेसं ति एवं दिट्ठादीनवत्ता तेसं निवेसनानं एकं पि अपत्थेन्तो सो एवरूपो बुद्धमुनि मग्गभावनाबलेन तण्हागेधस्स विगतत्ता वीतगेधो— स एव अगिद्धो, न यथा एके अवीतगेधा एव समाना 'अगिद्धम्हा ति पटिजानन्ति एवं। नायूहती ति तस्स तस्स निवेसनस्स निब्बत्तकं कुसलं वा अकुसलं वा न करोति। किं कारणा? पारगतो हि होति, यस्मा एवरूपो सब्बनिवेसनानं पारं निब्बानं गतो होती ति अत्थो[2]।

एवमेव खलु रूपलोक-अरूपलोक-अर्हत्त्वादीनामपि विवरणमन्यत्र उपलभ्यते यथा— तृष्णां छित्वा अनासक्तः निर्लिप्तश्च भिक्षुः स्मृत्या संयुक्तः रूपलोकादरूपलोकं शान्ततरं विभाव्य पुनः रूपलोकं ज्ञात्वा अरूपलोके च अनासक्तः, अथ यः निर्वृतः स खलु विमुक्तो जायते।

**ये च रूपूपगासत्ता, ये च आरुप्पवासिनो**
**निरोधं अप्पजानन्ता, आगन्तारो पुनब्भवं ।**
**ये च रूपे परिञ्ञाय, अरूपेसु सुसण्ठिता**
**निरोधे ये विमुच्चन्ति, ते जना मच्चुहायिनो'ति[3] ॥**

यद्यप्यत्र लोकचित्तानां क्रमावरोहो न प्रदत्तस्तथापि विवरणेन ज्ञायते यदत्र पश्चाद् भाविनी खलु ध्यानभावना बीजरूपेण बुद्धोपदेशेषु सुत्तनिपातेऽपि उक्ता एवासीदिति। तस्मादत्र कथञ्चित् चित्तानां चतुर्लोकव्यवस्थापनं कृत्वा अनुभूतीनां समीक्षणमिह प्रस्तूयते—

1. अभिधम्मत्थसंगहो - 1।33।
2. मुनिसुत्तवण्णना सुत्तनिपात - अट्ठकथा पृ. 327।
3. द्वयतानुपस्सनासुत्त - 31,32 सु०नि०।

**सुत्तनिपातस्था अनुभूतयः**

सकलं सुत्तनिपातप्रवचनं भगवतां बुद्धानामनुभूतीनां आख्यानमेवास्ति। तथा अनुभूतिषु ये ये गुणा तत्र उपदिष्टाः सन्ति, ते खलु अन्यत्रापि उपलभ्यन्ते। उपशान्तस्य किं स्वरूपमिति ब्रुवता भगवता प्रोक्तम्—

कीदृशः खलु ज्ञानवान् शीलवान् वा उपशान्तो भवति? देवताः पुराभेदसुत्ते पृच्छन्ति।

अत्र गौतमो ब्रूते— यः खलु वीततृष्णः, यश्च भूतं भविष्यं नैवाश्रित्य प्रवर्तते, न च वर्तमाने एव आकांक्षते, स खलु उपशान्तः। यः क्रोधं परित्यजति आत्मप्रशंसां च त्यजति, संयमी, अभिमानरहितः, स खलु मुनी, स चोपशान्तः। यः अनागते न आसक्तिं परिदधाति, न च ब्रूते वृत्तान्ते परिदेवते, अपि तु यः विवेकी दृष्टिग्राहारहितः, सः उपशान्तः। यः कामभोगे न रतिं भावयति, शान्तः, प्रतिभासम्पन्नश्च, यः लाभालाभयोः जयाजययोश्च नैव रतिमरतिं च मनुते, स खलु उपशान्तः। तथा चोक्तं यथा[1]—

**लाभकम्या न सिक्खति, अलाभे न च कुप्पति।**
**अविरुद्धो च तण्हाय, रसे च नानुगिच्झति॥**
**यस्स निस्सयता नत्थि, ञत्वा धम्मं अनिस्सितो।**
**भवाय विभवाय वा, तण्हा यस्स न विज्जति॥**
**तं ब्रूमि उपसन्तो'ति, कामेसु अनपेक्खिनं।**
**गन्था तस्स न विज्जन्ति, अतारि सो विसत्तिकं॥**

श्रीमद्भगवद्गीतायामपि एतादृग्विवरणं स्थितप्रज्ञस्य प्रदत्तम्। मन्ये, एकस्यां संस्कृतौ ये गुणाः भवन्ति भिन्नेन पथ्यानुशीलनेनापि सादृश्यानुभूतेः फलं सदृशमिति। सादृश्यविवरणेनैव स्पष्टीक्रियते। यथा गीतायाम् अर्जुनः पृच्छति—

स्थितप्रज्ञस्य का भाषा? समाधिप्राप्तस्य तस्य खलु का वाक्? कथं स निवसति, कथं वा गच्छति? इति पृष्टो भगवान् ब्रूते—

दुखेष्वनुद्विग्नमनाः सुखेष्वपि विगतस्पृहाः खलु भवन्ति स्थितप्रज्ञावन्तः। ते खलु वीतरागा वीततृष्णा वा भवन्ति। ये सर्वान् कामान् परित्यज्य आत्मन्येव संतुष्टास्ते स्थितप्रज्ञाः। यः सर्वत्र स्नेहं कुरुते, न च कुत्रापि अभिनन्दति, न वा कुत्रापि द्वेष्टि, स स्थितप्रज्ञः। यः सर्वान् कामान् संहृत्य कूर्मोऽङ्गानीव इन्द्रियार्थेभ्यः इन्द्रियाणि संहरति, तस्य खलु प्रज्ञा प्रतितिष्ठति। यश्च शान्तः स्थितप्रज्ञो वा भवति। स कर्माणि कुर्वन् समुद्रवत् शान्तः भवति। तस्मादेवोक्तम्—

1. पुराभेदसुत्त - 4।10।7,9,10 सुत्तनिपात।

**विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः**
**निर्ममो निरहंकारो स शान्तिमधिगच्छति ।**
**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ।।**
**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः**
**वीतरागभयक्रोधः स्थितधीः मुनिरुच्यते[1] ।।**

अत्र भिन्नधारास्वपि समाना एवानुभूतिरित्याकलप्यते। तस्मात् मनोवैज्ञानिकं वा आध्यात्मिकं चिन्तनं समानभावभूमौ समानमेव भवतीति सिद्ध्यति।

## भ्रमस्वरूपनिरूपणम्

भ्रमस्वरूपविश्लेषणप्रसङ्गे यथा उपनिषत्सु तस्योत्सं संदृष्टमस्माभिः तथैव सुत्तनिपातेऽपि भ्रमनिरूपणं प्राप्यते। अत्रापि अविद्यायाः निरूपणमुखेनैव भ्रमस्य उल्लेखः क्रियते। द्वयतानुपस्सनसुत्ते अविद्यास्वरूपमुल्लिखितं यथा[2]—

**'इत्थभावञ्ञथाभावं अविज्जा येव सा गति**

अर्थात् वस्तूनां अन्यथाभावेन विपरिणमनमविद्या कथ्यते। एतच्चोक्तं तत्राट्टकथायाम्—

**इत्थभावञ्ञथाभावं ति इमं मनुस्सभावं इतो**
**अवसेस अञ्ञनिकायभावं च। गतीति पच्चयभावो।**
**अविज्जा हायं ति अविज्जा हि अयं[3]।।**

तस्मादविद्यायामन्यथाभावो यथा जायते तथैव भ्रमेऽपि अन्यथाभावो भवति। यथा रजतस्य भ्रमः भवति शुक्तिकायां, तर्हि शुक्तेः अन्यथाभाव एवापद्यते तस्माद् भ्रमस्यापि अविद्यत्वापत्तिः। एतच्च बहुधा व्याकृतं तत्र भगवता—

ब्राह्मणानां बहुधा प्रशंसां कुर्वता भगवता प्रोक्तं "यावत्कालं ब्राह्मणा ज्ञानवन्तः चरित्रवन्तश्चासन्, तावत्कालपर्यन्तं लोकोऽपि सुखी आसीत्। पश्चात्ते तृष्णयाभिभूता दृष्ट्या च विपर्यासाः विहिताः। तस्मादेव ते लोके विविधान् रोगान् आमन्त्रितवन्तः। दृष्टिविपर्यासोऽपि[4] भ्रमसदृश एव भवति।"

---

1. श्रीमद्भगवद्गीता - 2।71,55,56।
2. द्वयतानुप्पासनासूत्त - पृ. 192 सु॰नि॰।
3. सुत्त-निपात अट्ठकथा भाग-2 पृ॰ 349।
4. ब्राह्मणधम्मिक सुत्त - 16 सु॰नि॰।

एवमेव खलु दुट्ठट्ठकसुत्ते दृष्टेः स्वरूपविकासविवरणं दत्तवत्ता प्रोक्तम्—यः खलु कल्पितां दृष्टिं नैव अवलम्बते, स खलु शुद्धः भवति, स च मायां मदं च परित्यज्य अनासक्तः नैव विवादे पतति, तद्यथा—

**"धोनस्स हि नत्थि कुहिञ्चि लोके, पकप्पिता दिट्ठि भवाभवेसु[1]**
**मायञ्च मानञ्च पहाय धोनो, स केन गच्छेय्य अनुपयो सो ॥**

तस्मात् सत्यावाप्तये कल्पितां दृष्टिं परित्यज्य तथ्यानुरूपां भावयेदिति।

## प्रत्यक्षानुभूतिः

भगवता बुद्धेन स्वजीवने समेषां विचारजातानां भावानां वा साक्षादनुभूतिः कृता, आहोस्वित् तदर्थं स्वानुयायिनः प्रेरिताः। स खलु अनुभूतिवादी आसीत्, न तु आनुश्रविको, विमंसतकी वा[2]। सुत्तनिपाते तु तेन आर्यसत्यदर्शनस्य विवरणं ददता प्रोक्तम्[3]—

**यथिन्दखीलो पठविं सितो सिया, चतुब्भि वातेहि असम्पकम्पियो।**
**तथूपमं सप्पुरिसं वदामि, यो अरियसच्चानि अवेच्च पस्सति।**

अत्र 'अरियसच्चानि अवेच्च पस्सति' इति पदस्य सामान्येन ज्ञात्वा पश्यतीत्यर्थो बोध्यते। एतच्च प्रोक्तं जयतिलकमहाशयेनापि—

It is usually said of what he claims to know that he both knows and sees.

(तं अहं जानामि पस्सामीति— म 1-329) एवमेव खलु स बुद्धःसर्वान् घर्मान् अन्तर्दृष्ट्या जानाति। प्रोक्तं यथा सुत्तनिपाते' सब्बेसु धम्मेसु च जाणदस्सीति। इत्थं भगवतो दृष्टबोधः न खलु उपरि आलोकपरः प्रत्युत तलस्पर्शित्वबोधकः बुद्धस्य प्रत्यक्षस्य बोधोऽपि न केवलं दृष्टिमात्रावगाहको भवति तत्र श्रुतिबोधकपदार्थानामपि जायते प्रत्यक्षम्। सर्वः च पिटकोपदेशः श्रुतिबोधकः किञ्च बुद्धैः प्रत्यक्षोपदिष्टः न तु आनुश्रविकाणां परम्परायानुश्रुतनिगमार्थ इति। तस्मात् प्रत्यक्षस्य विवरणं सर्वत्रैव वर्तत एव।

## ध्यानम्

सकलमेव बुद्धोपदेशामृतं मानवमनसो ज्ञानस्य एकाग्रताप्रतिष्ठापकम् इति। एतच्च सर्वत्रैव दरीदृश्यते तद्यथा धम्पदेऽपि प्रोक्तम्[4]—

---

1. दुट्ठट्ठकसुत्त - 4।3।7 सु॰नि॰।
2. अरली बुद्धिस्ट थियरी ऑफ नालेज पृ॰ 172 जयतिलके।
3. सुत्तनिपाते-रतनसुत्त-8।
4. अरली बुद्धिस्ट थिअरी ऑफ नालेज पृ॰ 418।

**झाय भिक्खु मा च पमादो, मा ते कामगुणे भमस्सु चित्तं[1] ।**
**मा लोहगुळं गिली पमत्तो, मा कन्दि दुक्खमिदमिति डह्यमानो ॥**

अर्थात् हे भिक्षो! स्वाध्याये प्रमादं मा कुरु, न च खलु कामगुणे चित्तं भ्रमतु। हे प्रमत्त! मा किल लोहगोल गिल, येन दस्यमानो दुःखी सन् आक्रन्देति। अत्र ध्याय इत्यस्य ध्यानं कुरु इत्यर्थः, ध्याने सति मनुष्यः शान्तो जायते, एतदालक्ष्यैव सुत्तनिपातेऽपि उदाहरणमुखेन प्रोक्तम्—

**मज्झे यथा समुद्दस्स, ऊमि नो जायति ठितो होति ।**
**एवं ठितो अनेजस्स, उस्सदं भिक्खु न करेय्य कुहिं चि ॥**

यथा शान्तः समुद्रः ऊर्मिरहितः एकत्रैव स्थिरतां तनुते तथैव चाञ्चल्यरहितः मनुष्यः शान्तो भवति, तस्यैकाग्रता च वर्धते। एकाग्रतायां ध्यानमेकस्मिन् ध्येये सन्निपतितं जायते[2]। आश्रयविमुक्तं खलु ध्यानं केन्द्रितं भवति। एतच्च धनियसुत्ते संभाषमाणेन भगवता प्रोक्तम्[3]—

**चित्तं मम अस्सवं विमुत्तं, दीघरत्तं परिभावितं सुदन्तं ।**
**पापं पन मे न विज्जति, अथ चे पत्थयसि पवस्स देव॥**

अर्थात् आश्रवरहितं मे चित्तं शान्तं विमुक्तं च वर्तते, पापरहितमिदं खलु इदानीमस्ति वर्तिष्यते च। हे देव, यदि वाञ्छसि तर्हि वर्षतु इति।

## शिक्षणम्

भगवता बुद्धेन चत्वारिंशद्वर्षादारभ्य अशीतितमवर्षं यावत् चंक्रमणमाध्यमेन स्वनीतीनां सर्वत्र प्रवचनं व्यधायि। इदं च प्रवचनं सुत्तनिपाते हेमवतसुत्ते हेमवतं यक्षमधिकृत्य प्रोक्तम्[4]—

**किस्मिं लोको समुप्पन्नो, किस्मिं कुब्बति सन्धवं।**
**किस्स लोको उपादाय, किस्मिं लोको विहञ्ञति॥**

इति पृष्टो हेमवतेन बुद्धः प्रतिभाषते—

**छस्सु लोको समुपन्नो, छस्सु कुब्बति सन्थवं।**
**छन्नमेव उपादाय, छस्सु लोको विहञ्ञति[5] ॥**

एवं प्रश्नोत्तरविधिना लोकशिक्षणं प्रदत्तं भगवद्भिः।

1. धम्मपद-25।12।
2. सुत्तनिपात-तुवटकसुत्त-4।14।6।
3. सुत्तनिपात धनियसुत्त 1।2।6।
4. सुत्तनिपात-हेमवतपुत्र 1।9।16।
5. सुत्तनिपात-हेमवतसुत्त - 1।917।

किञ्च कोकालिकसुत्ते कोकालिकमधिकृत्य पापपुण्यविभावं प्रोक्तवता भगवता प्रोक्तं—हे कोकालिक! त्वं सारिपुत्रं मौद्गल्यायनं प्रति अशुभविचारं मा भावय। तौ हि अग्रश्रावकौ सुष्ठ्वाचारविचारवन्तौ स्तः। वारं वारमभिहितेऽपि कोकालिकः भगवतो वचनं न स्वीचकार, ततोऽसौ भगवन्तमपि न्यक्कृत्य गतः, गते च तस्मात् स्थानात् तस्य काये व्रणा अभूवन्, पुनश्च स पद्मनामके नरके उदपद्यत। भगवान् कोकालिकस्य नरकयातनां दृष्ट्वा अन्यान् भिक्षून् प्रति प्रोवाच—

यः निन्दनीयं प्रशंसति, प्रशंसनीयं वा निन्दति, स पापं करोति, तस्मात् हे भिक्षव एवं मा कुरुत। कोकालिकः खलु तथा कुर्वन् पापमधिजगाम[1]। इत्थमध्यात्मजगत उपदेशबलेन पापपुण्ययोः प्रशिक्षणं कृतवान् भगवान् बुद्धः।

कदाचिच्च ऋद्धिबलेनापि शिक्षणमकारि भगवता। तद्यथा कसिभरद्वाजसुत्ते पायसं खलु श्रद्धारहितं जले पातयन् भारद्वाजः जले तस्य चिटचिटायति चिटचिटायतीति शब्दमश्रौषीत्। एतेन खलु भीतः ऋद्धिबलप्रसादात् बुद्धे श्रद्धामुत्पादितवान्। अथ च जातिवादस्य अभिमानतां परित्यक्तुं प्रेरितवान् इति[2]। बुद्धं शरणं च जगाम।

सम्पूर्णमेव पिटकसाहित्यं प्रश्नोत्तरविधिना शिक्षणस्य सुन्दरं निदर्शनं भवति। तथापि सुत्तनिपाते पारायणवग्गे खलु बावरीब्राह्मणतः उपसम्पन्नाः शिष्या अभूवन्। गौतमं प्रति तेषां प्रश्नोत्तरविधिस्तु अपूर्व एव दृश्यते। धोतकमाणवपुच्छायां धोतकः भगवन्तं पृच्छति। हे भगवन्! अहं कथं निर्वाणमधिगमिष्यामि। तत्र भगवान् उवाच— 'नाहं गमिस्सामि पमोचनाय, कथं कथिं धोतककञ्चिलोके। धम्मं च सेट्ठं आजानमानो एवं तुवं ओघमिमं तरेसि[3]'। अर्थात् धर्मबोधबलेन संसारौघं तर्तुमर्हसीति। तस्मादिह ज्ञायते यत् सुत्तनिपाते कदाचित् श्रद्धातिरेकेण, कदाचित् ऋद्धिबलेन, कदाचित् संसारोपदेशबलेन शिक्षणकर्म कृतवान् भगवान् बुद्धः।

## व्यवहारः पुनर्जन्मवादः परलोकवादश्च

भगवान् बुद्धः उपायकौशल्यस्य ज्ञाता कथ्यते। तर्हि उपायकौशल्येनासौ जनानां नानाक्लेशसमन्वितानां यथा शिक्षणस्यावश्यकता भवति तथा विधाय समुद्धारयति। तद्यथा प्रोक्तम्—

**"धोनस्स हि नत्थि कुहिञ्चि लोके, पकप्पिता दिट्ठि भवाभवेसु[4]**
**मायञ्च मानञ्च पहाय धोनो, स केन गच्छेय्य अनूपयो सो"**

---

1. सुत्तनिपात-कोकालिकसुत-3।10।
2. कसिभारद्वाजसुत्त 1।4।
3. धोतकमाणवपुच्छा 5।6।4।
4. दुट्ठट्ठकसुत्त सु॰नि॰ 4।3।7।

अर्थात् यो हि खलु शुद्धः तस्य काचिदपि कल्पिता दृष्टिर्नावलोक्यते। स खलु सर्वं मायाभिमानं च परित्यज्य अनासक्तः विवादरहितो भवति। एतादृशं जनं तारयति भगवान् बुद्धः। किञ्च एतादृशोऽपि जनः अध्याशयानुरोधी एव भवेत्। तस्मादेवोक्तम्—

**नोदारधर्मपात्रं च हीने धर्मे नियोजयेत् ।**
**न चाचारं परित्यज्य सूत्रमन्त्रैः प्रलोभयेत्[1] ॥**

अर्थात् गम्भीरोदारधर्मभाजनं पात्रं ज्ञात्वा निमित्तज्ञैः न श्रावकयानादिधर्मेष्वतारयेत्। इत्थं पञ्जिकाविवरणेनापि उपायकौशल्यस्य, दृष्टिविशुद्धेश्चापि भवति बोधः। तस्मात् बुद्धः व्यवहारपरायणः लोकज्ञानाभिभावकश्चेति सिध्यति।

सुत्तनिपाते खलु पुनर्जन्मविषयकविवरणानां वर्तते उल्लेखः। तत्र आळवकसुत्ते आळवकेन यक्षेण पृष्टः— भो भगवन्! कथं खलु मनुष्यः एतस्मात् लोकात् प्रेत्य पुनः न शोचति। एतस्योत्तरं भगवान् प्रोवाच—

**यस्सेते चतुरो धम्मा सद्धस्स घरमेसिनो ।**
**सच्चं धम्मं धिति चागो स वे पेच्च न सोचति[2] ॥**

अर्थात् यस्य खलु जनस्य चत्वारः धर्माः सत्यं, धर्मः, धृतिः, त्यागश्च स्वभावभूता भवन्ति। स खलु प्रेत्य न शोचति। अर्थात् शान्तिमधिगच्छति।

एवमेव धम्मपदेऽपि धार्मिकस्य खलु जनस्य पुनर्जन्मावबोधः कथ्यते तद्यथा—

**धम्मं चरे सुचरितं, न तं दुच्चरितं चरे।**
**धम्मचारी सुखं सेति, अस्मि लोके परम्हि च[3]॥**

अर्थात् सुचरितं धर्मं खलु आचरेत्, न च दुश्चरितं धर्ममनुचरेदिति। यः धर्मचारी भवति, स खलु सुखपूर्वकं शेते, तस्य यथा अत्र लोके स्थितिर्भवति तथा परत्रापि। इत्थममूषां प्रवृत्तीनामुपयोगद्वारा जन्ममरणावरोधः संभाव्यत इति तदुक्तं भगवता सुत्तनिपाते—

**सब्बसो नामरूपस्मिं, यस्स नत्थि ममायितं**
**असता न च सोचति, स वे लोके न जीयति ॥**
**यस्स नत्थि इदं मे'ति, परेसं वापि किञ्चनं**
**ममत्तं सो असंविन्दं, नत्थि मे'ति न सोचति[4] ॥**

---

1. बोधिचर्यावतार - पृ० 73, 5।90।
2. सुत्तनिपात 1।10।8।
3. धम्मपद - 13।3।
4. सुत्तनिपात अत्तदण्डसुत 4।15।16,17।

इत्थं यः खलु नामरूपेषु न ममत्वं ख्यापयति, न च तस्य अभावबोधे खलु शोचति, तस्य जन्ममरणं च न भवति। यस्य च अयं मम, अयं परश्चेति विषयाकारता बोधः नास्ति, स न शोचति स विमुच्यते। इत्थं सुत्तनिपाते पुनर्जन्मवादः परलोकवादः व्यवहारवादश्च उपलभ्यते। चित्तानां उपशमनोपायश्चाप्यत्र प्राप्यते।

## ३–रिपब्लिकस्य चित्तमीमांसा

मनसः स्वरूपनिरूपणं खलु पाश्चात्यजगति मनोविज्ञानाख्ये शास्त्रे क्रियते। एतस्मिन्नेव प्रसंगे प्राक्कालिकग्रीकजनानां मानसिकविश्लेषणमत्र अन्य संस्कारसाम्येन सह विधीयते। मनोविवेचनं खलु यूनानदेशे प्रतीच्येषु प्रारभत इति को न जानाति, तत्रापि सुकरातः एव पाश्चात्यचित्तविचारस्य प्रवर्तक आचार्यः स्वीक्रियते। तस्य विचारः संवादरूपेण प्लेटोमहाशयेन अलेखि। सुकरातेन परमात्मनः नित्यात्मको वा सत्ता परलोकस्य च सत्ता ख्यापिता। तत्काले इन्द्रियाणि एव ज्ञानग्राहकाणि खलु मन्यन्ते स्म। आत्मा स्वतन्त्रः ज्ञानस्य नियोजकश्चानमुन्यते स्म। यूनानदेशस्य आत्मवादसमुत्थानसमकालमेव मनोविज्ञानचित्तस्य विश्लेषणं प्रारभत।

मनः किमिति विश्लेषणप्रसंगे प्लेटोमहोदयस्य सन्दर्भमाश्रित्य 'इन्साइक्लोपिडिया आफ फिलासफी' इत्याख्ये ग्रन्थे प्रोक्तम्—

> It was Plato who was the first to make a sharp distinction between the mind and the body, holding that mind could not exist both before and after its residence in body and could rule body during that residence[1].

अर्थात् प्लेटोमहाशय एव प्रथमो दार्शनिकोऽभवत् यः खलु मनःशरीरयोर्मध्ये भेदं कृतवान्। मनस्तु शरीरस्य क्षयानन्तरं पूर्वं वा नैव स्थातुं शक्नोति अतो मनः तदानीं यावदेव स्थास्यति यावत् शरीरे स शास्ति। इत्थं भौतिकवस्तुतो मनसः स्वरूपं पृथगेवेति अनुमीयते।

मनसः पृथगात्मा अस्ति नवेति प्रश्ने बहुधा विचारितं प्लेटोमहाशयेन। भारतीयदर्शने यथा मनसो विवेचनम् इन्द्रियत्वेन सुस्पष्टमुपलभ्यते तथा प्लेटोदर्शने सुस्पष्टतया न दृश्यते तथापि विवेचनेन इदमुपलक्ष्यते यत् मनः जीवात्मनः स्वरूपमपि संभवत् ज्ञाने किञ्चिदितरमिव प्रतिभाति। यथोक्तं फीड्सनामके संवादे—

> All soul is immortal for she is the source of all motion both in herself and in others. Her form may be described in a figure as a composite nature made up of a charioteer and a pair of winged steeds. The steeds of the gods are immortal, but ours are one mortal and the other immortal. The immortal soul soars upwards into the heavens, but the mortal draps her plums and settles upon the earth[2].

---

1. इन्साइम्लोपीडिया ऑफ फिलासफी पृ० 336, भाग-5।
2. फीड्स - 246।

किञ्च सर्वोऽपि आत्मा अमर एव तस्य स्वात्मनि परस्मिन् च गतिः आत्मोद्धारायैव क्रियते। अस्यात्मनो रथे द्वौ प्रकारकौ अश्वौ संयुक्तो भवतः, तत्र एकः अश्वः अरा इव आत्मना संयुज्यते, अपरश्च मूर्तः सन् न तथा संयुज्यते। देवतानां अश्वौ तु अपरत्वयुक्तौ एव भवतः न त्वस्माकम्। इत्थं ज्ञायते यत् आत्मनः चैतन्यं अमर्त्यत्वं च स्वीकृतं प्लेटोमहाशयेन किन्तु मनसामपि अश्वत्वरूपेण चैतन्यं निर्धारितमेव, तच्चास्माभिः 'इन-साइक्लोपीडिया आफ फिलासफी' नामके उद्धृतवचनेन स्वीकर्तुं शक्यत एव। आत्मनोऽमरत्वप्रसङ्गे रिपब्लिकेऽपि तेन उक्तम्—

That our soul is immortal and never perishes[1]

इत्थमात्ममनसोरमर्त्यत्वं स्वीकृत्य चैतन्यं च तयोः विभाव्य बौद्धानामेकत्वबोधकपदं चित्तं मनोऽथ विज्ञानमेकार्थमिवेहापि स्वीकर्तुं शक्यते। यद्यपि प्लेटोमहाशयेन आत्ममनसोः पार्थक्यं सम्यक् नोपवर्णितम् तथापि अरस्तुना तु 'आन द सोल' नामके ग्रन्थे मनसः पार्थक्यमुक्तवता कथितम्— 'The mind is that part of the soul by which the soul knows the things[2]' तस्मात् आत्मनो भागत्वेन मनस ऐक्यमपि भवत् कार्यत्वेन पार्थक्यमिति समागतम्।

प्लेटोमहाशयेन तु मनोविश्लेषणप्रसंगे आत्मनः क्रियायाः स्वरूपमुद्घाटितम्। तत्र पोषणम् अनुभूतिः तदनुरूपा च बुद्धिपूर्विका क्रियेति त्रिविधा खलु आत्मनः क्रियाः समुद्घाटिताः। तत्र पोषणक्रिया केवलं स्थावरेषु विद्यते किन्तु अनुभूतिपूर्विका क्रिया तत्र नास्ति। पशुषु पोषणमनुभूतिश्चेति द्विविधा क्रिया उपलभ्यते, किन्तु बुद्धिपूर्विका क्रिया तत्रापि नास्ति। मानवेषु च त्रिविधापि क्रिया दृश्यत इति। मानवाः सर्वेषां प्राणिनां श्रेष्ठतमाः। ततः पशवः मानवापेक्षया अवराः, स्थावराश्च प्राणिनामपेक्षया अधमा इति वक्तुं शक्यते। तदुक्तं यथा—

**पोषणमनुभूतिश्च क्रिया च बुद्धिपूर्विका ।**<br>
**प्लेटोनाम्नास्य शिष्येण जीववृत्तिस्त्रिधा कृता ॥**

**पोषणं स्थावरेष्वेकं सानुभूतिःपशौ द्वयम् ।**<br>
**बुद्धिपूर्वा क्रिया चेति मानवेषु त्रयं ततः ॥**

**अतएव त्रिभिर्युक्ता मानवा उत्तमाः स्मृताः ।**<br>
**मध्यमाः पशवश्चैव स्थावराश्चाधमा मताः[3] ॥**

रिपब्लिकाख्ये ग्रन्थेऽपि आत्ममनसोर्विश्लेषणं कृतम्। तत्र मनोवैज्ञानिकविश्लेषणतः नैतिकविश्लेषणमेव प्रधानमिति विद्वांसः समुद्गिरन्ति। यद्यपि विवेचने मानसिकवृत्तीनां व्याख्यानं भवत्येव तथापि तत्र प्लेटोकृतमानसिकवृत्तयः किं मनसो भवन्ति आहोस्विदात्मनि

1. रिपब्लिक - 608 डी०।
2. आन द सोल (डी एनीमा) पृ. 151 मास्टर पीसेज् आफ द वर्ड फिलासफी।
3. मनोविज्ञानमीमांसा-आचार्य विश्वेश्वर पृ० 270।

इति नैव सुस्पष्टतया विचिन्त्यते। यथा पूर्वमाचार्यविश्वेश्वरकृतमीमांसायामस्माभिः आत्मनो गुणत्रयस्य विवेचनमुपलब्धम्, तथैव रिपब्लिकेऽपि त्रयो गुणाः वर्णिताः। तद्यथा रिजन्, एपेटाइट एण्ड स्पिरिट् इति। त्रयो गुणाः आत्मना संयुक्ता अपि शरीरस्य विभिन्नेषु अङ्गेषु अभिष्वङ्गा भवन्ति। टाइमसनामके विवरणे बुद्धिः मस्तिष्के अनुवृत्ता कथ्यते, चैतन्यं वक्षस्थले हृदये वा, बुभुक्षा तु उदरे इति। बटलरमहाशयस्तु एतेषां गुणानामाख्यानं नैतिकमिति मत्वा विवेचयति[1]। स्पिरिट्रूपेण यो हि तृतीयो गुणः प्रतिपादितः तस्मिन् खलु इन डिगनेशन, कैरेज, डिटरमिनेशन प्रभृतयो अन्येऽपि गुणा गृह्यन्ते। तत्र विवेकः खलु तर्केण उद्भाव्यते, अन्ये च एपिटाइट इत्यस्य प्रेम, क्षुधा, तृष्णा इति विवेचनं कुर्वन्ति। तृतीयाऽपि भावना हृदय इति वा रूपेण व्यज्यते। इत्थं त्रयाणामेतेषां विवेचनं भवति रिपब्लिके। तद्यथा[2]—

Then we shall not be without justification if we recognize these two elements as istinct. we can call the reflective element in the mind the reason, and the element with which it feels hunger and thirst, and agitations of sex and other desires, the element of irrational appetite—an element closely connected with satisfaction and pleasure.

Well we have defined two elements in the mind, then I said. Now is indignation, and the part in which we feel it, a third element, or is it of the same nature as one of the two we have defined.

भारतीयदर्शनवदात्मनो अमर्त्यत्वं परलोकगामित्वं चोद्भावयता प्लेटोमहाशयेन रिपब्लिकस्यान्तिमे अध्याये प्रोक्तम्— यद्यपि आत्मनि दोषाः समुद्भाविता लक्ष्यन्ते, तथापि तत्र दोषाः नैवायान्तीति सत्यम्। यथा शरीरे दोषा उद्भवन्ति तथा शरीरस्य नाशं कुर्वन्ति, दोषाधारेणाधारितशरीरस्य स्वं दोषभावमिवानुकुर्वतः तथैव आत्मापि यदि स्वस्मिन् कस्यचिद्दोषेण स्वयं न आवृत्तः, आवृत्तश्च मन्यमानः स्यात्तदा न कदापि दोषैरलंकृतो भवेत्। तस्मादेवोक्तम्[3] —

Then if there is no evil that can distroy it, either its own or anothers, it must exist for ever, that is to say, it must be immortal.

आत्मनो विवेचनमिदं प्रतिभासं जनयति यदिदं भारतीयपरम्परायामुद्भूतं वस्तु वर्तते। वस्तुतस्तु प्लेटोमहाशयानामाध्यात्मिकविवेचनप्रकारेण भारतीयदर्शनस्य साम्यमनुक्रियते। क्षेत्रभेदे सत्यपि मन्ये अत्र साम्यं विचारजातस्य एकीभूय एवोपलक्ष्यते।

**स्वभावः**

रिपब्लिके स्वभावमधिकृत्य बहुधा विचारा अभिव्यक्ताः सन्ति। येषां भिन्ना भिन्नाः प्रवृत्तयः सन्ति तेषां पृथगेव अध्यवसायाः व्यवसायाश्च भवेयुरिति चिन्तितं तत्र। भिन्नस्वभावानां सदृशो व्यवसायो माभूदिति प्रश्ने प्लेटो ब्रूते—

---

1. प्लेटो रिपब्लिक ट्रा॰ बाई डेजण्ड ली हिज नोट्स पेज 208।
2. रिपब्लिक - 439 डी॰।
3. रिपब्लिक - 611 ए।

We admit that different natures ought to have different kind of occupation and that men and women have different natures, and yet we go on to maintain that these admittedly different natures ought to follow the same occupation. That is the charge we have to meet[1].

अत्र स्त्रीपुरुषयोः स्वभावभेदं प्रस्थाप्य प्लेटो अन्ते उभयोरैक्यमपि प्रस्थापितवान् तथा च उक्तवान् सर्वोऽपि व्यवसायः खलु पुरुषाणां नारीभ्यः वक्तुं शक्यते, तत्र स्त्रीषु शक्तिमान्द्यात् किञ्चिन्न्यूनत्वं स्यादिति[2]।

बालकानां सदाचारव्यवस्थापनकाले तु स तेषां स्वभावानुसारशिक्षणे मतिं न ददाति। तत्र तु स बालकानामनुशासने कठोरव्यवहारस्य पक्षपाती आस्ते। उक्तम् तत्रैव—

The amusements in which our children take part must be better regulated, because once they and the children become disorderely, it becomes impossible to produce serious citizens with a respect for order[3].

इत्थं स्वभावे वैशिष्ट्यमादधानोऽपि प्लेटो राज्ये अनुशासनस्य महत्त्वं प्रतिपादयति। तस्मादिदं कल्प्यते यदयं न तथा मनोवैज्ञानिकविधीनां पक्षपाती आसीत् यथा इदानीं प्रत्येकं क्षेत्रे अस्योपयोगः विधीयते।

राज्यस्य कार्यप्रतिपादनकाले तु शक्तिसंवर्धकानां मनोवैज्ञानिकाचरणानां सदैव साहाय्यमादधाति। तद्यथा ब्रूते यदि कस्मिंश्चिद् युद्धे कश्चित् सैनिकः स्ववीर्येण शत्रून् प्रबाधयति तदासौ स्वमित्रेषु सैन्येषु च आदरं प्राप्नोति। सर्वाणि मित्राणि तं मुकुटेन विभूषयन्ति। यदि अयं खलु साहसी वीरः सैनिकः शौर्यबलापगते सति यदि काञ्चन स्त्रीं चुम्बितुमिच्छति तर्हि सा एतादृग्भूतस्य सैनिकस्य इच्छां पूरयतु इति। एतादृशस्य पुरुषस्य सन्ततयोऽपि बलशालिन्यो भविष्यन्तीति। तद्यथा—

And what is more I should add to your law a clause that would forbid anyone to refuse his kisses for the rest of the compaign as an encouragement to those in love with a boy or a girl to be all the keener to win an award for bravery[4].

किन्तु समाजस्य व्यवस्थायै मनोवैज्ञानिकदृष्ट्या परिपूतानां भावनासंनिःसृतानामपि कर्मणां स प्रतिरोधं भावयति। तथाभूतकर्मणां वर्णनं यदि काव्येषु उपलभ्यते तर्हि महाकाव्येभ्यः तं निस्सारयितुं प्रेरयति। ओदिस्से ग्रन्थे स कामातुरस्य जैउसस्य तां विजुगुप्सापरिणतां हेरां प्रति समागतप्रवाहस्य निन्दां भावयति, यदा असौ सर्वां लोकलज्जामविगणय्य भवनाद्

1. रिपब्लिक 453 ई०।
2. तत्रैव 455 ई०।
3. रिपब्लिक 424 ई०।
4. रिपब्लिक 468 सी०।

बाह्ये एव तां परिकृष्य हर्षोन्मत्तेन संभुङ्क्ते स्म[1]। यद्यप्यत्र स्वभावभूतस्य कामरागस्य वर्णनमास्ते तथापि ज्ञानेन एतस्य प्रतीकारो विधीयते। न केवलमेतदेव राज्यव्यवस्थायां तु स्वभाववर्णनपूर्वकं त्रयाणां संरक्षक-सैनिक-श्रमिकाणां चित्रणं कृतं तत्र। यतो हि संयम-साहस-ज्ञानगुणाधीनाः पूर्वोक्ताः वर्गविचाराः, तस्मात् प्रत्येकं खलु स्वव्यवसायमेव कुर्यात्[2]। यश्च स्वव्यवसायं परित्यज्य अन्यस्य व्यवसायमापद्यते स खलु राष्ट्रात्, स्वकर्मतः, स्ववर्गाच्च च्यवते। तदुक्तम्—

Interference by the three classes with each others jobs, and interchange of Jobs between them, therefore, does the greatest harm to our state, and we are entirely justified in calling it the worst of evils[3].

प्रेम्णः स्वरूपमुद्भाव्याप्यसौ प्रोक्तवान्—यः यस्मिन् यस्यां वा स्निह्यति, स तां तं वा उपकरोति, तस्मात् संरक्षकाः एवं भवेयुः। यस्य खलु स्वपरिवाराः न स्युः किन्तु तेषां परिवाराभावेऽपि मानसिकशारीरिकसंतुष्ट्योः साधनभूताः स्त्रियः सदैव तेषां कृते उपलभेरन्निति। यद्येवं न स्यात्तर्हि संरक्षकैरेव विभेदः कल्पितो भवेत्। इत्थं राज्यस्य सर्वेषां जनानां हिताय प्रयतमानस्य प्लेटोमहाशयस्य राज्यादर्शस्वरूपमेव न स्थापितं भवेत्। एतदुक्तं यथा—

For that shall not we need men who besides being intelligent and capable, really care for the community?

True

But we care most for what we love[4].

इत्थं स्वभाववादः उपस्थापितस्तत्र रिपब्लिके।

## भ्रमविश्लेषणम्

स्वभावविवेचनपुरस्सरमिह भ्रमनिरूपणं क्रियते। भ्रमः खलु उपनिषत्सु अपि विवेचितः। इहापि रिपब्लिके भ्रमस्य विवेचनमुपलभ्यते। दशमकाण्डस्य मतज्ञानयोः विवेचनप्रसङ्गे अविपरीतज्ञानस्य माहात्म्यं प्रदर्शयता प्लेटोमहाशयेन वस्तूनां याथार्थ्यबोधाय कविवृत्तीनां विश्वासे संदेहः प्रकटितः। कवीनां कथनं काल्पनिकम् अतथ्यात्मकं च भवति। काल्पनिकसत्यस्य यथार्थसत्येन तथा अन्तरमुपलक्ष्यते यथा ऋजुः दण्डः नीरे कुटिलो दृश्यते। इत्थं मनोवैज्ञानिकमेतद् वक्रत्वं कदाचित् विवेकिनां विवेकमपि अपसारयति। तद्यथा—

---

1. रिपब्लिक 390 सी०।
2. रिपब्लिक 433 ए०।
3. रिपब्लिक - 434 सी०।
4. रिपब्लिक - 412 सी एवं डी।

'So also a stick will look bent if you put it in the water, straight when you take it out, and deceptive differences of shading can make the same surface seem to the eye concave or convex, and our minds are clearly liable to all sorts of confusions of this kind, It is this natural weakness of ours that the scene-painter and conjurer and their fellows exploit with magical effect[1].'

एवमेव रिपब्लिकस्य द्वितीयकाण्डे मायामुद्रिकाख्यानेन ज्ञायते यत् सत्यस्य पन्थानं कश्चिदपि लौहभावेन न सदा परिपालयति। यतो हि प्राप्तमुद्रिकाः खलु गोपालकः यदा राजानमुपर्सपति तदा तस्याः मुद्रिकायाः मायावशात् स राजानमात्माभिमुखीकरोति। सर्वे बालकाः तथा कर्तुं न समर्था अभूवन्, यतो हि तेषां पार्श्वे मायामुद्रिका नोपलब्धा आसीत्। मुद्रिकायाः प्रभावेण गीजेसः अन्तःपुरमुपगम्य तत्र सम्राज्ञीं परिभ्रंश्य राजानं च हत्वा राज्यमधिकृतवान्। एवं मायाप्रभावात् न्यायान्याययोः सम्यग्बोधो न जायते। न च कश्चित् न्यायी खलु न्यायाधिगतये एवं सुदृढो अवतिष्ठते मायायाः चाकचिक्यबलात्।

Imagine now that two such rings existed and the just man put on one, the unjust the other. There is no one, it would commonly be supposed, who would have such iron strength of will as to stick to what is right and keep his hands from taking other people's property. For he would be able to steal from the market whatever he wanted without fear of detection, to go into any man's house and seduce anyone he liked..... he had supernatural powers[2].

इत्थं भ्रमः तत्र निरूपितः।

## अनुभूतिः

एषा खलु माया तदैव अपसृता स्याद् यदा सत्यबोधः संजायेत। शरीरे यथा रोगः स्वास्थ्यं च प्रवर्तेते तथैव आत्मनि सत्यासत्ये अनुभूयेते। ज्ञानस्य तदैव भवेत् सञ्चारः, यदा सर्वा आवृता माया आत्मतोऽपवार्येत। एतदर्थमपि रिपब्लिके तथैव बहुधा विश्लेषितं यथा उपनिषत्सु वर्तते। रिपब्लिके उक्तम्—

न्यायस्य स्वरूपे आत्मनो हि स्वरूपं प्रमाणीक्रियते। न्यायी मानवः खलु तदेव करोति यत् स न्यायं मनुते। तस्य पार्श्वे गीजेसमहाशयस्य मायामुद्रिका भवेन्न वा भवेत् हादेसस्य शिरस्त्राणं स्यान्न वा स्यात्[3], किन्तु मायामपवार्यैव कर्म कुर्यादिति।

We have found that justice is itself the best thing for our true self and that we should act justly whether or not we have Gyges ring, and a cap of invisibility into the bargain.

---

1. रिपब्लिक - 602 डी०।
2. रिपब्लिक - 360 बी०।
3. रिपब्लिक - 612 बी०।

राज्यस्य सुखं शान्तिश्च खलु सर्वेषां वर्गाणां स्वकार्यानुष्ठाने एव भवतः, अतः सर्वैः खलु स्वकार्ये ध्यानं देयमिति। स्वकार्यानुष्ठाने निष्णातो हि राजा व्यक्तिः वा सर्वं खलु अनुभवति। यथा कस्यचित् अंगुलेः व्रणानुभवं यदा आत्मा अनुभवति तदा शरीरस्थः आत्मा खलु तेन व्रणेन दुःखितः प्रतिभाति, पुनश्च व्रणापनयनाय उपायं करोति। तथैव यदा समाजस्य सर्वे जनाः स्वस्वकर्तव्यपालनं विधास्यन्ति तदा समाजः स्वस्थो भवेत्। किन्तु यदि एकस्मिन्नपि अंगे काचित् क्षतिः, विकलाङ्गता वा भवेत्तर्हि सकलेऽपि समाजे रोगापात इव दार्शनिको राजा दुःखमनुभवति[1]। इयं खल्वनुभूतिः आध्यात्मिकीति कथ्यते।

अनुभूतिषु काश्चन प्रत्यक्षभूता अपि भवन्ति। यथा प्लेटोमहाशयेन स्वगुरोः विषपानं प्रत्यक्षमेवावलोकितम्। एतादृशस्य खलु दृश्यजातस्य विषादेन खिन्नोऽसौ राजनीतौ अवतर्तुं नैव कदाचित् विचारयामास। कुटिला खल्वियं राजनीतिः कथं समाजात् बहिष्कृताः स्यादेतदर्थम् अकादमीं संस्थाप्य स्वसिद्धान्तांश्च निर्मायाऽसौ यावज्जीवं तेषां मूर्तीकरणाय प्रायतत।

Hermodorus, an original member of Plato's Academy, stated that for the moment the friends of Socrates felt themselves in danger just after his death, and that Plato in particular, with others, withdrew for a while to neighbouring city of Megara under the protection of Euclides of that city, a philosopher who was among the foreign friends. Present at the death of Socrates and combined the tenets with the Eleaticism of Parmenides[2].

अत्राध्यात्मिकप्रत्यक्षानुभूत्योः यत् खलु स्वरूपमुपलब्धं तन्निश्चितमेव प्लेटोसदृशानां जनानां मनसः सारल्यस्य बोधकमिति।

किं श्रेयः? किं च प्रेय? इत्यस्यापि विवेचनेन कठोपनिषदः श्रेयस्त्वं प्रेयस्त्वञ्चानुमीयते यथा—

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।**
**श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते[3]॥**

एतयोराध्यात्मिकप्रत्यक्षात्मकानुभूत्योर्मध्ये यथा उपनिषत्सु वर्तते विभेदः तथैव रिपब्लिकेऽपि तद्यथा[4]—

And you know of course that most ordinary people think that pleasure is the good, while the more sophisticated think it is knowledge.

---

1. रिपब्लिक - 462 डी॰।
2. इन्ट्रोडक्सन पृ॰ 4 - प्लेटो द मैन एण्ड ह्विज वर्क-टेलर।
3. कठोपनिषद् 1।2।2।
4. रिपब्लिक - 505 बी॰।

अत्र लौकिकसुखस्य श्रेयस्त्वकल्पने आध्यात्मिकभावस्य याथार्थ्यं न स्यादिति धिया, अथ च विवेचनेन भौतिकस्य सुखस्य विनाशशालित्वादाध्यात्मिकमेव परमिति मत्वा तस्यैव श्रेयस्त्वानुपपत्तिरिति विभावयति प्लेटो। श्रेयस्त्वप्रेयस्त्वयोः विवेचने मनोवैज्ञानिकाध्यात्मिक-योरत्रैव समवयोगः संदृश्यते यतोहि स्वाभाविक्याः खलु प्रवृत्तयः मनोविकारात्मिकाः भवन्ति। ज्ञानान्वेषणबलेनोहमाना आदर्शानुमूलिकाः तु भवन्ति आध्यात्मिक्यः दार्शनिक्यो वा प्रवृत्तयः। इत्थमत्र विश्लेषणेन तयोर्मध्ये यथा भेदः आपतति तथैव प्लेटोमहाशयेन आदर्शानुसंधायकेन सप्रयत्नं योगोऽनुष्ठित इति।

## ध्यानम्

ध्यानं खलु विविच्यते संगीताध्ययने गणिताध्ययने च। प्लेटो अकादम्यां यः खलु शिक्षार्थं समायाति स संगीतं गणितञ्च अवश्यमेव पठेत्। संगीते शब्दरागालयादीनां ज्ञाने ऐकान्ततः ध्यानसमन्वितो भवति, मानवस्य लयः रागश्च आत्मानमन्तर्वर्तिस्थाने नयतः। तत्र गत्वा तौ आत्मना सह तथा सम्बद्धौ भवतः, यथा पुत्रः भये आपतिते मातुरङ्के निलीयते। एतौ खलु रागलयौ आत्मनः स्वरूपमभिव्यंजयतः तस्य स्वरूपमभिरामं मन्वाते। इत्थं संगीतशिक्षया प्रेमभावो विकसति। उक्तञ्च[1]—

For rhythm and harmony penetrate deeply into the mind and take a most powerful hold on it, and, if education is good; bring an impart grace and beauty, if it is bad, the reverse.

इन्द्रियाणां वस्तूपगमेऽपि यदि कश्चन तानि तत्र न नयति, तर्हि ज्ञानं न भवेत्। अयं खलु कश्चित् बोधकः कथ्यते। इयमेव ज्ञानप्रक्रियाया विधायिका प्रकृतिरिति। तदुक्तं यथा[2]—

'If the eyes have the power of sight, and its possessor tries to use this power, and if objects have colour, yet you know that he will see nothing and the colours will remain invisible unless a third element is present which is specifically and naturally adapted for the purpose.

इत्थं ध्यानस्य बहुषु स्थलेषु रिपब्लिकेऽपि वर्णनमुपलभ्यते। इदमतिप्राचीनकालिक-माख्यानं खलु मनोवैज्ञानिकपद्धतेः ध्यानबोधस्य गतिबोधकमिति वक्तुं शक्यत एव।

## शिक्षणम्

बुद्धेन भगवता शिक्षणक्रमे यथा कथोपकथनशैली गृहीता तथैव सुकरातेन महात्मनापि स्वीकृता इति जानन्त्येव। प्लेटो तस्य अन्यतमः शिष्य आसीत्। यः खलु स्वगुरोः दुःखेन

---

1. रिपब्लिक - 401 ई०।
2. रिपब्लिक - 507 ई०।

अतीवदुःखितोऽभूत्। स शिक्षणस्य आपणे जायमानानां कथोपकथनशैलीनां स्वरूपमुन्मुच्य अकादम्यां तया एव शैल्या जनान् शिक्षयामास। तस्य सर्वोऽपि परिसंवादः कथनोपकथनरूप एव आस्ते। तत्र सुकरात एव वक्ता अन्यश्च प्रश्नकर्ता भवति। नास्ति कुत्रापि किञ्चित्, यत्र प्लेटो सुकरातमुखेन तन्नोत्तरयेत्। इत्थं सुकरातस्य कथनोपकथनशैलीरूपा शिक्षणरीतिः वर्तत एव। कथनोपकथनयोः केचन प्रक्षिप्ताः अंशाः अन्यदार्शनिकानां समन्वयं लभन्ते। तत्र प्लेटोमहाशयस्य वैशिष्ट्यं लक्ष्यते, तेनैव तेषां दर्शनविशेषस्य बोधोऽपि जायते[1]। किञ्च कुत्रचित्तेन स्वशिष्याः मौखिकेनापि विधिना पाठिताः। अतस्ते प्लेटोमहाशयस्य स्वकीयाः विचारा उच्यन्ते। उक्तं यथा[2]—

'Lecturing' would be part of this work, and we know from Aristotle that Plato did actually `lecture' without manuscript at a much later date.

इत्थं कथनोपकथनरूपेण भाषणद्वाराभिशिक्षणं प्रदत्तं तेन इति तु निश्चितमेवाभवत्। राज्यव्यवस्थायाः साधुस्वरूपावबोधाय स अन्तर्दर्शनविधेरपि उपयोगं कृतवान् इति।

## व्यवहारः पुनर्जन्मपरलोकवादश्च

उपनिषदां व्यवहारवादपुनर्जन्मवादप्रसङ्गे एव रिपब्लिकस्य अरनामकस्य पुनर्जन्मप्रयोजिका परलोकप्रयोजिका च कथा उद्धृता। तथापीह किञ्चिन्नूतनत्वेन वर्ण्यते। अन्यस्थलेषु वर्णितः प्लेटोविचाराणामाशयः, तृतीयकाण्डे रिपब्लिके ओडिससृइलिटयोः सन्दर्भमाश्रित्य उल्लिखितम्— भयप्रयुक्तानि खलु काव्यगतप्रेरकवाक्यानि आदर्शसमाजस्य स्थापने अवरोधकानि भवन्ति। तस्मात्तादृशाः प्रसङ्गास्तु दूरीकरणीया एव। एतादृशानां प्रसङ्गानामुद्धरणं रिपब्लिके प्रदत्तम् यथा[3]—

His disembodied soul took wing for the house of Hades, bewailing its lot and the youth and manhood that it left[3].

एतादृशाः सन्दर्भा अनेके उद्धृताः सन्ति तत्र किन्तु एतदुल्लिख्य अन्ते पुनस्तेन भणितम्[4]—

We must ask Homer and the other poets to excuse us if we delet all passages of this kind. It is not that they are bad poetry or are not popular, indeed the better they are as poetry the more unsuitable they are for the ears of children or men who are to be free and fear slavery more than death[4].

---

1. पाश्चात्यदर्शन चन्द्रधरशर्मा - पृ० 23।
2. प्लेटो एण्ड हिज वर्क पृ० 6 इन्ट्रोडक्सन - लाइफ ऑफ प्लेटो बाई टेलर।
3. रिपब्लिक - 386 डी।
4. वही 387 ए।

इत्थं भयोत्पादकदासतानुभावकवाक्यत्वेन परलोकप्रयुक्तानाम् आत्मोत्साहरहितानां सन्दर्भाणां परित्यागः कर्तव्यः इति। अत्र परलोकवर्णनस्यैव प्रसङ्गः समापतितो वर्तते। तस्मादेतेन आयाति यत् प्लेटोकाले परलोकस्य चर्चा आसीदिति।

एवमेव षष्ठकाण्डे थ्रासीमैससुकरातयोः व्याख्यानप्रसङ्गेऽपि परलोकविवरणस्य संदर्भः समापतति यत्र सुकरातः ब्रूते—

यो हि जनः बाल्यावस्थायां युवावस्थायां वा ज्ञानमधिगच्छति तर्हि स तदवस्थानुरूपमेवेदं भावयेत्। यथा यथा वयः प्रवर्धते तस्य बुद्धिः प्रौढा भवति। अतः स लोकहितकारकमथ च मनोरञ्जकं ज्ञानं कुर्यात्। येन तस्य बलं प्रवर्धेत। यदि बलेनासौ क्षीणो भवेत्। तदा तस्मै स्वातन्त्र्यं तथा प्रदातव्यं यथा अन्यशङ्काभिः रहितः सन् इहलोके सुखेन जीवेत्। परत्र च सुखमेव प्राप्नुयादिति।

That is if their life is to be a happy one and their final destiny after death to match their life on earth[1].

अयं परलोकपुनर्जन्मप्रसङ्गको हि क्रमः मनोवैज्ञानिकीं पूर्णतां प्रददाति तदर्थं तर्काश्च प्रदीयन्ते। कृतस्य कर्मणोऽन्यस्मिन् जन्मनि फलं भवति नवेति विषये उक्तवता सुकरातेन भणितम्—

तदेव कर्तव्यं यत्खलु सत्यं भवेत्। चमत्कारेण आहोस्विदन्येन केनापि मायिकशिरस्त्राणेन न कदापि भेतव्यम्। 'ग्लोकान' इत्थमग्रे कर्मणोः गणनां विधाय न्यायगुणस्य इह जन्मनि जन्मान्तरे वा फलं ज्ञातव्यमिति यतो हि तत्र कर्मानुसारं पुरस्कारा देवताभ्यः मानवेभ्यश्च प्राप्यन्ते[2]।

●

1. रिपब्लिक - 498 सी०।
2. रिपब्लिक - 612 ख-ग।

# अथ पञ्चमोऽध्यायः

## व्यावहारिकनीतिमीमांसा

बुद्धप्लेटोमहाशययोर्युग इव वर्तमानयुगोऽप्यास्ते। प्लेटोमहाशयानां काले विज्ञानस्य नासीत् तथाविर्भावः यथा इदानीमस्ति, किन्तु अधुना विज्ञानपद्धतिमवलम्ब्य शिक्ष्यमाणा जनाः सर्वत्र क्षेत्रविशेषे विकासं लभमाना अपि सम्पूर्णमानवस्य हितरक्षायां कातरा इव दृश्यन्ते। अतः अध्ययनस्य विषयविशेषानुवर्तनस्य अरस्तूविनिर्धारिता रीतिरिदानीं तथा न प्रशस्यते, यथा कतिचिद् दिनपूर्वमासीत्। इदानीं तु पुनः विश्वात्मिकां (Global) पूर्णात्मिकां (Holistic) च दृष्टिमाधातुं जनाः प्रेर्यन्ते। भारते तु इयमेवासीत् अध्ययनपद्धतिः। अस्यां खलु अध्ययनसरण्यां समग्रस्य मानवस्य, समग्रस्य राष्ट्रस्य वा आकाशगंगायाः सृष्ट्यनुबन्धिनीं रीतिं विचार्य तत्र जनानां हिताय परिचिन्त्यते स्म। इयं चिन्तनप्रणाली मन्ये तदा उत्कृष्टतामुपलभेत, यदा विभजनात्प्राग्मानवज्ञानस्य स्वरूपमाकलितं भवेत्। अस्यामाकलनवेलायां मम निबन्धस्य ये खलु ग्रन्था उपजीव्याः सन्ति, ते उपतिष्ठन्त्येव। पुनश्च विविधानां संस्कृतीनां ते खलु प्रतिनिधिभूता अपि सन्ति— रिपब्लिकः ग्रीकसंस्कृतेः आधारभूतो ग्रन्थः, उपनिषदः वैदिकसंस्कृतेः, सुत्तनिपातश्च बौद्धसंस्कृतेरिति।

विविधानां विज्ञानानां विकासेन मानवानां हितं सञ्जातमित्यत्र नास्ति लेशमात्रोऽपि संदेहः। किन्तु विकसिताण्वस्त्रभण्डारोऽपि मानवानां नाशाय अलमिति नास्त्यतिरोहितं प्रेक्षावताम्। यथा अणुशक्तिः मानवहितसंवर्धनाय प्रत्येकं क्षेत्रं विस्तारयति तथैव नाशमपि अनवधानतया प्रवर्धयितुं शक्नोति। तस्मात्प्रत्येकं क्षेत्रं समेषां जीवानामाधारेण विकसितं भवेदित्येतदर्थं सामञ्जस्यं भावनीयमिति। एतत्संभावने पूर्णस्य मानवमनसः सम्मेलनं विधातव्यमेव। अस्मिन् प्रसंगे संस्कृतीनां तत्स्थानीयगुणानां सार्वजनीनत्वेन कथं समन्वयः स्यादित्येतदर्थं उपर्युक्तानां विविधप्रवृत्तिबहुलानां संस्कृतीनां एकत्र विश्लेषणेन प्रयत्नो विहितोऽत्र मया। प्रतिदिनं देशे विदेशेष्वपि व्यापकहिंसायाः समागतो हिंसाभावः सावधेनानासावधानेन वा दरीदृश्यते विचार्यते च। द्वितीये विश्वयुद्धे अण्वस्त्रजनितहिंसा मानवविद्वेषमूला, मध्यभारते भोपालनगरे कार्बाडोद्योगस्यानवधानेन निहतजनसंकुलः औद्योगिकवैज्ञानिकतायाः आलस्योपेतः स्वभावः, पर्यावरणप्रदूषणप्रभावेण प्रभावितं प्रतिदिनं जायमानं रोगाकलितं जीवनं खलु विविधसंचार-उद्योगप्रयोगादिफलकमिति के न जानन्ति, तथापि मानवः स्वस्थेन मस्तिष्केण उषितुमीहते। जनतन्त्रसाम्यवादादिराष्ट्रसिद्धान्तेन उपेतमानवमनः स्वस्वराष्ट्रप्रभावस्य विस्तारं

कामयमानः स्वसिद्धान्तानुपेत्य धर्मं सम्प्रदायं वा विषमप्यनुमन्यमानः कदाचित् सर्वजनहिताय प्रचाल्यमानः धर्मभावनायाः प्रद्वेषकः साम्यवादः कस्मिंश्चिद्देशे आश्रयते, कुतश्चित्तु जनाः सम्प्रदायस्थापनाय प्रोत्साहयन्ति च। तथैव जनतन्त्रस्यादिनायकोऽपि सम्प्रदायस्य अतात्त्विकत्वं विभाव्य धर्ममधिकृत्य स्वस्थान् देशान् अस्वस्थान् भावयति। मन्येऽत्र कारणं मानवस्य मनसः प्रभुत्वस्थापनमेवास्ति, तच्च प्रभुत्वं अहंकारजनितं किञ्चित् कालस्थायीति के न जानन्ति, तथापि प्रतिदिनं तथैव अनुतिष्ठते। व्यापकजनहिंसा-द्वेष-अहंकार-प्रकृतीनां संक्षोभप्रयोगस्य कारणं वीक्ष्य यथा शान्तिप्रियाः देशाः एतेषां अपनयनाय संचेष्टन्ते तथैव प्राचीने काले राज्येनाधृतावेशेन सकलपृथ्वीमध्ये अलंकारभूतस्य सुकरातस्य आत्मप्रबोधितस्य वचनं न निशम्य तस्मै राज्यप्रभुत्वस्थापनाय विषमदायि। स्वर्गकामाय कृतायाः वैदिकयज्ञेषु पशुबलिप्रसूतहिंसायाः प्रवारणाय कृतप्रयत्नाः ऋषयो, नगरात् अरण्यस्थाः कृताःब्राह्मणैः। मानवस्वभावजनितदुःखं वीक्ष्य निर्विण्णचित्तो बुद्धः स्वराज्याधिवासं विहाय दुःखस्य नाशाय गृहं तत्याज, तत्प्रतिकारभूतं मार्गञ्चाविष्चकार। अत्र स्वभावदुःखविकासदुःखसंचारदुःखप्रभृतीनां कथं समग्रतया अपवारणं भवेदित्येतदर्थं समग्रविधिना कालं (Time) देशं (Space) ज्ञानम् (Knowledge) सम्बन्धांश्च (1) मानवस्य मानवेन (Relation with man to man) (2) मानवस्य प्रकृत्या (Relation with man to nature) (3) मानवस्यातिमानवेन (Relation with man to tranceman or divine) सह विचार्य किञ्चित्सांस्कृतिकैक्यस्थापनार्थं प्रयत्न आसाद्यते। तदर्थं च दूरस्थितविभिन्नपर्यावरणजनितसंस्कृतिमूलानां ग्रन्थरत्नानां हार्दोद्भावनेन साम्प्रतिकसमस्यानां समाधानं विधातुं आधुनिकया रीत्या प्राचीनानां मूल्यानां किञ्चिद् विस्फोरणमत्र क्रियते। तच्च केचन प्रकाशजनकविचाराः पूर्वसंस्कृतिमनुरुध्य इह प्रस्तूयन्ते येन साम्प्रतिकमानवानां हितं भूयादिति।

इदं प्रायः अनुमन्यते यत् विश्वस्मिन् द्वे प्रकारिके संस्कृती प्राप्येते। एका प्रतीच्या, अन्या च पूर्वा इति। तत्र प्रतीच्यासु मिस्र-ग्रीक-रोमदेशेषु विकसिता संस्कृतयः भवन्ति, प्राच्येषु चीन-तिब्बत-बर्मा-भारतप्रभृतिषु विकसिता संस्कृतयः। भारतस्य च द्वेधा संस्कृतिः अवलोक्यते—एका ब्राह्मणरूपा, अपरा च श्रमणरूपा। तत्र ब्राह्मसंस्कृतौ ते सर्वगुणाः एव प्राप्यन्ते, ये च प्रतीच्यसंस्कृतिषु दृश्यन्ते। तद्यथा— (क) ईश्वरस्य सद्भावः (ख) व्यक्तिगतस्य जीवनस्य अस्तित्वोद्भावनम् (ग) सामान्यस्य च महत्त्वम्। (घ) आत्मनो नित्यत्म् (ङ) तदनन्तरं ईश्वरात्मनोः साम्येननित्यास्तित्वावबोधनमिति[1]। प्राच्येषु च तथैव भवन्ति पञ्चविशेषास्तद्यथा (क) अनीश्वरत्वम् (ख) संघातमात्रकं जीवनम् (ग) क्षणसत्तात्मकम् (घ) अनात्मकम् (ङ) निर्वाणम् च[2]। अत्र भारतीयेषु श्रमणाः समापतन्ति। श्रमणेषु विशेषतः

1. (क) परसनलगाड, (ख) सिंगूलरिस्ट (ग) यूनिर्वसलिस्ट (घ) परसनलसोल (ङ) इटरनल लाइफ इति।
2. (क) नो गाड (ख) प्लूरलिस्ट (ग) पार्टिकुलरिस्ट (घ) नो सोल (ङ) निब्बानं अयं खलु विभागो जोहानगाल्टुंगमहाशयेन यमुनालालबजाजपीससेन्टरइत्यस्य व्याख्याने तथा च स्वरेखाचित्रे प्रस्थापितः।

बौद्धा अत्र समुदीर्यन्ते। संस्कृतीनां विकासक्रमे भारतीया ब्राह्मणधारा बौद्धधारा च कदाचित् स्वराष्ट्रसीमानमतिक्रान्तवत्यौ। तस्मात् तयोः प्रभावः कुत्रचित् प्रकटतया कुत्रचिद् गूढतयावलोक्यते।

पुरा विश्वसंस्कृतीनां लोकेषु प्रभावः दरीदृश्यते, तेषु भारतीययूरोपीये मुख्यतमे आस्ताम्। एतयोः मध्ये यथा समग्रे यूरोपे दृश्यते ईशूमतावलम्बिनां प्रभावः तथैव समग्रे एशियाखण्डे बौद्धानामस्ति प्रभावः। एतयोरन्तरे एव कदाचित् मोहम्मदाः, कदाचिच्च हिन्दवः समागच्छन्ति। परन्तु मुख्यतमेषु खलु बौद्धाः ख्रिस्तीयास्तु भवन्त्येव। एतेषां माहात्म्यमधिस्वीकुर्वता प्रसिद्धेन सांस्कृतिकेनैतिहासिकविचारकेण डा. राधाकमलमुखर्जिना प्रोक्तम्—

भारतीयता ने एशियाई सभ्यता को एक ऐक्य प्रदान किया (ठीक यही काम ईसाई धर्म ने यूरोप में किया था[1])।

भारत में यूरोप से अधिक संख्या में रक्तपातहीन पुनर्जागरण और धर्मसुधार हुए हैं साथ ही जिस प्रकार यूरोप में बर्बर आक्रमणों के कारण पाँचवी शताब्दी के अन्तिम चरण से लेकर ग्यारहवीं शतीके मध्य तक सांस्कृतिक ग्रहण लगा था उस प्रकार भारत में अधिक समय के लिए सांस्कृतिक ग्रहण कभी नहीं लगा[2]।

पुनश्च बुद्धखीस्तविचारयोः यथा साम्यमवलोक्यते, तथा चैतद्विषयं विशाविगे महाशयेन प्रोक्तवतापि परस्परस्यादानं न स्वीकृतवतापि रोमबेरुतमध्ये समापतितगिरिजाघर-मंदिरयोश्च मध्ये साम्यं दृष्टम् तेनापि आकल्यते यत् आसीत् कश्चित् प्रभावः बुद्धानां भगवतां तत्र इति[3]। कथ चेयं संस्कृतिः प्रतीच्यमगमद् इतीदं मेगास्थनीज़ (300 ई॰ पू॰ 299 ई॰पू॰) महाशयानां इण्डिकाख्ये विवरणे श्रमणब्राह्मणप्रयोगेणापि आकल्यते। अशोकेन महता धर्मप्रचारकेण सम्राजा सीरियायामन्तियोगसमहाशयानां शासनकाले मिश्रस्य प्टालेमीमहाराजानां संमुखे, मक्दूनियायां अन्तिगोनसमहाशयानामधिशासने, साइरीनप्रदेशे मेक्समहाराजानामन्तिके, एजिरसदेशे च एलेक्जेण्डरमहाशयानां सविधे स्वदूता धर्मप्रचारार्थं प्रेषिताः[4]। ततः तत्रोद्भूतधर्मदर्शनेषु प्रभावः स्वाभाविक एव।

किञ्च सुविख्यातचीनीयात्रीमार्कोपोलोमहाशयोऽपि लिखति भारतस्य राज्ञोऽविन्नेरस्य पुत्रः योसफट एव ख्रिस्तीयमते सन्तवर्लामतः दीक्षां गृहीतवान्। वर्लामः साक्षात् भगवान् मन्यते, युवासफश्च बोधिसत्त्वः। भाषाविज्ञानद्वाराविनिर्धारितरूपेण बोधिसत्त्वस्य अरबीरूपं

---

1. भारत की सभ्यता तथा संस्कृति पृ॰ 27 राधाकमलमुखर्जी।
2. भारत की सभ्यता तथा संस्कृति पृ॰ 27 राधकमलमुखर्जी।
3. बुद्ध एण्ड कार्लमार्क्स डॉ॰ अम्बेडकर।
4. पश्चिमदेशेषु बौद्धधर्मस्य प्रसारः अनुसन्धानकार्यश्च-गांडीवम् प्रगति-विशेषांकः - 1 राधेश्यामधर द्विवेदी।

बुदासफो भवति ततो युवासफ इत्यपि जायते। एतच्चाख्यानं इह विंशतिशताब्द्यां सुस्पष्टम-भवदिति[1]।

किञ्चान्यदपि मोक्षमूलराख्येन विदुषा भणितम्-ग्रीकेषु रहस्यवादिप्रवृत्तीनां कथमागमनम-भूदिति महदाश्चर्यकरम्[2]। जेलरमहाशयेनापि अभाणि— मोक्षः, ईश्वरः, आत्मा प्रभृतयः उपनिषत्सु उपलभ्यन्ते, तर्हि एते विचाराः तत आगता इति[3]।

इत्थं पूर्वकल्पितप्रतीच्यप्राच्यगुणानामाकलनस्य विशेषतः विवेचनं भारतादेव प्रारभत इत्यपि अनुमातुं शक्यते। भारतीया संस्कृतिः खलु शान्तिप्रदायिनी, न चाक्रामिका, तस्मादेव इयं यथा चीनदेशे जापानदेशे तिब्बते च गत्वा सामञ्जस्यं लेभे। तथैव एतस्याः विचाराः प्रतीच्येषु गत्वा सामञ्जस्यम् अलभन्तेति कथं तत्राक्रामकता अस्यां विभाव्यते बुधैः। यदि आक्रामकता कदाचित् अस्यां समागता तर्हि इयमपि अन्यस्याः धारायाः फलमिति कथं न मन्यताम्? वस्तुतस्तु यथा बौद्धसंस्कृतिः सामञ्जस्यप्रधाना तथैवास्ति वैदिकी अपि, कारणं तत्रास्ते धर्मान्तरणप्रवृत्तेरभावः। किञ्चैतदन्येषु नास्ति।

## आधारग्रन्थानां माध्यमेन साम्यानुभावनम्

उपर्युक्तां दृष्टिमाकलय्य उपनिषद्-सुत्तनिपात-रिपब्लिकानां विश्लेषणेन किमप्यैक्यं वैचारिकं, सामाजिकं, मानसिकं, चारित्रिकं वर्तते न वेत्यत्र सर्वप्रथमं ध्यातव्यम्। तत्र एतेषां ग्रन्थकर्तॄणां ऋषीणां यथा भवति तत्काले स्थानं तथैव विचार्य किमपि विचाराणां साम्यमाकल्यते—

### आध्यात्मिकं साम्यम्

उपनिषदः, सुत्तनिपातः, रिपब्लिकश्च यथा रचिताः तत्र कारणं भवति तत्पूर्वकालिकाः परिस्थितयः। आदावेव मया स्वनिबन्धे प्रस्थापितं यत् उपनिषदः संहिताब्राह्मणभागयोरनन्तरमेव संरचिताः। तत्र संहिताब्राह्मणयोः प्रधानकृत्यमासीत् कर्मकाण्डं येन जनाः प्रपीडिताः सन्तः तमपसारयितुमभिलषितवन्तः। तस्मादेवं उपनिषत्सु कर्मकाण्डस्य अवरत्वं निर्धार्य ज्ञानकाण्डस्य श्रेष्ठत्वञ्च विचारितम्। तद्यथा उक्तं मुण्डके—

**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति[5] ॥**

---

1. पश्चिमीदर्शों में बौद्ध अध्ययन विशेष व्याख्यान प्रो॰ लालमणि जोशी, तिब्वती शोध संस्थान, वाराणसी।
2. मैक्समूलर इण्डियन फिलासफी भाग 1, पृ॰ 25।
3. एडवर्ड जेलर-आउट लाइन्स आफ ग्रीकफलासफी पृ॰ 16।
4. दशोपनिषदामिति नामकस्य निबन्धस्य प्रस्तावनायाम्।
5. मुण्डके 1।2।7 तथा च प्रस्तावनायामस्य निबन्धस्य।

कर्मकाण्डं यज्ञात्मकं भवत् यज्ञे हुतहविषा मनुष्यान् सूर्यलोकं नयति। इयं लोकप्राप्तिःखलु तस्य सुकृतस्य फलमिति लोकाः आमनन्ति, किन्तु यज्ञादिभ्यः अधिगतोऽयं लोकः खलु अवर एव। यतो हि उक्तानि अष्टादशोक्तकर्माण्यपि अविद्याप्रयुक्तान्येव, तस्मादेतानि परित्यज्य विद्यारूपाणि ग्रहीतव्यानि। किञ्च मन्त्रविदो नारदस्य आत्मबोधस्तदैवाभवत् यदा स सनत्कुमाराद् विद्यां गृहीतवान्, पूर्णतां च प्राप्तवान्[1]।

न केवलमेतदेव सुत्तनिपातेऽपि उक्तं यज्ञस्य मुखेन ब्राह्मणानां पतनस्य स्वरूपम्। पूर्वकाः ब्राह्मणास्तु शीलवन्तो ब्रह्मचर्यधारिणः मृदुभाषिणः सञ्जानानाः अष्टचत्वारिंशद् वर्षाणि यावत् ब्रह्मचर्यविद्यां च अनुष्ठितवन्तः। यज्ञकर्मवशात् तेषु लौल्यं समागतम्। लौल्यवशात् ते गवां बधं सम्पत्तिलाभाय, राजभ्यः तस्य याचनं, यज्ञमुखेन सुसमलंकृतानां नारीणां उपभोगाय चेच्छां, तदनुसारं कर्म कृतवन्तः। तस्मात्तेऽधः पतिताः पूर्वाधारितादर्शनियमात्। अतः यज्ञः खलु सुखप्राप्तेः उपायभूत इव जातः। तस्मान्निन्द्यते—

**ततो च देवा पितरो इन्दो असुररक्खसा ।**
**अधम्मो इति पक्कन्दुं यं सत्थं निपती गवे[2] ॥**

अर्थात् यदाप्रभृति गोषु घातः समापतितः तदाप्रभृति देवताः, इन्द्रः, पितरश्च असुरैःसह चीत्कारं कृतवन्तः, इदानीमधर्मः संप्रवर्तते न तु धर्मः यज्ञमुखेन। तस्माद्बुद्धस्य सद्भावो लोके दृश्यते हिंसापनयनाय तद्यथोक्तम्—

**निन्दसि यज्ञविधेःश्रुतिजातम्**
**सदयहृदयदर्शितपशुघातम्**
**केशवधृतबुद्धशरीर जय जगदीश हरे।**

इत्थमाकल्यते यद् सर्वास्वेव संस्कृतीषु यदा अन्याय्यं घोरमातिष्ठते तदा तस्याः प्रतिकाराय कश्चिदन्यः प्रवाहः तस्यां धारायामागच्छति। ग्रीकेऽपि प्लेटोमहाशयात् प्राक् सोफिस्टा मानवमानसः एव वस्तुनः निर्धारकत्वं आमनन्ति स्म। लौल्यात् सर्वमपि अनर्गलमातिष्ठमानास्तेऽवलोक्यन्ते। तत एव बुद्धिसंयुक्तानां तेषां विचाराचारयोर्भेदात् जानानां तेष्वविश्वासः प्रादुरभवत्। तस्मादेवार्यसुकरातानां आविर्भावः समजनि।

ग्रीके सोफिस्टानां काले राज्ये नेतृत्वग्रहणाय तदानीन्तनानां जनानां वर्गानुसारं चरित्रनिर्माणमेवासीत् प्रमुखं कृत्यम्। परन्तु अस्मिन् कर्मणि ये खलु कुलीनाः आसन्, ते सोफिस्टैः शिक्ष्यन्ते स्म। ते च द्रव्यं गृहीत्वा तेषु तर्कशक्त्योद्भावनं वस्तुतत्त्वात्मकदृष्ट्या नैव

1. छा. उ. 6।7।2।

2. सुत्तनिपात-ब्राह्मणधिम्मकसुत्त - 2।7।27।

3. गीतगोविन्दम् प्रथम सर्ग 9।

कारयन्ति स्म, प्रत्युत राज्यपदाधिगतये व्यावहारिकं, तार्किकं, शिक्षणं तेभ्यः प्राददन्। तस्मादेव चंतुर्षु सोफिस्टेषु कश्चित् जनेषु साफल्याय राजनीतिकं विधानं शिक्षयति, कश्चित् रहस्यान्वितां राजनीतिं, कश्चित् वाक्यसंरचनानां तार्किकरीतिं, कश्चिच्च गणितभौतिकशास्त्राभ्यां साफल्याय विधिं च पाठयति स्म। वाक्कीला इव ते तथ्यमतथ्यं कुर्वन्ति स्म, अतथ्यञ्च तथ्यमिति—

Consequently the sophists, like lawyers, not caring for truth of the matter, undertook to provide a stock of arguments on any subject or they prove any proposition[1].

एतेन विधिना ग्रीसेऽपि योग्यायोग्ययोः तथा विधानं नैवाभवद् यथा इदानीं कुत्सितराजनीतिवशाद्भारते दृश्यते। एनमपहर्तुं कृतोद्यमः सुकरातः ज्ञानस्याधारं प्रतिष्ठापितवान्। ततश्च सः स्वात्मनि समुपजायमानां देवीं वाचं श्रुत्वा (Supernatural voice or demon) तदनुसारं कर्तुं शिक्षयितुं च प्रायतत। फलमस्य अतीव चमत्कारात्मकमभूत्। तस्मादेव तं परितः जनाः सम्पुटिता इव दृश्यन्ते स्म, विशेषतः युवानः, पुनश्च स सोफिस्टानामिव धनं मनागपि न याचितवान्। तस्मात् स निर्धनो भूत्वा जीवनं यापितवान्। किन्तु यशसा स सर्वत्र अथेन्सनगरे पूज्यते स्म। तस्य प्रभावेण भयान्विता सोफिस्टाः तस्य त्रुटिरहितां प्रणालीं दृष्ट्वापि जनसंकुलेन सह सादरं युवकेषु सम्मानितं तं वीक्ष्य राज्यसाहाय्येन मृत्युदण्डेन दण्डितवन्तः। एतादृशस्य सहजज्ञानबोधसम्पन्नस्य अवसानं वीक्ष्यैव स्टेसमहाशयेनाभाणि—

Socratese fell a victim to the anger of the populace against sophists[2].

अत्रापि आसीत् कर्मकाण्डजनितस्वार्थवादीयसोफिस्टानां प्रवृत्तिः। यस्मात् भीतः प्लेटो सत्याधिगमयितॄणां आर्यसुकरातमहाशयानां सत्यपथानुसन्धानं विधाय ज्ञानस्य राज्यस्य सम्पूर्णं परिवर्तनं विचारयामास प्रजातन्त्रे। प्रजातन्त्रस्मात्र सन्दर्भे ज्ञानस्य समायोजनं भौतिकश्लाघायाः प्रवञ्चनामयधनोपार्जनस्य निन्दायामेवाभवदिति, विवेकिनो विचारयन्त्येव। तस्माद्विवेकिजनाधारितो रिपब्लिकः अध्यात्ममधिकृत्यैव प्रचलितः। तर्हि अध्यात्मविषयकसाम्यं तु अत्र प्राप्यत एव।

अध्यात्मस्य विश्लेषणप्रसङ्गेऽस्माभिः तत्तद्ग्रन्थरत्नानां नीतिविचारे विलिखितः[3]स्तथापि प्रसङ्गतः इह किमध्यात्म्येन गृह्यते इति विचार्यते। गीतायां भगवता कृष्णेन 'अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते[4]' इति उक्त्वा परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः अध्यात्ममुच्यते अर्थात् आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्मशब्दे-

1. डब्लू॰ इ॰ स्टेस— 'ए क्रिटिकल हिस्ट्री ऑफ ग्रीक फिलासफी, पृ॰ 111 द सोफिस्टस्।
2. डब्लू॰ इ॰ स्टेस— ए क्रिटिकल हिस्ट्री ऑफ ग्रीक पिलासफी, पृ॰ 135 द सोफिस्टस।
3. उपनिषद् सुत्तनिपात-रिपब्लिकानां नीतिमीमांसा।
4. भगवद्गीताभाष्य 8-3।

नाभिधीयते। अत्र हि सर्वः भूतवस्तूत्पत्तिकरः तथा च तत्र चरुपुरोडाशादिद्रव्यत्यागपूर्वकं च यज्ञविधानं कर्मशब्देनालक्ष्यते। एतेनैव जनानां स्थावरजङ्गमानामपि समुत्पत्तिर्जायते।

बौद्धास्तु अनात्मवादिनो भवन्तः जगति आत्मनो व्यापकत्वं नैव संगिरन्ति तथापि ते दुःखोत्पादकभावानां परिशमनाय अष्टाङ्गमार्गेण संप्रवर्तन्ते। तत्र समाधिभावनया जगद्दुःखनाशं च वितन्वन्ति। तर्हि अनात्मवादेनापि आत्मनोऽनस्तित्वेन करुणावशात् लोकानां अविद्यानाशस्य उपायः परिचिन्त्यते। तस्मादेतेऽपि आध्यात्मिका भवन्ति। तदुक्तं यथा—

**सर्वदा शीलसम्पन्नो पञ्ञवा सुसमाहितो ।**
**अज्झत्तचिन्ती सतिमा ओघं तरतिदुत्तरं ॥**

अन्यत्रापि[1] बहुत्र उक्तम्।

आंगलज्ञास्तु अध्यात्मशब्देन केवलस्य चेतनास्तित्वस्य जगति सत्त्वं मन्यन्ते, केचन जीवपरमात्मनोःऐक्यं विधाय जगतः प्रत्ययमयत्वमालक्ष्यन्ते। धार्मिकास्तु पवित्रात्मनः (Holy spirit) पूजायै कृतश्रद्धाभावे अध्यात्मं प्रयुञ्जते[2]।

अत्रोभयधाराभ्यां समापतितेनऽर्थेन इदमाकलयितुं शक्यते, यत् स एवाध्यात्मवादः भवति, यत्र जगत्परमात्मनोः स्वरूपविषयकविवेचनं चित्प्रयुक्तं प्रत्ययात्मकं च मन्यते। सरणिरियं उभयत्र समाना एव। प्लेटोकृतरिपब्लिके, सुत्तनिपाते, उपनिषदि च चैतन्यस्य जगद्रूपेण प्रतिभासः स्वीकर्तुं शक्यते। उपनिषत्सु सर्वं खल्विदं ब्रह्म, नेह नानास्ति किंचन, तत्त्वमसि श्वेकेतो, योऽसावादित्ये सोऽहमस्मि इत्यादिपदैः ब्रह्मणः व्यापकत्वमेकत्वं सर्वगोचरत्वञ्चापि स्वीक्रियते। सुत्तनिपाते तु 'यथा अहं तथा एते यथा एते तथा अहं[3], तुवं बुद्धो, तुवं सत्था, तुवं माराभिभू मुनि[4], एकं हि सच्चं न दुतियमत्थि, यस्मिं पजानो विविदे पजानं[5], यमाहुधम्मं परमंति एके तमेव हीनं ति पनाहु अञ्ञे' इति पदैःचैतन्यतत्त्वस्य ऐक्ये विवाद एवाधिगम्यते। तत्र कारणं वर्तते बौद्धानामनात्मवादिनामध्यात्मदर्शनम्। ते खलु आत्मनः ऐक्यं नैवाधिगच्छन्ति। ते तु भावविचारान् अधिकृत्य रागद्वेषलोभादीनां निरसनपूर्वकं जागतिकीं व्याधिं निरसयन्ति। तर्हि दृष्टिभेदेनापि भावानां रागादीनामपगमनाय क्रियमाणोऽयं प्रयास आध्यात्मिकतां नैव जहाति। तस्मादेव सर्वं खण्डयन्नपि कृषिकर्मणः आध्यात्मिकं

---

1. न वयं नास्तिकाः अस्तित्वनास्तित्वद्वयवादनिरासेन तु वयं निर्वाणपुरगामिनमद्वयपथं विद्योतयामः। न च कर्मकर्तृफलादिकं नास्तीति ब्रूमः। किं तर्हि निःस्वभावमेतदिति व्यवस्थापयामः।
माध्यमिककारिका 17 प्रकरण पृ० 389
2. डिस्कनरी आफ फिलासफी डी.डी. प्यूनस -पृ. 300।
3. सुत्तनिपात 2।11।27।
4. सुत्तनिपात 3।7।24।
5. सुत्तनिपात 4।12।7।

स्वरूपमुपपादितवान् तथागतः[1]। रिपब्लिके तु प्लेटो द्वारा सत्यज्ञानस्य बोधाय यत् खलु उदाहरणं लम्बरेखायाः प्रदत्तम्— तत्र एकांशः सत्यं तथ्यात्मकं मनोगतरूपस्वरूपम् (Form) द्विधा विभज्यते, विवेकरूपात्मकं बुद्धिरूपात्मकं च (Intellegence and Reasoning) इमे द्वेऽपि प्रत्ययात्मके। एतयोरेव प्रतिकृतयः द्वे प्रकारिके भवतः, एका विश्वासाधायिका भूतवस्तुरूपा, अन्या छायारूपात्मिका भ्रमस्वरूपा। अत्र प्लेटो इमं परप्रत्ययं श्रेयःप्रत्ययं श्रेयोरूपेण अभिव्यञ्जयति तद्यथा—

The good therefore may be said to be source not only of the intelligibility of the objects of knowledge, But also of their being and reality, yet it is not itself that reality, but is beyond it, and superior to it in dignity and power[2].

तस्मादिदं श्रेय एव आत्मरूपत्वेन नित्यं अमर्त्यञ्च भवति, इदं च सदा ज्ञायते। इदमेव सुन्दरञ्चापि उच्यते। ततः भावजगतः सत्ता अतात्त्विकत्वेन अपहीयते। तस्मादिदमपि तथैव प्रत्ययात्मकं जगदामिनोति यथा उपनिषत्। पुनश्च एतदधिगतये मिथ्याप्रतिकृतीनां बोधानन्तरं सत्यस्वरूपावगमनाय तपस्साहस-ज्ञानादिभ्यः धर्मस्य आचरणमावश्यकमिति प्रतिपादितं प्लेटोमहाशयेन।

## सामाजिकसाम्यानुबोधनम्

कस्मिंश्चित् देशे ये खलु समाना राजनीतिकाः, आध्यात्मिकाः, धार्मिकाः, विचाराः समुत्पद्यन्ते। ते निश्चितमेव समानसामाजिकपरिस्थितिमाश्रित्यैव प्रभवन्ति। भारते यदि कर्मकाण्डादाध्यात्मिकं शास्त्रमविकसत्तर्हि तत्कारणं तात्कालिकसामाजिकसंरचनायामासीत्। मानवमनांसि कर्मकाण्डं प्रति हिंसावशाद्वा महाभारतीययुद्धस्य परिणामवशाद्वा विरक्तानि तदानीमभवन्निति अध्यात्मप्रवृत्तिः स्वाभाविकी एव[4]। तत्र स्वपरिक्षिता अभवन्निति[5] वाक्येन महाभारतीयपरिक्षितानामेकत्रबोधस्ततो मचटीहतेषु कुरुषु[6] इत्यनेन कुरुप्रदेशस्य विनाशबोधोऽपि प्रत्युपस्थित एव जायते। इत्थं महाभारतस्य कालविषये सत्यपि मतभेदे पुरातात्त्विकैः इतिहासज्ञैः प्रतीच्यैश्च नवशतं ई. पूर्वं तस्य संघटनमाकल्यते[7]। तस्मात् परिसमाप्ते च युद्धकाले नारकीयं लोकमनसंकलितचित्रं च विलोक्य को न अन्तर्मुखत्वं याति।

तथैव ग्रीके ट्राजेनयुद्धकारणात् विध्वस्तो मानवः क्षतविक्षतमानवः मानव-लौल्यस्य चूडान्तनिदर्शनमिव जायते। मानवाधिकारस्य प्राप्तये श्रोता तद्विनाशाय च यथा

1. कसिभारद्वाजसुत्त- सु.नि.।
2. रिपब्लिक -509 बी।
3. रिपब्लिक - 611 ए।
4. प्राचीनभारत पृ. 17-रा.शं.त्रिपाठी।
5. वृह.उप. 3।3।1।
6. वृह. उ. 1।10।1।
7. द वान्डर दैट इण्डिया वाज पृ.39-वासम, हिन्दू सभ्यता-151- रा. कु. मुखर्जी।

टिरैण्टशासकैः अनुष्ठितं, तेन सह मेराथनयुद्धस्य (490 बी.सी.) प्रभावोऽपि लक्षितो ग्रीकसंस्कृतौ। न केवलमेतदेव स्पार्टा-अथेन्सयोः मध्येऽपि यः संघर्षः अभवत् तथा च पेरिक्लिसमहाशयनानां राज्यकालानन्तरम् अतिशयस्वातन्त्र्येण जनानां यथा उच्चावचस्वरूप-मार्विभूतं तदपि विचारणीयमेवासीत्। स्थितेरस्याः स्वरूपमुक्तवता जेम्स-एडगर-स्वानमहाशयेन प्रोक्तम्— शासनं वित्तहीनमभवत्, राजकुमाराः पदाभिलाषिणो अभूवन्, जनाश्च स्वार्थनिष्ठाः गुणं विनैव सर्वकारस्य शासनपदे येन केन वा प्रकारेणाधिकारमाप्नुवन्। अयमेवकालः पोलेपोनेसियनयुद्धकाल उच्यते (433 बी॰सी॰) इदानीमेव सोफिस्टाः सौकराताश्च स्वीयं कार्यजातं मानवस्य हिताय विनाशाय च प्रारभन्त। अतोऽत्र अन्तर्मुखव्यक्तित्वानां प्रादुर्भावोऽपि जातः।

प्लेटोमहाशयेन स्वच्छन्दप्रवृत्तीनां प्रतिरोधाय रिपब्लिके तीव्रतया निन्दा विहिता, तत्र 'होमरकृत इसियड' इत्यस्य होराज्यूसयोः कामातुरतायाः प्रतिरोधं कुर्वता प्रोक्तम्-प्रजातन्त्रात्मके शासने स्वच्छन्दतापूर्वककामस्य प्रयोगो नैव भावयिष्यते—

All these are in my view most unsuitable, he commented emphatically[1].

तथैव बलिमालक्ष्यापि प्रजातन्त्रे तदपहानाय नैकशः परामर्शो विहितः, कथितश्च यदि 'ईदायाः उच्चशिखरे वर्तमानःकश्चित् जेउसदेवस्य सम्बन्धी स्वपापानि निवारयितुं प्रार्थनां करोति, बलिं वा प्रददाति, तदा एवंविधपापक्षमार्पणस्य विधिरपि समापयितव्यः। येन जनेषु शिष्टाचारस्य कृता व्यवस्था मिथ्याचारेण अपगता न भवेत्[2]।

यथा भारते बुद्धानां काले महाजनपदा अभूवन् तथैव उपनिषदां काले जनपदा आसन्। जनपदेषु एषु पृथक् पृथक् जातयः अधिवसन्ति स्म। तद्यथा गान्धाराः, कुरवः, पांचालाः, कैकेयाः, कौसलाः, विदेहाः, मत्स्यादयः[3]। महाभारतस्य युद्धानन्तरं विस्तृतबल-राज्याधिकारिणः स्वत एव विनष्टा अभूवन्। तस्मादेव पुनः स्थानीयानां जनानां जात्यधि-कृतानां सकाशादेव जनपदाः आविर्भूताः, तेषां च साम्यं यूनाने पुर इव दृश्यते[4], तत्र ग्रामसमुदायः जनपदः कथ्यते। पुनरत्र शक्तिशालिन्यः जातयः स्वाधिकारान् रक्षयन्तिस्म। अन्येभ्यश्च नगरेभ्यः समागतान् स्वस्याधिकारे स्थापयन्ति। एतादृशः कश्चित् अधिकारसम्पन्नः राजा जनकः आसीदिति। स सम्राट्पदभाग् भवति। तद्यथा 'कुरुपंचालानां ब्राह्मणा अभिसमेताः[5]' अत्र विदेहेषु। अत्र जनपदेषु यथा राजानः ब्राह्मणाः मूर्धन्यतामधिगच्छन्तिस्म तथा अन्याश्च जातयः।

---

1. रिपब्लिक- 310 सी.।
2. रिपब्लिक- 391 ई.।
3. पाणिनिकालीन भारत 5।49।
4. बृह॰ उप॰ 3।1 कौ॰ उ॰ 41।
5. बृह॰ उप॰ 3।1 कौ॰ उ॰ 4।1।

यदा जनपदेषु प्रभुत्वं ततोऽप्यधिकं महाजानपदेषु विकसितमिति बौद्धानां काले तदवलोक्यते, महाशब्दाख्यानं तेषां दृढताया अधिकारप्राबल्यस्य द्योतकमिति के न जानन्ति। एषु महाजनपेदषु[1] सा एव विकेन्द्रीकरणात्मिका स्वातन्त्रिका प्रवृत्तिरुद्भूता या खलु ग्रीकेऽपि अवलोक्यते। वज्जिगणराज्यचर्चा तत्र एतत्तत्त्वाख्यानस्य तार्किकत्वं साधयति। वज्जीनां सप्तापरिहाणीयकृत्यानि खलु रिपब्लिकस्यामूर्तव्यवस्थाया मूर्तरूपस्थापनमेवासीत्।

ग्रीकेऽपि ग्रामप्रधानाः देशा अनेके अभूवन्। तद्यथा प्रो. रामप्रसादत्रिपाठिना ग्रीकसंस्कृतेः स्वतन्त्रविचारमादधतां नगराणां स्वरूपमुक्तवता कथितम्—

ग्रीक सम्यता में नगरों का विशेष स्थान है प्रत्येक नगर स्वतन्त्र था और शासनतथा सभ्यता का केन्द्र भी। वस्तुतः नगर ही राज्य या राष्ट्र था[2]।

सत्यपि स्वतन्त्रास्तित्वशालिनि जनपदे नगरे ग्रीके तेषु कलहाः सञ्जायन्ते स्म। ग्रीकस्य नगरेषु भिन्नजातयश्च वसन्ति स्म। तद्यथा कुत्रचित् आर्केनियनाः, क्वचित् एक्विमाः, कस्मिंश्चिद् नगरे डोरियनाः, इसोलियनाश्च आविर्भूताः। एते जना आर्याः इति समाख्यायन्ते स्म। एकजनजातीयकानां रीतिः सभ्यता च होमरस्य काव्यरचनायां विवृता वर्तते। डोरियनजनानां ग्रीसदेशस्य दक्षिणप्रान्तेषु आसीत् प्रभावः। परन्तु एतेषामागमनात् प्राक् ग्रीसे ईजियनसभ्यता प्रचलिता आसीत्। ते तु माइसीयनक्रीटनसभ्यतयोः प्रचारकाः संवाहकाश्चाभूवन्।

एशियाईकोचरस्य उपरिभागे ट्रायनामको एको ग्रामः आसीत्। यस्य पश्चात् नगररूपेण विकासोऽभवत्। ततः समागत्य कश्चित् राजकुमारः स्पार्टायाः राज्ञः पुत्र्याः हेलनराजकुमार्याः प्रवञ्चनया अपहरणं कृतवान्। तेन रुष्टाः खलु ग्रीकवासिनः ट्रायमभिक्रम्य तं नेशुः। राजकुमारीं च पुनः अधिगृहीतवन्तः। अस्मिन् खलु युद्धे सर्वे ग्रीकवासिनःदशवर्षाणि यावत् मिलित्वा संहता अभूवन्। अयमेव ट्रोजनवार, इतिरूपेण ई॰पू॰ एकादशशतके प्रसिद्धो विग्रहोऽभवत्।

एते ग्रीकवासिनः यथा ट्रोजनवारसमये संहता अभूवन्, पश्चादेते शासकानां स्वार्थवशात् विभक्ता जाताः। पुनश्च एकस्य नेतृत्वं स्पार्टाधिकारिणां हस्ते निक्षिप्तमन्यस्य च एथेन्सवासिनाम्। यदा एथेन्समधिकृत्य ईरानस्य आक्रमणमभूत्, तदा ग्रीकस्थितजानपदानां 'डीलियनलीग' रूपेण एकः संघः, ततो विपरीतानां 'पैलोपनसियनसंघश्च' जातौ। पुनश्चोभयोः पारस्परिको विग्रहोऽपि संपन्नः। इत्थमतिवादे जाते स्पार्टया एथेन्सो विलीनीकृतः। स्पार्टायां या शक्तिः आसीत्, सा खलु व्यवस्थावशादेवासीत्, किन्तु ते बुद्धिमन्तः तथा न आसन् यथा एथेन्सवासिनः अभूवन्। प्लेटो एथेन्स-स्पार्टानगरयोः राज्यव्यवस्थां समाजव्यवस्थां चाकलय्य

---

1. अंगुत्तरनिकाय 1।2।1।3, 4।2।5।2, 2।5।6।
2. विश्वइतिहास, पृ॰ 223।

एतादृशस्य राज्यस्य कल्पनां कृतवान्। यत्रोभयोः व्यवस्थयोः सामञ्जस्यमभवत्। तस्मादेव तस्य प्रजातन्त्रे स्पार्टाप्रयुक्तविधिना समाजस्य रक्षणायसां सैनिकव्यवस्था, कोरिन्थव्यापारिणामिव व्यापाराय वणिज्जनानामथ च एथेन्सवासिनां स्वतन्त्रचेतसां बुद्धिशालिनां विवेकस्य विशेषोत्थानाय शिक्षामाध्यमेन संरक्षणव्यवस्था व्यवस्थापिता।

प्रजातन्त्रे खलु संरक्षकाणां साम्यवादः, सैनिकानां उत्साहोत्पादनाय व्यायामव्यवस्था। कलां सवर्धनाय कलाशालिनां, व्यापारस्य वणिजां, कर्षणाय कृषकाणां वर्गाश्च निर्धारिताः तेन। राज्यस्य कथमुत्तरोत्तरं ग्रामात् परिवाराद् वा विकासो भवति, तदपि तत्र लिखितमास्ते।

भारते तु यद्यपि समाजमधिकृत्य उपनिषत्सु एवंभूता सुस्पष्टव्याख्या नास्ति, तथापि तस्याकलनेन ज्ञायते यत् उपनिषत्काले भारते चतस्त्रःजातयः, चत्वारः आश्रमा आसन्निति। शासनस्य व्यवस्थायै न्यायावाप्तये सुरक्षायै व्यापाराय च वर्गास्तत्राभूवन्निति को न जानाति।

राजा खलु ब्राह्मणसाहाय्येन राज्यमधिशास्ति स्म। राज्यव्यवस्थायां तस्य सर्वे अनुशासनमामनन्ति स्म। समाजे समनुष्ठिते अपराधे दण्डः तस्मै दीयते स्म। न्यायस्यापि दिव्यैवासीत् व्यवस्था। निर्दोषः खलु तप्ताङ्गारहस्तेन स्पृशति, यदि अपापी भवति, स ततो न प्रज्वलति, पापी खलु प्रज्वलत्येव[1]। तदानीं न केवलं सामाजिकमेव एनः दण्डार्हं भवति। धार्मिककृत्यस्यानुष्ठानमपि तथैव गण्यते स्म। सेनायाः प्रयोगः कुत्रचित् कार्यंते यथा काशीविदेहयोः आरक्षिसदृशवीराणामुपवर्णनं गार्ग्या स्वयमेव भणितम्[2]। भोजनस्य व्यवस्था राजा स्वयमेव करोति स्म। धर्मशालासदृशानां यात्रिनिवासानां तत्र व्यवस्था उद्भाविता आसीत्[3]।

समाजस्तु चतुर्षु वर्गेषु विभक्तः। यथा रिपब्लिके त्रिष्विति। तत्र प्रथमः-ब्राह्मणः उत्तमः ज्ञानी उपदेशकः यज्ञकर्ता अध्येता इति, क्षत्रश्चासीत् द्वितीयः, यः खलु उपनिषत्सु अनेकासां विद्यानां प्रवर्तक अपि आसीत्। ते न केवलं शासका बभूवुः, अपि तु उपनिषत्सु तेषां पार्श्वे समित्पाणयो जना गच्छन्ति स्म ज्ञानार्जनाय। ते तु वैदिकानुष्ठानस्य आध्यात्मिकं तत्त्वमन्वेषयामासुः[4]। वैश्यश्च धनोपार्जनाय सृज्यते देवेषु-वसु-रुद्र-आदित्य-विश्वेदेव-मरुतश्च वैश्या मन्यन्ते[5]। शुद्रस्तु पूषन्रूपेण समाजस्य सेवां करोति। रथकारः सेनानी-दासः अन्ये च कर्मचारिणःशूद्रा भवन्ति स्म। रैक्वः शूद्र एव आसीत्। परिचारका अपि शुद्राः अभूवन्।

---

3. बृह० उप० 4।3।37-38।
2. तत्रैव 3।8।2।
3. छा०उ०नि० 4।1।1।2, छा० 4।2।4।
4. छा०उ० 5।4-10।
5. छा०उ०, पृ०107 वृ०उप० शांकरभाष्य।

एवमेव आश्रमाः अपि चत्वारः— ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यासाः। केचन आमनन्ति यत् उपनिषत्सु चतुर्थाश्रमस्य चर्चा नास्ति, केचन च न तथा स्वीकुर्वन्ति[1]।

प्लेटोमहाशयानां प्रजातन्त्रव्यवस्था यथा दूषणस्य अपाकरणाय प्रवृत्ता तथैव उपनिषदां व्यवस्था उपदेशश्च कर्मकाण्डजन्यदूषणमपाकर्तुम् एव जातेति साम्यमास्ते एतयोः। सुत्तनिपातेऽपि मानवकर्तव्यानां विवेचनमुपलभ्यते। तत्र तु यथा रिपब्लिक-उपनिषदोः व्यवस्था अस्ति, तथा नास्ति समाजव्यवस्था। तथापि पर्यालोचनेन तत्रापि व्यवस्था निःस्सरति एव। बुद्धेन समाजिकी व्यवस्था न कृता, केवलं भिक्षूणां नियमा निर्धारिताः। तत्र तेषामयमाशयः आसीत् यत् जना एतेषां पारस्परिकं सौहार्दं समन्वयं च दृष्ट्वा स्वत एव तथा भविष्यन्तीति। अतएव समुद्रवत् संघं ते प्रतिपादयन्ति। यत्र कश्चिद् उच्चावचरूपतां नैव प्राप्नोति। परन्तु सामाजिकविसंगतीनामपाकरणाय तेन जातिवादीयविधानानां समालोचनं कृतम्। तत्र व्यवस्थापनकर्मणि क्षत्रियाः प्रथमा अभूवन्। तस्मादेव केचन बुद्धस्योपरि आक्षिपन्ति यदसावपि जातिवादीयविचारेण न पूर्णतया विविक्तो जातः। अम्बट्ठसूत्ते स क्षत्रियान् जातिषु श्रेष्ठतमान् मन्यते[2] स्म। तेषां व्यवस्थायां क्षत्रियाः, ब्राह्मणाः, वैश्या; शूद्राश्चापतन्ति[3]। वस्तुतस्तु स जातिव्यवस्थाया विरोधी आसीत्। किन्तु जना जातित्वेनैव स्वीयां ज्येष्ठतां यदा अमन्यन्त तदा स तस्य निरासं कृतवान्। वस्तुतस्तु स सर्वत्रैव ब्राह्मणकर्मणां प्रशंसक एवासीत्।

भिक्षुसंघस्य विनयव्यवस्था वज्जीसंघमाश्रित्य कृता। तस्य संघे पञ्चदशवर्षानन्तरं कश्चित् प्रव्रज्यायां अदीक्ष्यत च। ततः पञ्चवर्षानन्तरं उपसम्पदा दीयते स्म। भिक्षुण्योऽपि तत्र भवन्ति स्म। किन्तु संघे तासामासीत् कश्चन एवाधिकारः। वस्तुतस्तु ताः समानाधिकारं नैव लब्धवत्यः तथापि संघे तु दीक्षिता अभवन्नेव। संघे पारस्परिकःसहयोगः, भ्रातृत्वबोधः, रुग्णताकाले शुश्रूषायाश्च भवति संदेशः। स्वयं बुद्धेनापि उक्तम्-यः खलु यथा मां सेवते तथैव रुग्णानपि सेवेत। यतो हि अत्र संघे कौचित् पितरौ न भवतः[4]। संघे यत्किमपि दानरूपेण प्राप्यते स्म, तदपि सम्पूर्णस्य संघस्य कृते एवासीत्, भिक्षूणां तु केवलं सप्तवस्तूनि एव भवन्ति स्म। इत्थं संघे साम्यवाददपि अधिका साम्यमूलिका आसीत् प्रवृत्तिः। यः कश्चित् अधिकं चीवरं वस्तु वा दाने अधिगच्छति सर्वं संघाय समर्पयति[5]। उपयोगाय केवलं संघाटी-उत्तरासंग-अन्तरवासकाः, जलपात्रं, सूचिका, शिरोमुण्डनाय कर्तनी च[6] भवन्ति।

---

1. उपनिषदकालीन समाज एवं संस्कृति, पृ० 57 –राजेन्द्र।
2. दीघनिकाय 1, पृ० 97-99।।
3. बुद्धकालीन समाज एवं धर्म, पृ० 15।।
4. महावग्ग 8।26।
5. सिक्रेट बुक्स आफ इस्ट, 13 पृ० 18। बुद्धकालीन समाज एवं धर्म, पृ० 181।
6. बुद्ध और मार्क्स, डॉ० अम्बेडकर –बौद्धदर्शन एवं मार्क्सवादं।

अस्यायं भाव आसीत् यत्संघः खलु न्यूनातिन्यूनवस्तुभिःस्वकार्यं साधयेदिति। केवलं वर्षाकाले एव एका वार्षिकशाटिका अधिका प्रदीयते स्म। येन वर्षायां क्लिन्नतायां वस्त्राणां परिवर्तनं कर्तुं शक्नुयादिति[1]। भिक्षुण्यै उदकसाटी अपि दीयतेऽतिरिक्ता।

इत्थमेभिर्वस्तुभिः विभिन्नादर्शनियमैश्च भिक्षुसंघस्य मर्यादां पालयन्ति स्म। अयं संघ एव समेषां प्रेरको भविष्यतीति सौमनस्यस्य, मैत्र्याः, साधुतायाः, समानतायाश्च व्यवहारः कर्तव्य इत्येव आसीत् हार्दं भगवतामिति। अतः अत्र उपनिषद्-सुत्तनिपात-रिपब्लिकानां समाजसाम्यविश्लेषणेनेदमायाति यत् त्रिष्वपि ग्रन्थेषु आदर्शोन्मूलकमासीत् कृत्यम्। तत्रापि एकः काल्पनिकः, अपरः विरागिनां समवाये युक्तः, अन्यश्च स्थिरसमाजस्य व्यवस्थायां कथञ्चित् समन्वितः। तथापि एतासां व्यवस्थानां पश्चात्कालिकेषु व्यवहारेषु महान् प्रभावः अभवत्। यूरोपे प्रजातन्त्र-साम्यवादयोः खलु या आगता नूतना प्रणाली तत्रापि अस्ति रिपब्लिकस्य प्रभावः। भारते समायोजन-परिवर्तन-मुखात्मकसमाजस्य व्यवस्थापने उपनिषदां प्रभावो दृश्यते। आदर्शानुपालने सामञ्जस्ये च सुत्तनिपातस्य यथा माहात्म्यमवलोक्यते तथैव बौद्धविनयवशादेव एतस्याः संस्कृतेः प्रभावः थाईलैण्ड-बर्मा-लङ्का-वियतनाम-तिब्बत-चीन-जापानदेशेष्वपि दृश्यते।

## मानसिकैक्यव्यवस्थापनम्

चित्तान्वेषणप्रसंगेऽस्माभिः एतेषां ग्रन्थरत्नानां मनोवैज्ञानिकप्रवृत्तीनामाकलनं व्यधायि। इदानीं तेषामाकलनमुखेन साम्यं निरूप्यते। इदं तु पूर्वमेव सुनिश्चितं यत् एते त्रयोऽपि ग्रन्था अध्यात्ममूलका एवासन्। पुनश्चैतेषां समाजव्यवस्थायां पूर्वकालिकसमाजस्थदूषणप्रवृत्ती-नामपाकरणमेवासीत् हार्दम्। यदि पूर्वकालिकाः प्रवृत्तयः समानास्तर्हि विचारस्य भूमयोऽपि समाना एव भविष्यन्तीति कृत्वा मानसिकसाम्यस्य व्यवस्थापनमालोच्यते। आध्यात्मिकतायाम् ऐक्ये सत्यपि दृष्टयः खलु भिन्नाः सन्त्येव। एकः अनात्मवादी, अन्यौ आत्मवादिनौ तथापि देशव्यवस्थाभेदतः तयोश्चित्तव्यवस्थायां कश्चिद्भवत्येव भेदः। तदिह परीक्ष्यते।

मया मानसविश्लेषणप्रसंगे प्रोक्तं यत् यथा चित्तस्य कामादिषु व्यावहारेषु स्वाभाविकी गतिः भवति, तथैव विरागस्यापि भावस्तत्र संजायते। अयं भावः खलु विशेषतः महात्मनि गौतमे अवलोक्यते, यो हि सकलं रागमूलकं वस्तुजातं गृहकारकं च विलोक्य संसारान्निर्विवेद। ततोऽत्र भगवतो बुद्धस्य स्वाभाविको निर्वृत्तिभाव एव संलक्ष्यते। प्लेटोमहाशयोऽपि स्वाभाविकोच्चदृष्टिसम्पन्नस्य स्वगुरोः सदाचरणं विलोक्य तत्कालकृतरागद्वेषजनिकानां राजसिकप्रवृत्त्यापादितमनोमालिन्यानां फलं विलोक्य तन्नाशाय प्रवृत्तः। तथैव कर्मकाण्ड-प्रयुक्तहिंसनभावातिरेकेण निगडितचेतनानां ब्राह्मणानां किं कर्तव्यविमूढतामवलोक्य राजानः तद्विनाशाय अध्यात्मनिष्ठां आविश्चक्रुरिति, के न स्वीकुर्वन्ति? मन्येऽत्र त्रयाणामेव विचाराणां साम्यमवलोक्यते।

1. महावग्ग 8।15।15, 8।20।2।

आदर्शसाम्ये, सत्यपि चित्तवृत्तीनां दृष्टिभेदात् भेदोऽवाप्यत एव। ये वैदिकाः स्वर्गसुखाभिलाषिणः यज्ञमुखेन स्वर्गं पुत्रादिकं च साधयन्ति स्म, तत्र साधनप्रयोगे पशूनां-यवगोधूम-घृत-स्त्री-वस्त्रालङ्काराणां उपयोगं भावयन्तिस्म। अयं प्रयोगः लोकमूलकः वर्गमूलकश्च। ततोऽस्य अपाकरणं अलोकमूलकत्वेन व्यक्त्यनुभवात्मकचित्तेनैव उत्पादयितुं शक्यते। तस्मादेव ब्रह्मावबोधात्मके चित्ते पर्यनुयोगः समवजायते उपनिषत्सु।

किञ्च सत्यपि उपनिषद्विचारानुस्यूताद्वैतवादे आत्मदृष्टिः न कदापि अपगच्छति, तस्मादेव कथने आदर्शमालक्ष्य अपि आचरणे सा न प्रयुज्यते। तस्मात् केवलं आदर्शेषु संशोधनेन च कदाचिद् भवति रागहानिः। अतः परम्परागतजाड्याचारस्य आत्मनः सत्कायदृष्टित्वेनाधिगृहीतस्य, पूर्णतया वारणमेवास्ति सौगतानां हार्दम्। एतस्मादेव संस्कृतिभेदः ब्राह्मणेभ्यः श्रमणानाम्। ये खलु ब्राह्मणाः ईश्वर-आत्म-व्यक्ति-जाति-नित्यतावादिनः अभवन्, एतानाधृत्य ते यथा विचारायामासुः, तानपाकृत्य बौद्धाः अनीश्वर-अनात्म-संघात-अपोह-क्षणिकतावादिनः सञ्जाताः। तेन समग्रा दृष्टिः चित्तव्यवस्थातो विपरिवर्तिता। सत्यपि दूरदेशस्थे रिपब्लिके गृहस्थानामेव व्यवस्था अवलोक्यते। सा च वैदिकविचारस्य अति सामीप्यं भजते। कथन्नु एतत् साम्यमिति विचार्यते।

बौद्धास्तु निवृत्तिवादिनः श्रमणाः गृहं परित्यक्तवन्तः, अतः तेषां समाजव्यवस्था चित्तव्यवस्था च गृहस्थानां समाजव्यवस्था-चित्तव्यवस्थाभ्यां भिन्ना भविष्यत्येव। ग्रीकदेशे ये खलु अभवन्, तेऽपि गृहस्था रागद्वेषादिभावैः समलंकृता इति पूर्वसमाजविश्लेषणानुसाम्येन दृष्टमेव। अस्मिन् समाजाधिकृतजनसंकुले कथं रागादिप्रवृत्तयः अल्पीयस्त्वं प्राप्नुयुः, एतदर्थं भवति प्रयासः संशोधकानाम्। तच्च प्लेटोमहाशयेन कृतं संरक्षकाणां साम्यानुभावनेन। स्पार्टायाः अशिक्षितजनानां दौर्बल्यम्, एथेन्सस्य सांस्कृतिकजनानां चातुर्यम्, एकत्रानुप्रवेश्य प्रजातन्त्रात्मकं सर्वलोकहितकारकं चित्तोत्पादकं समाजमारचितवान्। यस्य नेता तथाविध एव कश्चित् दार्शनिकः स्यात्, यो हि समग्रदृष्ट्यापूतो भवति। इत्थमेतेषां चित्तैकता कथमायातीति संक्षेपेण विमृश्यते—

प्राकृतिकविज्ञानतामुपगताया आधुनिकचित्तमीमांसायाः ज्ञानं सदैव प्रवृत्तीनां प्राकृतिकोद्भावनमुखेन क्रियते। तच्चास्माकं योगशास्त्रेऽपि दृश्यते। समेषां मानवानां प्रकृतिमूलकत्वं मूलप्रकृतिरविकृतिरित्यादिना कृतम्। किन्तु अध्यात्मशास्त्रे प्राकृतिकमनोवैज्ञानिकविवेचनात् ऋतेऽपि चेतनत्वेन सह प्रकृतेः योग उपस्थाप्यते। इदञ्च उपनिषत्सु चेतनस्य अवस्थाचतुष्टयत्वेन वर्ण्यते। तदुक्तं माण्डुक्योपनिषदि-'जागरितस्थानो बहिः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमपादः। स्वप्नस्थानोऽ अन्तः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तेजसो द्वितीयो पादः। यत्र सुप्तो न कंचन कामं कामयते, न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघनः एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञः

तृतीयः पादः। नान्तं प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवं अद्वैतं चतुर्थं मन्यते, स आत्मा स विज्ञेयः[1]।

अत्रोक्तचतुर्षु चैतन्यप्रकारेषु यत्स्वरूपमुपलभ्यते तत्खलु मानसिकभौतिकप्रवृत्तीनां प्रकाशादेव। ताश्च प्रवृत्तयस्सत्वरजस्तमोरूपाः। यदा चेयं प्रवृत्तिः प्राणिषु सत्त्वातिशयपूर्णामवस्थां अभिव्यनक्ति तदा जाग्रतरूपेण, रजः प्रसुप्तावस्थायां सत्यां स्वप्नरूपेण, तमोबहुलायामवस्थायां सुषुप्तिरूपेण प्रकाश्यते। एतेषां त्रयाणामपि यत्र न भवति प्रभावः, तस्मादयं तुरीयः प्रपञ्चो-पशमः कथ्यते। आधुनिकमनोविज्ञानशास्त्रे एतासां खल्वस्थानामुपपत्तिः भौतिकावस्थानां विवेचनेनैव क्रियते। किन्तु शरीरनाडीतन्त्रादन्यः कश्चिच्चेतनः भवतीति भारतीयानां मतम्[2]। अतः समग्रशारीरिक-धर्मस्य व्याख्यानाय तद्वद्द्वयमपि भवामः, तस्मादेव अस्माभिः ततश्चोभयोः सामञ्जस्यं योगे कृतम्। दार्शनिकदृष्ट्या उपनिषत्सु कदाचिदद्वैतस्वरूपमेवोद्भावितमिति। एतेन मानसं दार्शनिकं च रहस्यमुद्घाटितं भवतीति कृत्वा समन्वयः क्रियते।

तथैव पाश्चात्त्ये रिपब्लिके एतासां प्रवृत्तीनां तथा विश्लेषणं तु न कृतं तथापि मानवज्ञानस्य मानसो वा याथार्थ्यस्वरूपकथनावसरे तेऽपि अस्य चतस्रः अवस्थाः वर्णयन्ति। यत्र द्वे लोकमूलिके, द्वे चालोकमूलिके भवन्ति। मनसो विभेदनप्रकारस्यायं भावः रिपब्लिके लम्बरेखायां रेखाचित्रनिर्माणपुरस्सरं प्रदत्तम्। तद्यथा— लम्बरेखायाः विभाजनप्रकारस्य सूर्येण सह रूपकत्वं मनसो विशेषावस्थावस्थितदृष्टीनां बोधाय क्रियते[3]।

वस्तुतत्त्वस्य बोधः कथं जायते, तदर्थं प्लेटो वक्ति— श्रेयोरूपस्य परमात्मनः बोधः तथ्यत्वेन सत्यत्वेन भवति। किन्तु एतस्य बोधनं खलु वस्तूनां विचारेण (Intelligibility to objects of Thought) मनसः क्रियाशक्त्युद्बोधनेन (Power of knowing to mind) च जायते। तत्र एतयोः बोधः प्रकारद्वयेन रिपब्लिके प्रदत्तः तद्यथा— प्रथमः दृष्टजगतः ज्ञानेन, द्वितीयः आकारात्मकबोधस्य ज्ञानेन। पुनश्चैतेषामपि अवान्तरभेदः। तत्र दृष्टजातं भौतिकरूपात्मकं वस्तु (Physical thing) छायारूपात्मकं प्रतिविम्बं (Shadow and image) वस्तु, एतयोश्च पारमार्थिकमनस्तित्वम्। किन्तु आकारात्मकबोधस्य अपि द्वे रूपे भवतः, तत्र प्रथमं ज्ञानमात्रकम्, द्वितीयं आकारात्मकम् (Knowledge and Reasoning)। मनोवैज्ञानिकविश्लेषणेऽत्र ज्ञानरूपात्मकं (Knowledge epistema) यद्भवति तत्तु 'नाउस' कथ्यते। यतः केवलं प्रथमावबोधरूपस्य आकारान्त्यस्य ज्ञानं जायते। द्वितीयस्य ज्ञानरूपात्मकस्य स्वरूपबोधस्तु तर्केण अधःपातिना समानुमापकेन भवति। एतौ द्वावपि सत्यभूतौ। एतयोः अनन्तरं असत्यमेकं सामान्यज्ञानावलम्बकं

1. माण्डूक्योपनिषद् - उपनिषत्संग्रहः पृ॰ 20।
2. निद्रायां सुषुप्ति –डॉ॰ रामशंकर भट्टाचार्य, पृ॰ 63-64।
3. रिपब्लिकस्य संपादकस्य डेसमण्ड ली महाशयानां टिप्पणी, पृ॰ 309-310।

ज्ञानम्।। यद्धि विश्वास (Belief) इत्युच्यते। चतुर्थं तु भ्रममूलकं कायिकं वा ज्ञानं प्रतन्यते, यच्च कालाकाराः सोफिस्टाश्च लोके विस्तारयन्ति स्म। एतच्चापि परिशिष्टे रिपब्लिकसम्पादकेन दत्तं यथा—

State of mind[1]

A) Intelligence (Noesis, nous)
upward movement to a first principle (archi) thence back to conclusions (lllab) Deals with forms only (511c)

B) Reasoning (Dianoia)
Downward movement from assumptions to conclusion, as in geometry and kindred Technai (5lla, b,d) uses visible figures as illustrations (510 d-e, 511a)

C) Belief (Pistis)
511 d-c commonsense assurance.

D) Illusion (eikasia)
511 d-e (sophist poet, artist cf part X).

अत्रापि प्लेटो शिवतत्त्वाधिगमनस्य ज्ञानप्रकारान्वेषणे मनसः स्वरूपमुद्भावितवान्। यथा तुरीयचैतन्यावबोधाय मनसः विभिन्नजागतिकावस्थानां विवेचनं विधत्ते।

यथा रिपब्लिकोपनिषदोः मनस्तत्त्वस्य प्रतिबोधः इहोपवर्णितस्तथैव सुत्तनिपातस्थविधिरपि प्रस्तूयते। भगवता बुद्धेन तु सर्वत्रैव क्लेशकर्मणां नाशाय मनसः पापहानाय उपदेशः प्रदत्तः। एतेषां पापानां कथं संहननं भवति, तत्तु शास्त्रेषु बहुवर्णितमास्ते। भगवान् सुत्तनिपाते आनन्तर्यसमाधेः माहात्म्यं वर्णयन् ब्रूते—

**यं बुद्धसेट्ठो परिवण्णयी सुचिं, समाधिमानन्तरिकञ्ञमाहु।**

**समाधिना तेन समो न विज्जति, इदं पि धम्मे रतनं[1] पणीतं।**

**एतेन सच्चेन सुवत्थि होतु[2]।**

अत्र एतस्य समाधेः वर्णनप्रसङ्गे अट्ठकथायामुक्तम्— बुद्ध श्रेष्ठः सम्यक्समाधेः स्वरूपं देशयति। आनन्तर्यसमाधिः खलु सकलक्लेशोच्छेदकः, अत्यन्तोदारो मार्गरूपः, एतत्पूरणानन्तरं नास्ति कोऽपि अन्तरायः, यः खलु एनमवरुद्धेत्। तस्मादेव अयं समाधिः सर्वेभ्यः रूपावचर-अरूपावचरादिभ्यः श्रेष्ठतम इति[3]।

1. रिपब्लिक एपिण्डेक्स, पृ० 458, तृतीय ग्रन्थ।
2. सुत्तनिपात –रतनसुत्त 2।1।5।
3. सुत्तनिपात र०अ०क०, पृ० 25।

चित्तस्थितक्लेशानां राग-द्वेष-मोहानां प्रहाणाय बुद्धधर्मे विधयः निर्धारिताः सन्ति। ते खलु न मनोविज्ञानविधिप्रयुक्ता यतो हि मनोविज्ञाने तु विरागो न स्वाभाविको भावः, अपि तु अर्जित इति। किन्तु बौद्धाः ब्रुवन्ति, नास्ति लोके कस्यचित् स्वभावः प्रत्युत सर्वः खलु कल्पितस्वभाव एव, शून्यस्वभावत्वात् वस्तूनाम्। तद्यथोक्तम्—

**सुञ्ञतो लोकं अवेक्खस्सु, मोघराजा सदा सतो।**
**अतानुदिट्ठिं उहच्च, एवं मच्चुतरो सिया**
**एवं लोकं अवेक्खन्तं, मच्चुराजा न पस्सतीति[1]॥**

तस्मात् साधकः वस्तूनां रागद्वेषादीनाञ्चापवारणं विधाय ध्यानेन समाधिना च अर्हत्वमधिगच्छति। अस्याधिगमनाय च स चतुर्णां कामावचर-रूपावचर-अरूपावचर-लोकोत्तरसमाधीनामधिगमनं प्रतिष्ठापयति। अत्रापि योगी चेतनस्वभावं चित्तं परिष्कारेण विशुद्धं करोति, ततो रागादीनां परावृत्तिः संजायते। इयं परावृत्तिः द्विधा भवति। प्राकृतमनोविज्ञाने तु इदं नैव स्वीकर्तुं शक्यते। विषयाणां विभेदनद्वारा अध्ययनवशात् तदधिगन्तुं न कोऽपि चेष्टते। किन्तु मया पूर्णात्मकदृष्ट्या तु तदपि विवेच्यते। तस्मादेव यथा बुद्धेन मनोवैज्ञानिकं, उपनिषद्भिश्च चित्तवैज्ञानिकं, रिपब्लिकेन च मानसवैज्ञानिकं स्वरूपं प्रदत्तं; तत्र व्यावहारिक-दृष्ट्या लोकस्य सत्ताधिकृत्य, पुनश्च अध्यात्ममपि स्वीकृतम्। तस्मादेव जगतः व्याध्यपनयनाय प्रयुक्ता खलु विश्लेषणरीतिः सुष्ठुतरा प्रतिभाति।

## नीतिधर्मयोरैक्यं ताभ्यां लोकसंयमनस्य विचाराश्च

एतेषां खलु ग्रन्थरत्नानामालोडनेन मानवहितसंसाधनाय कथं गुणगतैक्यं प्रतिष्ठापितं भवेदित्येतदर्थं परिचिन्तनीयमास्ते। व्यवहारकाले इदानीं जनाः परस्परं कलहे प्रवृत्ताः दृश्यन्ते स्वसंप्रदायनीतिमाकलय्य इति। तर्हि कथमयं सम्प्रदायभावः जनेभ्य अपगतस्स्याद्, एतदर्थं धर्मस्य परीक्षणमथ च आचारस्य विधायकगुणानामन्वीक्षणं च कर्तव्यम्। कोऽपि वादः स्वार्थमनुरुध्यैव प्रवर्तते। तत्र यथा संप्रदायवादः भवति हितकरोऽहितकरो वा तथैव राष्ट्रवादोऽपि हितकरः अहितकरश्च जायते। भूम्यन्तरा अरिप्रकृतिः[2] इति कौटिल्यवचनात् एकदेशस्य परिधेः समनन्तरं यो देशो भवति, स प्रकृतितः परस्य अरिः कथ्यते। तथैव एकः सम्प्रदायः अपरस्य अरिः भवत्येव। अरिनिर्माणमिदं स्थानकृतसामीप्येन स्वप्रभुत्व-स्थापनार्थम् उद्योगेनापि क्रियते इति स्वयमेवागच्छति। एतत्खलु स्वार्थानुसन्धानमूलकं कार्यं विविच्यैव जनाः कदाचित् विरागमातन्वन्ति, तद्यथा बुद्धेन विरागस्य कारणं प्रोक्तवता कथितम्—

---

1. सुत्तनिपात मोघराजमाणव पुच्छा 5।16।4 (पारायणवग्ग०)।
2. कौटिल्य अर्थ०वार्ता 17 अ०2 अधि० 6।

**फन्दमानं पजं दिस्वा, मच्छे अप्पोदके यथा।**
**अञ्ञमञ्ञेहि व्यारुद्धे, दिस्वा मं भयमाविसि**
**समन्तमसरो लोको, दिसा सब्बा समेरिता**
**इच्छं भवनमत्तनो, नाद्दसासिं अनोसितं[1]॥**

इत्यादिना रागात् युद्धमानान् लोकान् दृष्ट्वा बुद्धः स्वयमेव रागानपहर्तुं परिवव्राज। तर्हि रागोऽयं यः कदाचित् देशसम्प्रदायाभ्यां जडीभूत आसीत्। इदानीं आदर्शं प्रभुत्वं चाप्यधिकृत्य मानवविनाशाय प्रयतते।

न केवलमेतदेव अजानन्नपि मानवः स्वां हत्यां स्वयमेव कुरुते, तत्र कारणं वर्तते पर्यावरणदूषणम् (Ecological pollution)। औद्योगिकप्रगत्या अण्वस्त्रानुसन्धानेन तादृशानि पर्यावरणदूषणानि संयन्त्राणि साधनानि खलु पर्यावरणे उद्भवन्ति, यानि अजानन्त्यपि मानवस्य विनाशे प्रवृत्तानि भवन्ति। तर्हि एकत्र रागद्वेषजनितभावेन अपरत्र अनवधानदोषजन्य-पर्यावरणदूषणप्रभावेण आत्मनो नाशाय प्रवृत्तस्य मानवस्य कथं रक्षा भवेत्, तदर्थं यत्नोऽनुष्ठेयः। विश्वस्य शास्त्राणां धर्मानुशीलनेन प्राक्कालीनव्यवस्थायां एतदर्थं किञ्चिदुद्धृतमासीन्नवेति विचार्य मानवकल्याणपरकविचारेषु पर्यावरणदूषणस्य रागद्वेषादिजन्यदूषणस्य च अपाकरणाय किञ्चिन्निर्देशितव्यमास्ते।

1971 वर्षे जापानदेशे सुत्तनिपातसंस्कृतेः परिपूते स्थले त्रिसहस्राणां वैज्ञानिकानां खलु संघः इदं निर्धारितवान्। इदानीं पर्यावरणस्योपरि जायमानानां प्रदूषणप्रकोपानां उपशान्तये यत्नः आस्थेयः। एतस्यापि अध्ययनं नितान्तमपेक्षते। यत् दूषणमिदं मानवसहिष्णुतायां कियत् वीर्यपर्यन्तमास्ते। तैः तदप्यधिविवेचितं यद् सर्वत्रैव विश्वेऽस्मिन् यत्र विषाक्तवायुरसोर्जाः च सम्प्लाविताः वर्तन्ते, तन्नितरां सुरक्षितं सुनियन्त्रितं च भवेदिति[2]।

इत्थं वैचारिकभौतिकयोः संदूषणमपाकर्तुं प्रयत्नानुष्ठानप्रसंगेऽत्र सांस्कृतिकग्रन्थानां विवेचनं कृतम्। एषु ग्रन्थेषु बहुत्र ऐक्यं सम्प्राप्यते। यत्र समेषामवधानं आक्रष्टुमहं याचे। वेदस्मृतिदाचारमुखेन प्रोक्तः धर्मः यदि समेषां विश्वमानवानां कृते बलादापतितः कश्चिद् भावयेत्, तर्हि न सर्वे वेदानुवचनेन स्वजीवनं धारयिष्यन्तीति। तथापि वेदादिषु सन्निपातित-गुणप्रधानविचारैः चालयितुं शक्नुवन्त्येव। तस्मात् संकीर्णां सम्प्रदायनीतिं परित्यज्य विस्तीर्णा मानवकल्याणविधायिनी नीतिः कथं जीवने समागच्छेदित्येतदर्थं समग्रां प्रतीच्यनीतिमनुरूध्य मयात्र ग्रन्थेषु साम्यं विवेचितम्। किन्त्विदं खलु साम्यं कथमुभयविधिना समुत्थापितं भवेत् तदर्थमपि विमर्शयितव्यम्। तदत्र किञ्चित् सारमुखेन प्रस्तूयते—

---

1. अत्तदण्डसूत्त 2-3 सुत्तनिपात, पृ॰ 244।
2. इकोलाजी एण्ड ला एन॰आई॰पी॰ 4 फरवरी 85 –पी॰एम॰ बक्सी।

प्लेटोकृतरिपब्लिके ग्रन्थे गुणानामतिशयित्वमाख्यापयितुं तदानीं प्रचलितविविधविधियुतानां राज्यानाम् आलोडनं क्रियते। पुनश्च तेषु परस्परालोडनप्रकारेण यत्र दोषराहित्यमधिकं वर्तते तत्रैव प्रयत्नतः तेषां भवति गमनम्। यथा तदानीं स्पार्टायामासीत् मानशालिनां (timocracy) शासनम्। मानशालिनां स्वदेशस्य नगरस्य वा विकासाय यावदैक्यं भवति, तावद् न कोऽपि तान् पराजेतुमर्हति। राज्यजनेषु एवंविधैक्योपपादनार्थं तेषामानुवंशिकी विशिष्टतापि तत्र राज्यकृता उपवर्णिता। किन्तु राज्यव्यवस्थाकारिणस्तु तत्रात्माधिकसम्मानमभिवाञ्छन्तः स्वस्यैव प्राबल्यं समामनन्ति। ततः कुलीनतन्त्रत्वं तत्र (oligarchy) जायते। अस्यामपि प्रणाल्यां एका धनपिशाचात्मिका शक्तिपिशाचात्मिका च शक्तिः प्रादुर्भवति, या जनान् शोषयति। अतः समेषां हिताय पुनः व्यवस्था क्रियते। या खलु प्रजातन्त्रात्मिका (democracy) कथ्यते। इयमपि यदा दुष्टशासकेनाधिकृता जायते, तदा शासकस्य दुष्टता जनेषु सकलेषु समापतति तस्मादेताम् अपि प्रमोक्तुं जना विचारयन्ति। इमां क्रूराधितन्त्रीं (Tyranny) प्रणालीं तदैव विसर्जयति मानवः, यदा क्रूराधितन्त्रस्याधिकारिणः स्थाने न्यायाधिरक्षकः कश्चित् सर्वजनहितकारकः राजा भवेत्। अयं च राजा (Philosopher king) दार्शनिक राजा भवति। तस्य न भवति किमपि दुःखं, न च भवति कस्मिन्नपि पक्षपातः। यतो ह्यसौ स्वपरिवाररहितः लोकहितसाधकः न्यायी च वर्तते। तस्मादस्य ज्ञानिनो राजशासने सुखमेव स्यादिति। तस्मादेव एतान् सर्वानपि विधीन् संतुल्य रिपब्लिकस्य संपादकस्तत्र ब्रूते—

Having sketched the four types of imperfect society and four correspon-ding types of character, Plato proceeds, to rank them in order of happiness, and in particular to contrast the perfectly just man, the philospher ruler, with the completely unjust man[1].

प्लेटोकृतव्यवस्थामूलकसमाजानुशीलनस्य विवेचनेन यादृशस्य राज्ञः स्वरूपवलोक्यते तादृशस्यैव राज्ञां स्वरूपमुपलभ्यते उपनिषत्सु। जनको हि वैदेहः तादृश एव राजा यं दार्शनिको राजा (Philosopher king) इति सत्यार्थेन वक्तुं शक्यते। स तु सम्राट् आसीत् स्वराट् च। स सर्वाः प्रजा आत्मवत् संजानाति स्म। सर्वप्रजासु आत्मानमधिष्ठितं च पश्यति स्म। स राजसूययज्ञादपि परं यज्ञं वाजपेयम् अनुतिष्ठते स्म, तस्मादेवासौ सम्राट् आसीत्। शतपथब्राह्मणे प्रोच्यते— राज्यभुवाऽऽग्रेऽथ साम्राज्यं तस्माद् वाजपेयेन इष्ट्वा न राजसूयेन यजेत प्रत्यवरोधः स यथा सम्राट् न स राजा[2]। जनकस्य सम्राड्रूपेण बोधकत्वे शंकराचार्यः बृहदारण्यके भाष्ये वक्ति— हे याज्ञवल्क्य किमर्थचारी आगतोऽसि? किं पशूनिच्छन्पुनरपि आहोस्विदण्वन्तान्सूक्ष्मातिसूक्ष्मवस्तुनिर्णेयान्तान्प्रश्नान्मत्तः श्रोतुमिच्छन्निति। उभयमेव प्रश्नान्पशूंश्च हे सम्राट्। सम्राडिति वाजपेययाजिनो लिङ्गम्। यश्च आज्ञया राज्यं प्रशास्ति, स सम्राट्

---

1. रिपब्लिक 576 बी॰ (नोट्स)।
2. शतपथ॰ 8।4।3।9।

तस्यामन्त्रणं हे सम्राडिति। समस्तस्य वा भारतस्य वर्षस्य राजा[1]। इत्थं जनकस्य दार्शनिकराजत्वेनैव संदेह इति। पुनश्च यथा स दार्शनिकान् सूक्ष्मातिसूक्ष्मान् प्रश्नान् पृच्छति तथा च तत्र एतदधिज्ञानाधिगमनाय ब्राह्मणे द्रव्यं प्रयच्छति, तदपि तस्य वैदेहस्य स्वरूपस्यावबोधकमिति तस्मात्प्राचीनकाले स्वस्थसमाजानुवर्तनशालिनी व्यवस्था आसीदेव। अयञ्च जनकः रामचन्द्रात् पूर्वमासीत्। यतो हि रामस्य श्वसुरस्तु सीरध्वजो जनक आसीत्। अयं तु मिथिलाजनकः प्रतिष्ठाता अस्य राज्यस्य[2]।

एवंभूतस्य राज्ञः स्वरूपम् उपलभ्यते यथा उपनिषत्सु तथैव एतेषां दार्शनिकराजानामिव संघगणराज्यस्य स्वरूपं बुद्धस्य संघे उपलभ्यते। तत्र बुद्धः सर्वानुपदिशति यत्र सहस्राणि भिक्षवः प्रतिवसन्ति स्म। तत्रापि तेषु कथमासीत् विनयजनितसदाचारः इति तु पिटकानां विश्लेषणेनैव ज्ञायते। भारतीयाः राजानः मानवदुःखमभिलक्ष्य रागद्वेषादीनपहर्तुं सदैव राज्यं परित्यज्य वनं गच्छन्तीति, महावीरबुद्धाभ्यामनुज्ञातपरम्परया अवलोक्यते। अस्यामेव परम्परायां लोकदुःखसंविग्नमानसो महात्मगान्धिमहोदयोऽपि अस्मिन् युगेऽभवत्। यदा स राज्यं न्यक्कृत्य साम्प्रदायिकं विद्वेषं परिशान्तयितुं गृहे गृहेऽगमत्। एवंभूतस्य परोपकारपरायणस्यापि हत्या कृता केनापि साम्प्रदायिकताभिभूतेन अज्ञानिना। तर्हि भारतस्य एवंभूतायां परम्परायां सत्यामपि रागद्वेषादयः तथा न परिभूयन्ते यथा अपेक्ष्यन्ते, तदर्थं च यत्नः कथमनुष्ठेय इति विषये विचारणीयम् आस्ते।

मन्ये भारतवासिनः अध्यात्मपरायणाः सन्तः व्यक्तिगतं मोक्षं परममिति मत्वा व्यक्तिनिष्ठाः भवन्ति। तस्मात् सत्यामपि दुःध्वंसकारिण्यां शक्तावत्र सामूहिकदुःखनाशस्य आध्यात्मिको विचारः यद्यपि कृतः तथापि न तथासौ साफल्यमवाप। तस्मादत्र निबन्धे प्लेटोकृतसामूहिकदुःखध्वन्सापनयनविधिमनुरुध्य भारतीयाञ्च परम्परागताध्यात्मनिष्ठां च संयोज्य नूतनाचारराज्यव्यवस्थया सर्वस्य मोक्षस्याधिगमकं किञ्चिदन्वेषितव्यमास्ते। तदिह प्रस्तूयते—

ग्रामनगरमहाजानपदानां विकास इव प्लेटो-जनक-बुद्धानां विकासः आध्यात्मिकतायां भौतिकजीवनव्यवस्थायाञ्च समान एवावगम्यते। एतैः खलु यथा परिचिन्तितास्तथैवसंस्कृतयः व्यकसन्। स्वार्थमनुरुध्यमानाः वयं समेषामध्यात्मलाभाय समानावसंर नैव प्रदद्मः, तस्यैवास्ति अद्य विसंगतिः लोके। यश्च शक्तिबलेन हिंसया तथानुष्ठातुं यतते, सोऽपि कदाचित् परिभवमाप्नोति। तस्मादेव समग्रामाध्यात्मिकीं नीतिं जीवने अवतारयितुं नूतना खलु राज्यनीतिः समाजनीतिश्च निर्धारणीया भविष्यति। येन तत्कालविशिष्टपरोक्षत्वादिचैतन्यं एतत्कालविशिष्टापरोक्षत्वादिचैतन्यमिवात्रापि यथा हानोपादानलक्षणाभ्यामद्वैततत्त्वस्याधिगमो जायते तथैव भौतिकसाम्यवाद-आध्यात्मिकसाम्यवादयोःमध्ये भौतिकाध्यात्मयोः अपवारणं विधाय साम्यमनुतिष्ठेत हानोपादनलक्षणया। एतदधिगतये परिधीनां देश-जाति-सम्प्रदाय-आत्मानात्मादीनां मूलोच्छेदः कर्तव्यः। स च कथं भवतीति तदुच्यते आधारग्रन्थमुखेन।

---

1. बृ०द०उ० शङ्करभाष्य, पृ० 851।
2. अष्टादशी विनोबा, पृ० 278।

अस्योपसंहारस्य आरम्भे समग्रतादृष्टेः प्रसारणाय षड्विधयः निर्धारिता मया। तत्र देशः, कालः, ज्ञानम्, सम्बन्धाश्च रूपत्रयात्मकाः (1)मानवस्य मानवेन सह (2) मानवस्य प्रकृत्या सह (3) मानवस्य अतिमानवेन सहेति[1]। तत्राधुना मानवस्य मानवेन सम्बन्धे कौटिल्यं दृश्यते, मानवस्य प्रकृत्या सह सम्बन्धेऽपि प्रभुत्वस्थापनमेवावलोक्यते, अतिमानवेन सह सम्बन्धस्थापने भूतवादिप्रवृत्तित्वादश्रद्धा अवलोक्यते। देशः कालश्च मानवानैकस्मिन् परिधौ बघ्नीतः। ज्ञानमात्रमेवास्ति यत् खलु कदाचित् मानवेषु सर्वान् एतान् सीमपरिमाणान् अतिक्रामति। तर्हि एतदतिक्रमणस्य प्राक्कालीनसंस्कृतिषु कथञ्चित् स्वरूपमवलोक्यते। तर्हि ताभिः प्रभाविता खलु मानवसंस्कृतिः इदानीमपि न स्वसंकीर्णतां जहाति। स्वार्थवशात् तथा उच्चाध्याशयाः जनास्तु तासूपपन्ना एव सन्तिं। तस्मादेव विनैव सैन्यं सौमनस्यभावेन बौद्धसंस्कृतिः भावनया यथा प्राचीने काले प्रससार, सैन्यप्रयोगेण च यूनानसंस्कृतिः आक्रम्य प्रससार, तथा इदानीमेतयोर्मध्ये काचिदैक्यस्थापनस्य तत्त्वमस्ति न वेति विचारणीयम्। तत्र मन्ये यूनानसंस्कृतेः पित्रोः सुकरातप्लेटोमहाशययोः ग्रन्थेषु साम्य-सामञ्जस्ययोः अस्ति तत्त्वं येन सह अनस्तित्वाधारितभारतीयतत्त्वाधिगमनस्य साम्यमुपलब्धुं शक्यते।

अत्र अस्तित्वानस्तित्वयोर्मिथः विवादे कदाचित् ब्राह्मणसंस्कृतिः समायोजिका भवती सती उभयोः सीमानं परिदर्शयेत्। यतो हि अस्याः संपुटितसमाजे लौल्याधारितप्रसारवादिनी प्रवृत्तिः नावलोक्यते। न च स्वास्तित्वमेव निराकुरुते। तस्मात् गीताप्रोक्तस्वकर्मणि संसक्ततायाः परिबोधः इदानीमपि विश्वदृष्टीमनुरुध्य करणीय एव।

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु[2] ॥**

अत्र यथा जात्यनुरोधिनी प्रवृत्तिर्लोके अकल्याणकारिणी अवलोक्यते, तथैव देशानुरोधिनी अपि भवति। तस्मात् देशस्य विश्वमानवस्य स्थापनानायां प्रत्यूहः यथा उत्पद्यते तथा सोऽपि दूरीकरणीयः। किञ्च कालानुरोधिनी प्रवृत्तिरपि लोकव्यवस्थाबाधिका भवति तथा किञ्चित्कार्यं सम्पाद्य यथा मानवः स्वस्थो जायते, तेन तद्गतहार्दभावानुमेलितेच्छा नैव परिसमाप्यते, तस्मात्तस्यां पूर्णेच्छोत्पादनाय व्यष्टिनिष्ठकालकृतात्मबोधं परिसमाप्य समष्टिनिष्ठसाम्येच्छां अनिर्दुष्टामुत्पादयेत्, येन शाश्वतिकः लाभः स्याल्लोकस्य। दैशिककालिकेच्छा भौतिकाध्यात्मिकेच्छा च मानवान् विभजतः। तस्मात् पूर्णात्मभावविकासाय तदधिगतये च ज्ञानेन विवेकेन वा संकीर्णामिमां उभयात्मिकां भावनां अपाकुर्यान्मानवः। इत्थमधिगते खलु विश्वात्मकपूर्णात्मकबोधे मानवः मानवान् नैव पराभवितुमाक्रमितुं वा अभिलषिष्यति, न च पशून् जीवान् वा। अतः

1. इन्टरनेशनलजर्नल आफ कम्परेटिभ सोसियोलाजी 1-2 (1984) आन डायलेक्टिल विटवीन क्राइसिस एण्ड क्राइसिस परसेप्सन.–जौहान गाल्टुंग।

2. श्रीमद्भगवद्गीता 18।45।

स्वेन निर्मितवैज्ञानिकास्त्रानुसन्धानेन भीतः मानवः अभयो भविष्यति। तस्येदमभयत्वम् अतिमानवस्य साहचर्येण प्राप्स्यत इति। तस्मात् उपनिषत्प्रोक्तमतं सुष्ठु एव प्रतीयते यथा—

अस्यैतद् अतिच्छन्दा अपहतपाप्मा अभयं रूपम्। तद्वा अस्यैतद् आप्तकामम्, आत्मकामम्, अकामं रूपं शोकान्तरम्। अत्र पिता अपिता भवति। माता अमाता। लोकाः अलोकाः। देवा अदेवाः। वेदा अवेदाः[1]।

इत्थं पूर्णता प्रतिष्ठिता भवति। एतदर्थं पूर्णताप्रयुक्ता नीतिः परिपालनीया भावनीया च। सा च धर्मसम्प्रदायरहितेति प्रतिपादिता मया धर्मनीतिमीमांसयोः व्याख्यानावसरे।

विभक्तविज्ञानानुसन्धातृणां कार्यमिदं शोभते यत् ते कदाचित् आग्रहविहीना भवन्ति, तथापि तदा ते आलोच्यन्ते यदा सर्वत्रैव भूतमूलिकां दृष्टिमेव वितन्वन्ति आध्यात्मिकं च सकलं आडम्बरमात्रमेवेति मत्त्वा। यथा भूतवादिना मार्क्समहाशयेन हेगलः प्रतिक्षिप्तः। कथितञ्च तेन 'अहं शीर्षद्वारा स्थीयमानं हीगलं पादाभ्यां प्रतिष्ठापयामि[2]'। बौद्धाश्च अभूवन् तथा, ते आत्मवादस्य सत्कायदृष्ट्याभिमतानां ब्राह्मणानां सत्कायदृष्टिहानाय अनात्मवादं प्रस्थापितवन्तः[3]। भूतवादिनश्च अध्यात्मवादिनं निन्दन्ति। इत्थं परस्परनिन्दाप्रशंसाभ्यां विकसमानं जगत् कथं प्रेम्णा विकासमेष्यतीति विचाराय बौद्ध-ब्राह्मण-यूनानसंस्कृतीनां ग्रन्थरत्नेषु एकत्र पर्यालोचनम् श्रेयस्करं निगदितम्। उपनिषत्सु वर्णिताभयपदबोधे अभयत्वेन सर्वत्र रागजनित-वृत्तयोऽपाक्रियन्ते। तस्मादेव माता अमाता, पिता अपिता, लोकाः अलोकाः जायन्ते। तर्हि एतदात्मबोधविषयकज्ञाने सत्यपि कथन्न तदनुसारं प्रवृत्तिरिति। कथञ्च पुनः बोधिसत्त्वः सर्वं लोकं दुःखरहितं कर्तुमुद्यतोऽपि इदानीं यावन्न तथानुष्ठितवान् यथा प्रतिज्ञां कृतवान्।

**भवदुःखशतानि तर्तुकामैरपि सत्त्वव्यसनानि हर्तुकामैः ।**
**बहुसौख्यशतानि भोक्तुकामैर्न विमोच्यं हि सदैव बोधिचित्तम्[4] ॥**

तर्हि मन्ये अत्र प्रतिज्ञायां सत्यामपि तत्पदाधिगमने मानसिकमेव प्रेरणमत्र अवतिष्ठते। न तु लोकसंग्रहकारकं किञ्चिदिति। तर्हि लोकसम्बलकं मानसिकं च वीर्यं कथमुन्नेतव्यमिति चिन्तनाय आधारग्रन्थास्तु अवलोकनीयाः।

रिपब्लिकमुखेन विश्लेषितनैतिकगुणानामन्वाख्याने तेषां साधर्म्यं चानुष्ठीयमाने निम्नलिखिताः खलु सार्वभौमसमुत्थापकगुणाः आगच्छन्ति, येषामनुशीलमनुभावनञ्चावश्यकमिति।

---

1. अष्टादशी –विनोवा, पृ॰ 200।
2. समाजदर्शन की भूमिका –जगदीशसहायश्रीवास्तव, पृ॰ 303।
3. **सत्कायदृष्टिप्रभवानशेषान् रागांश्च दोषांश्च धियाविपश्यन् ।**
   **आत्मानमस्या विषयं च ज्ञात्वा योगीकरोत्यात्मतिषेधमेव ॥**
4. बोधिचर्यावतार प्रथम परि॰ श्लोक ८।

ज्ञानम्, साहसम्, संयमः, न्यायश्चेति गुणाः भवन्ति प्रजातन्त्रे। ज्ञानम्, कर्म ब्रह्मचर्यं वा (साहसम्), तपो दमः संयमश्च, सत्यं-न्यायः इति उपनिषत्सु। प्रज्ञा-ज्ञानम् (धर्मः), वीर्यम् (धृतिः) साहसम्, तपः-त्यागः, सत्यम्-न्यायः इति सुत्तनिपाते समानगुणत्वेन भणितम्। यद्यपि अत्र तिसृषु धारासु शब्दानामेतेषां पृथक् पृथक् सन्दर्भबोधः तथापि संकलितदृष्टिमधिगम्य सभ्यमानवस्य विकासाय विवेचनमेकत्रावश्यकमिति प्रतिभाति।

अत्रैतेषु गुणेषु प्रथमं तावज्ज्ञानस्य समञ्जनमावश्यकमिति कृत्वा ज्ञानं किं प्रकारकमिति विचारयामः। उक्तं हि खल्वस्माभिस्तत्र तत्र ग्रन्थविवेचनावसरे, यदेते ज्ञानिनः स्वस्वधारासु परलोकविदः आत्मनिष्ठावन्तः समभवन्। तात्त्विकरूपेण एते सर्वान् खलु जीवजगतोः पदार्थान् समानमवगच्छति। तर्हि इत्थमवगमने सत्यपि वैयक्तिके भावे किं लोकभावः तथा समुदितो भवति? मन्ये, एतेषां वैशिष्ट्यख्यापनार्थं कदाचित् अंगुलिमालसदृशस्य हिंसकस्य मानवस्य सत्त्वगुणानुभावनमुपलभ्यते तथापि एतेन कर्मणा न हि सर्वः खलु समाजः विपरिवर्तते। तर्हि अत्र ज्ञानिभिः कथं लोकहिताय अनुप्रयोगः कर्तव्य इति विवेचनीयमास्ते।

उपनिषत्सु आत्मबोधप्रयोगस्य सर्वेषु प्राणिषु एकात्म्यभावनमावश्यकं प्रतिभाति। सुत्तनिपाते आत्मातिमानजनितरागदृष्ट्यनुभावेन जगतां संचाल्यमानानां कुटिलभावानामपाकरणाय आत्मदृष्टेः विलोपनम्, लोकविधानस्य व्यवहारस्य च सार्थक्येनैक्यबोधनाय समाजेषु राजसु च वर्गविभेद-नवीनभावनोद्रेकोत्पादनेन, रिपब्लिके कल्पितसाम्यवादस्य स्थापनमवबोध्यते। तत्र एते त्रयोऽपि आध्यात्मिकाः कल्पिता एव मन्यन्ते, तथापि एतेषां विचारैः तदनुगतानां जानानाम् उपरि कथंकारः प्रभावः इति सर्वे जानन्त्येव। पश्चिमदेशेषु प्लेटोमहाशयानां यथा भवति प्रभावस्तथा तु बुद्धस्य एशियाखण्डे अवलोक्यते। वैदिकानां विचाराणां कदाचित् एशियायां कदाचिद् वैचारिकेण रूपेण प्रतीच्यां च भवति प्रभावः। तथापि ते न कदापि तद्देशस्थानां जनानां व्यवस्थां परावर्तयन्ति, सङ्करताया मानवानिष्टविधायकत्वादिति। तस्मादेव प्रोक्तं स्वधर्मानुपालनाय—

**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः[1] ॥**

अर्थात् अधर्मजनककर्मणा समग्राया माववजातेः पतनं भवति। अत्र यद्यपि परम्परागतजातिधर्मनियमपालनस्य वैशिष्ट्यमुपपाद्यते तथापि एतेन गुणाधारितकर्मव्यवस्था न दूष्यते। अस्यायं भावः समापतति यत् स्वकर्मणि जनाः संशक्ताः शुभं भावयन्ति कर्तव्याधिकृतव्यवस्थासमलंकृतत्वादिति। अत्र कर्तव्यभावहीनानां जानानां विवेचनेन अधर्म-वृत्तेरपाकरणमेव तात्पर्यं मन्यते। तस्मात् प्लेटोऽपि अत्र ब्रूते—

Merely to pickup the tools of any other does not turn a man into Craftsman or games player. The tool is useful only to the man who knows how to use it, and has had enough practice in the use of it[2].

1. श्रीमद्भगवद्गीता 3।35।
2. रिपब्लिक 374।

अर्थात् स्वधर्मानुकूलमेव शिल्पं ग्रहणीयं न तु तत् प्रतिदिनं परित्यजनीयमिति। एतेन गुणाधारितकर्मणा अथ च स्वशिल्पगुणविशेषस्य पालनादन्यत्र आगमनप्रयोजकनियमेनापि इदं कल्प्यते यद् अन्येषामुपरि बलान्नैव स्वप्रभावः प्रस्थापयितव्य इति। बुद्धेन तु नैकवारं व्यधायीदम्।

किञ्चाध्यात्मिके राज्ये प्रजानृपयोः न भवति महदन्तरभ्। तत्र तु सर्वं खलु शरीरात्मकमेव भवतीति। तस्मादेव वेदेऽपि एकस्य पुरुषस्य चत्वारः शारीरिकभागा इव राज्यस्य भागाःभवन्तीति उक्तम्—

**ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यःकृतः ।**
**ऊरु तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत[1] ॥**

तथैव राज्याधारितजीवनस्य विभागं प्रकुर्वता प्लेटोमहाशयेनापि भणितम्-राज्ये खलु मानवस्वभावमधिकृत्य तेषां प्रवृत्तिमधिकृत्य जनानां विभागाः कृताः। ततः क्षुधात्मकप्रवृत्तिमतां जनानामेकः वर्गः (appetitive) पृथग्जनो (artition) भवति, संवेगात्मकप्रवृत्तिशालिनामन्यः (spirited or passionate) आरक्षिणः, सैनिकाः (soldiers)। तृतीयश्च खलु ते भवन्ति ये बुद्धिमन्तः उच्यन्ते (rational), ते राज्ये संरक्षकाः कथ्यन्ते।

इत्थमेतेषामपि राज्यशरीरचनायां मानवस्वभावस्य मनोवैज्ञानिक्यः बुद्धिः-संकल्प-वेदनादिप्रवृत्तयः आधारभूताः भवन्ति[2]—

सत्यप्येतेषु स्वाभाविकप्रवृत्तिगतसाम्येषु उभयोः पार्थक्यमपि संजायते परम्परावशात्। तद्यथा पश्चिमीयविज्ञानवादिनो राज्याधिकारिणः राज्यस्य प्रभुत्वं राजानं प्रति दत्तवन्तः। तं सर्वोत्तमं स्वीकुर्वन्ति स्म, आमनन्ति च यदसौ राजा कदाचिदपि अकृत्यं नैव करिष्यतीति। तस्मादेव राज्याभिषेकवेलायां राज्ञः स्थानमुच्चतरम्, कथ्यते च-राजा कदाचिदपि अतथ्यं नैव करोति (king can do no wrong)। भारते देवगुणसम्पन्नो राजा अदण्ड्यो भवन्नपि धर्मदण्डेन दण्डित एव जायते। तस्मादेव शास्त्राणि— 'अदण्ड्योऽस्मि, अदण्ड्योऽस्मि' इति नैकशः ब्रुवतापि पुरोहितेन तत्रैव नहि धर्मदण्डेन दण्ड्योसीति' वदति। तर्हि धर्मः सर्वोपरि राजते भारते। स च नैव मिथ्याभावयुक्तः, अपि तु गुणाधारितः। तस्मादेव सैन्यमाश्रित्य अस्माकं राजा तथा स्वाधिपत्यस्थापनार्थं नैव प्राचलत् यथा ग्रीकसंस्कृतेर्वा मुहम्मदसंस्कृतेः प्रभुत्वस्थापनाय तत्रस्था राजानः प्राचलन्[3]। अस्माकं तु सामञ्जस्यबहुला संस्कृतिः, यदि कुत्रचित् स्वाभिप्राय-प्रदानाय गच्छति तदा धर्मपुरुषैः सा नीयते स्म[4]। तस्मादुभयोः परम्परयोर्मध्ये व्यवहार-सिद्धान्तयोर्भवति भेदः। एतस्य सन्दर्भे बुद्धस्य व्याख्यानानि अथ च प्रचारसाधनानि अतीव सौम्यानि भवन्ति। स तु भिक्षुसंघं निर्माय तत्र समेषामेकरसत्वं भावयति।

---

1. पुरुषसूक्तम्।
2. समाजदर्शन की भूमिका, पृ॰ 22, जे॰एन॰ श्रीवास्तव।
3. समाजदर्शन की भूमिका, पृ॰ 214।
4. वही. पृ॰ 214।

प्लेटोमहाशयस्तु आध्यात्मिकस्तथैव आसीद्यथा भारतीयाः अध्यात्मविदः, बौद्धाः, वैदिकाः वा भवन्ति। किन्तु प्रतीच्येषु गुरुशिष्यपरम्परा तथा न प्रचलति यथा भारते अवलोक्यते। तस्मादेव तदनन्तरं चतुर्थशताब्द्यामुत्पन्नः ख्रिष्टमहाशयः आध्यात्मिकतायाः तथा स्वरूपं न स्वीकृतवान् यथा प्लेटोकाले आसीत्। ते तु कर्मफलं आमनन्ति स्म, किन्तु तत्फलं सञ्चितमिव तावत्फलभागितां न प्राप्नोति यावत् ईश्वरस्य न्यायाधिकरणकालः (Judgement day) न समागच्छति। तदानीं यावत् सुप्त आत्मा अवतिष्ठते। अत्र तार्किकरीत्या समाधानं न दीयते, प्रत्युत आस्थारूपेण तत्समाधीयते। तस्मादेव विवेचनपराणामाधुनिकवैज्ञानिकानां कृते कर्मवादस्यायं सिद्धान्तः न तार्किकतामारोहते[1], अयं तु आस्थापरतन्त्रतया खण्ड्यते। अथ चास्य विरोधोऽपि क्रियते। पुनश्च रोमनसाम्राज्ये पापकर्मणां फलादाने क्रूरतन्त्रं (Tyranny) इव चर्चाधिशासकाः तार्किकैः वैज्ञानिकैश्च न कदाप्यादरभाजः क्रियन्ते स्म। तस्मादेव चर्चस्य प्रभुत्वखण्डनाय प्रवृत्तानां वैज्ञानिकानां दार्शनिकानां बलादपवारणं दृश्यते। पुनश्च धर्माधिपत्यस्य विखण्डनानन्तरं वैज्ञानिकी बुद्धिः अधिष्ठापिता, तस्मात् सर्वे खलु अबौद्धिकाः आध्यात्मिकाः विचाराः खण्डिता जाताः। इत्थं परम्परागताध्यात्मं तत्र, तथा न अवर्तत यथा भारते अवलोक्यते। एतेन ख्रिष्टीयानां प्रेमकरुणाप्रभृतीनां संदेशास्तु सर्वत्र बौद्धिकतां न पर्यपालयन्। तस्मात् वैज्ञानिकविवेचनेन ते खण्डिता अभूवन्।

किञ्च प्लेटोकृताध्यात्मस्य अन्तःपातिख्रिष्टीयाध्यात्म्येन सार्धं सहयोगमातन्वानस्य आध्यात्मिकसमाजस्थापने अपि योगः न समागतः। तस्मात् ते दार्शनिका ये खलु प्रतीच्यां प्रत्ययवादमध्यात्मवादं वा प्रस्थापितवन्तस्तेऽपि ख्रिस्तीयसन्दर्भात् न पूर्णरूपेण उन्मुक्ता अभूवन्निति। अतः वैज्ञानिकेन भौतिकवादविश्लेषणेन पाखण्डपरस्याध्यात्मवादस्य खण्डनं क्रियते। तच्च मार्क्समहाशयेन कृत्वा साम्यवादस्य स्थापनायां सुमहत् कार्यं कृतम्। किञ्चाधुना विश्वसम्पर्कालोडनवशात् विविधसंस्कृतीनां स्वीयाध्यात्मपरम्पराजनितरागादीनां परिशमनाद्वा मार्क्सप्रयुक्तभौतिकवाद अपि तथैव ख्रीष्टीयान्तपरम्परां प्राप्नोति। तस्मादेव केनाप्युक्तम्—

The class concept, the belief in class determination, blind faith in party, lack of psychology and Ethics, have made marxian praxis to appear, and often really to be a most obnoxious thing. Untill marxists work out something like Buddhism they will keep circling around tied to the chain of hopes and deceptions[2].

इत्थं वर्गबोधः, तस्य च एकस्मिन् समुदाये संप्रत्ययः, किञ्च मानसिकाचारविचाराणां न्यूनत्वमिदानीं मार्क्सवादिप्रत्ययानामुपरि तथैव संदेहमापातयन्ति यथा अन्धश्रद्धाप्रयुक्तानां

---

1. A) To the princes power is given on earth, but to the priest, power is given also in leaven, to the former, only over our bodies, to latter also over soul. A history of world civilization, p. 275 by J.E. Swain

   B) Pope is only person whose feet are kissed by all prince-ibid p. 32.

2. बौद्धदर्शन और मार्क्सवाद, पृ० 112।

